# अथ गद्यभारतम् ।

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयोर्भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

भगवद्गीता ॥

## आदिपर्वतो भीष्मपर्वपर्यन्तम्

## ( पूर्वार्द्धम् )



प्रणेता—
शिवदत्त काव्यतीर्थः

* ओम्नमःशिवाय *

# अथ गद्यभारतम् ।

आदिपर्वतो भीष्मपर्वपर्यन्तम्

(पूर्वार्द्धम्)

प्रणेता—
श्रीमद्दधीचवंशावतंस त्रिपाठ्युपाख्यपंडितबदरीलालात्मज—
**शिवदत्त काव्यतीर्थः**

बाबू चांदमल चंडक प्रबन्धकर्त्ता के प्रबन्ध से
वैदिक यन्त्रालय अजमेर, में मुद्रित।

रथयात्रा
सं० १९९२

मूल्यं सार्धरूप्यकम्
१॥)

।। ओन्नमः शिवाय ।।

# प्रार्थना

प्राणाः स्वरा व्यंजनानि यस्यांगानिस्सृतानि वै ।
स एव वेदपुरुषो माम्पुनातु निरन्तरम् ।। १ ।।

धर्मग्लानिं विलोक्याऽत्र स्वयं योऽवतरत्प्रभुः ।
तं धर्मसेतुं श्रीकृष्णं राधाकान्तं नमाम्यहम् ।। २ ।।

गोकुले याऽभवद्राधा सैव द्वारावतीं गता ।
कालिन्दीतिप्रसिद्धाऽऽसीत् वंदे तां सर्वमंगलाम् ।। ३ ।।

भारताख्यं कल्पतरुं यः समारोप्य भारते ।
भारतीं भूषितां चक्रे स व्यासो वरदोऽस्तु मे ।। ४ ।।

हेरम्ब ! लेखको भूत्वा व्यासकार्यं त्वपूरयः ।
किन्तु स्वल्पेऽपि मे कार्ये विलंबं कुरुषे कथम् ।। ५ ।।

यथा प्रणत्या वाग्देवि ! करुणां कात्रिषु व्यधाः ।
तथाऽधुनाऽपि ध्याता त्वं पूरयाशु मनोरथान् ।। ६ ।।

श्रीदधीच ! सुरेभ्यस्त्वं दत्वाऽस्थीनि दिवं गतः ।
तत्पुण्येनैव त्रायस्व गोत्रजं शरणागतम् ।। ७ ।।

गुरुकृपा तु सर्वत्र विश्रुता कार्यसाधिका ।
सैव मेऽभिमुखी भूत्वा प्रयच्छतु सुमंगलम् ।। ८ ।।

भोमातापितरौ ! यैषा धर्मसेवा मया कृता ।
कृष्णस्तयातिसंतुष्टो युवयोः कुरुताच्छिवम् ।। ९ ।।

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्री र्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ।। १० ।।



जननी जानकी यस्य बद्रीलालसुधीः पिता ।
तत्पुत्रशिवदत्तेन रचितं गद्यभारतम् ॥
भारतं कृष्णरचितं यत्र कृष्णानुकीर्त्तनम् ।
कृष्णार्पितस्य कृष्णत्वं कृष्ण एवाऽपकर्षतु ॥

वै० यं०, अजमेर.

।। ओन्नमःशिवाय ।।

# ॥ निवेदनम् ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

धर्मे चार्थे च कामे च मोक्षे च पुरुषर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥

आसीद् विरंचिसुतो वसिष्ठः । वसिष्ठाच्छक्तिः । शक्तेः पराशरः । पराशराद् व्यासः । व्यासाच्च शुकदेवोऽभवत् । द्वापरान्ते तथा कलेरारंभे च यदा कुरुक्षेत्रे कौरवपाण्डवानां महायुद्धमभूत्तदा वार्द्धक्यमापन्नः श्रीकविचूडामणिर्वेदव्यासो भगवन्तं श्रीमन्नारायणं प्रणम्य मेधाप्रतिभालाभार्थं श्रीसरस्वतीं विघ्नव्यूहविनाशाय च श्रीमद्वरदराजं गणपतिं सस्मार । अथ संतुष्टा वाग्देवी ऋषिवराय प्रत्यक्षदर्शनं दत्त्वा पूजामवाप्य चाऽस्मिन्कार्ये त्वं यशस्वी भवेति वरमपि प्रादात् । ततो हेरम्बोऽपि समागच्छत् । महर्षिस्तं प्रणम्य प्रभो ! ऽत्र विद्याविनोदे मम लेखकपदमंगीकृत्य कृतार्थतां प्रयच्छेति संप्रार्थयामास । निशम्यैतान्निवेदनं गणपतिः प्रोवाच । तथास्तु । परन्तु मम लेखनी विश्रामं नैतीति गणपतिवाक्यं श्रुत्वा श्रीसरस्वतीदेवीप्रेरितो व्यासोऽप्यवदत् । देव ! बाढम् । शिरसा वहामि भवदाज्ञाम् । किन्तु भवानपि पूर्वं श्लोकार्थं बुध्वाऽनन्तरं च लिखत्विति व्यजिज्ञपत् । एतदाकर्ण्य श्रीगजानन एवमस्त्विति प्रतिज्ञाय व्याससन्निधावतिष्ठत् । अथ वेदव्यासः कार्यं प्रारभत । तत्र व्यासोक्तं श्लोकं यावदेकदन्तो विचार्य लिखति तावद् द्वैपायनः कूटपद्यं रचयित्वा तमश्रावयत् । अत्र जय श्लोकः—

अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा ॥

एवं श्रीवाणीविनायकौ श्रीवेदव्यासमनोरथं पूरयामासतुः। ततो व्यासशिष्यो वैशंपायनो जनमेजयेन पृष्टो व्यासाशयमवलम्ब्य सविस्तृतं भारतं राजानं श्रावयामास। अथ वैशंपायनशिष्यो लोमहर्षणि नैमिषारण्ये शौनकादीन् मुनिजनान् महाभारतमश्रावयत्। यत्र मिश्रके तीर्थे महर्षिदधीचाश्रमोऽस्ति।

अत्र केचित्कथयंति यद्वेदविरुद्धमतानां यत्र कुत्राऽपि छाया महाभारते मिलत्यतो नाऽयं ग्रंथोऽतिप्राचीनः। तत्र समाधीयते। आस्तिकाः किम् वा नास्तिका अनादिकालतश्चलिता आयान्ति। पूर्वजपथमवलम्ब्याऽवरजोऽपि तथैव विचारं रचति। अतएव वृथा शंकाऽत्र नैव कार्या। एवमेव हिंसकाअहिंसकाश्चाऽपि पूर्वयुगेष्वपि संबभूवुः। यदा वेदविरोधिनो जना महापुरुषाणां चरित्रेषु नामादिविपर्ययंकृत्वा कार्यसाधनार्थमुद्यता बभूवु स्तदा वेदानुयायिनोऽपि भिन्नभिन्नप्रदेशेषु वसन्तः समयोचित प्रबंधान् स्वकीयग्रंथेषु रचित्वा स्वपक्षपुष्टिं चक्रुः। एतदेव ग्रन्थविस्तरकारणम्।

काश्मीरदेशजः प्रकाशेन्द्रसूनुर्महाकविक्षेमेन्द्रोऽपि वैदिक-धर्मसेवार्थमेव भारतमंजरीं विरच्य धर्मसेवामकरोत्। अनेन महाभागेन बहवो ग्रंथा रचिताः। अहमल्पज्ञोऽपि भारतमंजरीं पुरस्कृत्य संक्षिप्तविधिना धर्मसेवार्थंप्रयासमिमं कृतवान्। प्रयत्नोऽयं बालबोधायास्तीति विचिन्त्य पण्डिता गुणमेव गृह्णंत्विति शम्।

गच्छतःस्खलनं क्वाऽपि भवत्येव स्वभावतः।
हसंति दुर्जनास्तत्र समादधति सज्जनाः॥

निवेदकः—

**शिवदत्त त्रिपाठी।**



॥ शिवमस्तु ॥

ओ३म्नमःशिवाय ।

# भूमिका ।

ध्यात्वाऽनंदप्रदातारं श्रीगणेशं पुनः पुनः ।
प्रणम्य च महाप्राज्ञं श्रीशालग्रामशास्त्रिणम् ॥
श्रीक्षेमेन्द्रकवीन्द्रस्य याऽस्ति भारतमंजरी ।
तां पुरस्कृत्य रचितं मयैतद् गद्यभारतम् ॥

भो भो महानुभावा विद्वद्वराः ! अस्ति भरतखंडान्तर्गतो विविधवीरगणविभूषितो राजस्थानप्रदेशः । तत्र श्रीमद् विरंचिप्रतिष्ठापितं तीर्थगुरुसंज्ञकं विराजते श्री पुष्कर तीर्थम् । ततो योजनमात्रेऽग्निकोणेऽतिरम्यं सुव्यवस्थितं च वर्ततेऽजयमेरु इतिविश्रुतं नगरम् । तस्मादुत्तरस्यां दिशि नाऽतिदूरो आनासागराख्यो महासरोवरो विभाति । तस्य पूर्वतटे वदान्यरत्नस्य श्री महर्षिदधीचस्य वंशजातानां वर्तते शिवकुण्डाख्यमेकं भव्यं देवमंदिरम् । यत्र गुहगणेशभैरवमारुतिकार्तिकेयादिदेवा गौरीशंकरसहिताश्च शोभंते । तस्याऽतिपवित्रतमस्थानस्य द्वारदेशे श्री सामवेदान्तर्गतकौथुमीशाखावलंबिनः कौत्सगोत्रजस्य त्रिप्रवरान्वितस्य ऋषिकल्पस्य च श्री बदरीलाल त्रिपाठिनः स्मारको बदरिकाश्रम इति विख्यातो भूभागो विद्यते । तत्र स्थितोऽहमेकदा कलिकाता नगरस्थ पण्डितवरश्रीशरच्चन्द्रसोमद्वाराऽनुवादितं भाषा महाभारतं विलोक्य संक्षिप्तगद्यभारतं रचयित्वा संस्कृतसाहित्य सेवां करोमीति मम विचारोऽभवत् । यद्यपि शनैःशनैः प्रयतमानोऽहं गद्यभारतकलेवरं निर्मातुं समर्थोऽभवम् । परन्तु तत्रत्यसंस्कृतेन मम चेतसः परितोषो न जातः । ततोऽहं श्रीमद्वेदव्यासप्रणीतं महाभारतमनुसर्तुमारब्धवान् । अथ गच्छता कालेनैकदा जयपुरीय कविरत्नस्य श्रीहरिशास्त्रिणः समागमोऽभवत् । स महाशयो मां भारतमंजरीं विलोकयितुं समादिशत् । ततोऽहं मंदगत्या तामन्वसरम् । श्रीपरमेश्वरकृपयाऽद्य यथाकथंचित् समाप्तिमगादेतत् कार्यम् । अत्र केचित्कथयंति । यद् रामायणमहाभारतादिपुराणग्रंथेषु सृष्टिक्रमाविरुद्धा दृश्यंते बह्व्यः कल्पना अतस्ते त्याज्याः । अत्र समाधीयते । विमानादीनामपिकथा पुरा कल्पनास्थानमासीत् परं प्रत्यक्षदर्शनात्सर्वेषां भ्रमनिवृत्तिः स्वत एव जाता । अतएवोक्तमचिन्त्यो हि देवतामणिमंत्रौषधीनां प्रभावः । अथवाऽक्षरशः स्वीक्रियते नव्यमतं तर्ह्यन्ये प्रत्यवदंति वेदेष्वपि चत्वारि शृंगास्त्रयो अस्य पादा इत्यादयः प्रसंगा अवलोक्यंते । परं नाद्यावधि केनाऽपि चतुःशृंगवान् त्रिपदसंयुतश्च प्राणी दृष्टः श्रुतो वा ? एवमुपनिषदादिसद् ग्रंथेष्वपि यमादीनां बहवः प्रसंगा विद्यंते । तेष्वपि यदि कुतर्काः क्रियन्ते तदा तत्राऽपि काठिन्यमेव पुरः समायाति । विस्तृतिभयात्संकेतमात्रमेवदत्तम् । महाभारत प्रोक्त गृध्रगोमायुप्रभृतीनां संवादानवलोक्यैव तु पंचतंत्रादिग्रंथकर्तारः पशु

पद्यादिजीवानां चरित्रलेखने समर्था अभूवन् । एवं सर्वास्वेव विदेशीयभाषास्वपि कल्पनातिशयो वर्तते । आधुनिका अपि विद्वांसो भारतमातृचीरहरणादि नवीनकल्पनाभिरेव नानार्थान् साधयंति । अत्र ये ज्ञात्वाऽप्यालंकारिकप्रसंगान् साहित्यं पीडयंति तेऽवश्यमविदग्धाः । एवमेव ग्रंथकर्तुरभिप्रायं नाधिगम्य यल्लिखितं तत् तथैव भवतीति कथयंति तेऽपिस्वकीयामत्र्ये दग्धतां प्रदर्शयंतीतिकेषांचिन्मतम् । महाभारते भीष्मप्रतिज्ञा श्रीकृष्णचन्द्रस्य लोकातिशायिनीशक्तिः बलभद्रस्य माध्यस्थभावः, पाण्डोर्भ्रातृभक्तिः, कुंत्या गुरुजनसेवा माद्र्याः पतिभक्तिः द्रोणाचार्यस्य मनस्विता, कृपाचार्योदारता, सत्यवत्याः प्रबन्धशक्तिः, धृतराष्ट्रस्य सहनशीलता, गान्धार्याः सतीत्वम्, विदुरस्य दूरदर्शिता, युधिष्ठिरस्य सत्यानुष्ठानं, भीमस्य साहसं पार्थस्य युद्धनैपुण्यं नकुलसहदेवयोर्बन्धुभावः, द्रोपदीदादयम्, अभिमन्योः पराक्रमः अश्वत्थाम्नः कृतज्ञत्वं कर्णस्य प्रीतिपालनं दुर्योधनस्य स्वाभिमानरक्षा दुःशासनस्य भ्रातृपक्षपातः युयुत्सोः स्पष्टवक्तृत्वं च सर्वं विस्मयावहम् । विलोक्यैतन् निवेद्यते यत् पूर्वजानामाधुनिकानां च चरित्रे वर्तत आकाशपातालयोर्महदन्तरम् । किमतःपरम् कथनीयम् । महाभारतग्रंथे पितृतर्पणश्राद्धादिप्रसंगा बहुषु स्थलेषु समुपलभ्यंते । श्रीशंकरादिदेवानुष्ठानरीतिरपि सर्वत्र प्रचलितासीत् परं देवभक्तेषु भेदबुद्धिर्नाऽभूत् । एकलव्यचरित्रं स्पष्टमेव मूर्तिपूजनं स्मारयति । गंगादितीर्थसेवनं धर्मांगमभवत् । धृतराष्ट्रादीनामुत्पत्तिर्नियोगप्रथां सूचयति । सत्यवसरे ब्राह्मणाः क्षत्रियैः सह क्षत्रियाश्च ब्राह्मणैःसाकं कन्या व्यवहारंचक्रुः । द्विजातिषु मांसभक्षकाः शाकभोजिनश्चोभयपक्षीया एव आसन् । मद्यपाननिन्दामिलति । शूद्रो वेदशिक्षकोनाऽभवत् । द्वीपांतरयात्रा सर्वत्र प्रचलितासीत् । मुनीनामन्तः पुरेऽपि प्रवेशः पटव्यवधानं विनैवाऽभवत् । गोब्राह्मणभक्तिः पदे पदे मिलति । भोजनविषयेऽपि शुद्धिविचार आसीत्परं मिथ्याऽऽडम्बरो नाऽभूत् । किं बहुना । व्यवहारेषु सर्वेषु सर्वत्र सुलभा नियमा आसन् । अतः सर्वे लोका मानमर्यादापालकाः सुखिनश्चाऽभूवन् ।

श्रीमद्वेदव्यासप्रणीतं महाभारतं तु वर्तते महोद्यानोपमम् । तत्र महाकविक्षेमेन्द्रविरचिता भारतमंजरी कल्पलतोपमां दधाति । मादृशोऽकिंचनोऽज्ञश्च सामर्थ्यभावात्ततःस्वल्पपुष्पाणि संगृह्य श्रीमते भगवते वासुदेवाय गद्यभारतस्याऽस्य पुष्पांजलिं समर्पयति । मन्ये स यथा सुदाम्नस्तण्डुलकणान् विदुरस्य च शाकपत्रमंगीचकार तथा ममाप्येनं श्रद्धांजलिं स्वीकृत्य संतुष्टो भवतु । एवं पण्डिता अपि धर्मग्रन्थसेवां ज्ञात्वाऽस्य त्रुटीः समादधत्विति शम् ।

भारतंकृष्णरचितं यत्रश्रीकृष्णकीर्तनम् ।
कृष्णार्पणस्य कृष्णत्वं कृष्ण एवाऽपकर्षतु ॥

निवेदकः शिवदत्त त्रिपाठी
श्रीबदरिकाश्रमस्थः ( अजयमेरु )

ज्येष्ठी पूर्णिमा
संवत् १९९२

कृष्ण ! कृष्णेति कृष्णेति यो मां स्मरति नित्यशः ।
जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥



नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायंति तत्र तिष्ठामि नारद ॥

वै० यं०, अजमेर.

॥ ओं नमः शिवाय ॥

# अथ गद्यभारतं प्रारभ्यते

## आदिपर्व ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥
विनायकव्यासदासमातृपितृगुरुद्विजान् ।
प्रणम्य बालबोधार्थं रच्यते गद्यभारतम् ॥




स्तिश्रीभारतवर्षे महर्षिदधीचिपिप्पलादादिभिरुपसेवितं नैमिषारण्यम् । तत्रैकदा महामुनिशौनको द्वादशाब्दिकंसत्रं समारभते स्म । अथकदाचित्पौराणिकशिरोमणिस्सूतस्तत्रतीर्थार्थीसमागच्छत् । विलोक्यैतत्साशिष्योमुनिरुत्थायतंविधिवत्पूजयामास । ततो मुनिमण्डले समासीनं वृद्धश्रवसं रोमहर्षणिं शौनकोऽपृच्छत् । महाभाग ! कृपया सर्वलोकहितार्थकमप्यद्भुतमितिहासं श्रावय । वर्ततेऽत्र नो महत्कौतूहलम् । तच्छ्रुत्वा सूतो भगवन्तं नारायणं प्रणम्य प्रोवाच । महानुभावाः ! श्रीमद्वेदव्यासप्रणीतं महाभारतं वैशंपायनेन महामुनिना जनमेजयभूपतेः सर्पसत्रे यत् कथितं तदहं सांप्रतम् श्रावयामि । सावधानतया यूयमाकर्णयत ।

पुरा पारीक्षितजनमेजयभ्रातरो भीमसेनादयः सारमेयमेकमताडयन् । सोऽथ तद्दुःखदुःखितो मातरं शरणमयासीत् । ततः सा कोपाविष्टा राजन् ! त्वमप्येवमतर्कितोऽचिरान्महद्भयमवाप्स्यसीत्यशपत् । निशम्यैतद् व्याकुलहृदयो राजा भ्रातृभिः सह वनंगत्वा तत्र महातपस्विनः श्रुतश्रवसःपुत्रं सोमश्रवसं पुरोहितमवृणोत् । ततोविहितप्रतीकारोभूपोऽनुजैः सहराजधानीं निवृत्य सुखेन कालं निनाय ।

अत्रान्तरे लोहदन्तो धौम्योनाम महामुनिः पूर्वं छात्रान् परीक्ष्य ततो ज्ञाननिर्धूतसंशयान् विदधे । अथैकदागुरुः पांचाल्यमारुणिं शिष्याणां पुरः शशास । वत्स ! क्षेत्रे जलं बधानेति समाकर्ण्याऽनुशासनं बाढमित्युक्त्वा स तत्र गतो जलप्रवाहविवरे दत्त्वाऽऽत्मानं गुरुक्षेत्रं ररक्ष । ततस्तुष्टोगुरुस्तस्मै सर्वविद्याविशारदोभवेति वरं प्रादात् । अथ गुरुणाऽऽहूतः सः क्षेत्रमुद्दाल्यसमुत्थितस्तेनाऽसौमुनिरुद्दालक इति प्रसिद्धोऽभवत् ।

एवं कृतकृत्येऽस्मिन् गतेऽपर उपमन्युनामकः शिष्यः समायातः। गुरुरेकदा तं भैक्ष्यवृत्तिं गोरक्षणे नियोजितवान्। अथ गच्छताकालेन तं पीवरं दृष्ट्वोपाध्यायोऽपृच्छत्। वत्स! केन कल्पयसि वृत्तिम्? ततो रचितांजलिरुपमन्युःप्राह। भगवन्! भैक्ष्येण। तच्छ्रुत्वाऽऽचार्योऽब्रवीत्। यतस्त्वं ममाऽनिवेद्यनार्हसि भैक्ष्यं भोक्तुम्। अपरंच द्विर्भैक्ष्यं भवति परेषां वृत्युपरोधाय तदपि तेन क्षमम्। अथ शिष्यः पप्रच्छ। गुरुदेव! दुग्धं तु शक्यते पातुम्? गुरुराह। वटो! कुतस्ते गव्यक्षीरे स्वत्वम्? ततः शिष्योऽवदत्। प्रभो! फेनार्थं तु देह्यनुज्ञाम्? अथ गुरुर्जगाद। कृपण! कथमहमादिशानि। तत्रत्वधिकारोऽस्तिवत्सानाम्। एवं पुनःपुनर्धौम्येन निषिद्धोऽसौ परित्यज्य भोजनमर्कपत्राणि चखाद। तेनाऽन्ध्यमवाप्य गुरुगृहं निवर्तमानोऽन्धकूपेन्यपतत्। अथ सायाह्ने दूरादाहूतो गुरुणाऽवदत्। प्रभोऽर्कपत्राशनाद्दृष्टिहीनोऽहं पतितोऽस्मिन्गभीरकूपे। तच्छ्रुत्वा कृपाकुलो धौम्यः प्राह। वत्स! स्तुत्वाऽश्विनौ लभस्व दिव्यदृष्टिम्। ततोऽसौगुरूपदिष्टेनाश्विनसूक्तेन तौ तुष्टाव। अथ सद्यः प्रसन्नावश्विनौ यदा तस्मै सुधोपममपूपं दातुमलगतान्तदाऽसौ नाऽहं गुरवेऽनिवेद्यग्रहीष्यामीत्यवदत्। ततोऽतिप्रसन्नौ स्ववैद्यौ गुरुद्वारैव तद्धस्ते प्रेषयामासतुरमृतमयमपूपम्। सोऽथ तद्गुरवे समर्प्य तदादिष्टं बुभुजे। ततो देवप्रसादाद् दिव्यदृष्टिर्गुरुकृपया च सषडंगवेदविद्भूत्वा लोकेऽक्षयां कीर्तिमाससादोपमन्युः।

अथ कदाचिद् वेदनामा तृतीयः शिष्यः समागमद् धौम्यगुरुकुले। सोऽथ संतोषादेव गुरुणाज्ञानसर्वस्वभाजनीकृतः। अथ गच्छताकालेन तदाश्रमे तपोराशिरुत्तंको नाम सच्छिष्यः समाययौ। गुरुस्तं जितेन्द्रियं ज्ञात्वा प्रोवाच। वत्स! त्वं मम विश्वासपात्रोऽसि तस्मात् तिष्ठात्रैव क्रियापरिचर्यायै। अहं क्वापि याजयितुं गच्छामीति तं समादिश्य देशान्तरमगात्। अथैकदा ऋतुमत्योगुरुस्त्रियस्तमुपसृत्य प्रोचु भंद्र! दिनेष्वेषु त्वमेवासि गृहे गुरुप्रतिनिधिः। अतो गुरुवद्व्यवहारं कुरु। निशम्यैतत् पिधाय कर्णौ शांतं पापम्-शान्तंपापमित्युक्त्वा काष्ठवदचलस्तत्राऽतिष्ठत्। अथ पुनरागतो गुरुर्विज्ञाय तद्वृत्तान्तम् तं निजज्ञानभाजनं चक्रे। ततः प्राप्तविद्यो गुरुं प्रणिपत्य व्यजिज्ञपत्। प्रभो! गुरुदक्षिणार्थे समादिशेतिब्रुवाणमाचार्यः प्रोवाच। वत्स! कृतकृत्योऽस्म्यहम्। चेदाग्रहस्तर्हि पूरय स्वगुरुपत्नीमनोरथम्। निशम्यैतदुत्तंको गत्वाऽऽचार्याणीं च सादरं प्रोवाच। देवि! किं वांछसि? कृपया समादिशेतिवचनमाकर्ण्य साऽऽह। वत्स! श्रीपौष्य सौदासस्य भार्यास्ति मदयंती। तस्यास्त्वं मणिकुंडले समानीय प्रयच्छमह्यमिति श्रुत्वा ओमित्युच्चार्य च ततः प्रतस्थे।

अथ मार्गे व्रजन्तं तं वृषारूढपुरुषो मिलित्वा प्राह। वटो! पूर्वमस्यगोः पुरीषं भक्ष-

यित्वाऽनन्तरंव्रजेतिवाक्यमाकर्ण्य आज्ञागुरूणांह्यविचारणीयेति मत्वा तद् गोमयंचखाद । ततः पौष्यनिकेतनं गत्वातत्रतामनवाप्यच राजानमपृच्छत् । नरपाल ! कुतोनदृश्यते महाराज्ञी ? तच्छ्रुत्वाऽऽभ्यागतप्रियोराजा विहस्य तं प्रोवाच । भूदेव ! शंकेऽहंत्वमुच्छिष्टोऽसि ? पवित्रतां विना पुनीतां तां ममभार्यां द्रष्टुंनशक्नोषीतिवचनमाकर्ण्य चिन्तयन् गोमयभोजनंसस्मार । अहोमया भोजनानन्तरं नाचान्तमतउच्छिष्टोऽस्मीतिनिर्धार्य सत्योऽसीति राजानमवदन् । अथोपविश्य विधिवदाचम्यचाऽन्तःपुरंगतो लक्ष्मीमिवतेजोमूर्तिंपतिव्रतांतान्ददर्श । ततो निजवृत्तान्तमावेद्य तेन याचिता सा सुपात्रायतस्मै प्रभामण्डलमण्डिते दिव्यकुण्डले दत्त्वा प्राह । द्विज ! इमे मनोहरकुण्डले तक्षको नित्यं प्रार्थयतेऽतस्त्वयाऽप्रमत्तेनगन्तव्यम् । ततोऽखण्डसौभाग्यवती भवेतिदत्त्वाऽऽशीर्वादं तस्यै गन्तुकामः पौष्येणाऽमिलत् । तत्राऽसौश्राद्धे पौष्येण निमंत्रितोऽभवत् । ततस्तत्र भोजनेदूषितान्नं दृष्ट्वा प्राह । पौष्य ! पितृकार्येऽशुच्यन्नमुपाहृतंत्वयाऽतस्त्वमन्धो भविष्यसीत्यशपत् । तच्छ्रुत्वा राजोवाच । वृथैव त्वं पवित्रान्नंदूषयस्यतशुछिन्नवंशत्वमवाप्स्यसीति प्रत्यशपत् । अथ राजा तदन्नमन्विष्यन् तत्र केशानवाप्य कृतांजलिर्जगाद । ऋषिपुत्र ! क्षमस्वममापराधम् । मुक्तकेशैर्मयोपहृतमेतदन्नमतोऽवश्यमपवित्रतामगाद् भोजनम् । तच्छ्रुत्वोत्तंकः प्राह । राजन् ! त्वं सत्यभाषणेनाऽनेन क्षणिकमान्ध्यमवाप्य पुनरपिस्वांदृष्टिमवाप्स्यसि । महाराज ! यथा मया स्वशापो निवारितस्तथा त्वमपि तु शापं निवारय । निशम्यैतत् पौष्यः प्राह । ब्राह्मणाः प्रायो भवंति चपलाशयास्तीक्ष्णवाचश्च । क्षत्रियास्तुतद् विपरीताः । अतोऽहं नास्मि शापक्षये समर्थः । तच्छ्रुत्वोत्तंकः प्राह । राजन् ! ममशापप्रदानं तु सार्थकः । तव च निरर्थकमित्यभिधाय ततः प्रतस्थे ।

अथाऽस्यव्रजतोवर्त्मनिवार्युपस्पृशतस्तीरनिहितेवाससावृते च कुंडलेतक्षकस्तूर्णमपाऽहरत् । ततः स तक्षकान्वेषणाय नागलोकमवाप्य पूर्वमहेन्द्रं तदनंतरं च सर्पांस्तुष्टाव । ततो हयारूढो देवराजो दर्शनं दत्वाप्रोवाच । वत्स ! घोटकस्यांऽस्य धम गुदद्वारम् । ततस्तद्वचसा ध्मायमानस्यतस्य स्रोतोमुखैस्सधूमोऽग्निः प्रादुर्बभूव । ततस्तेनसमग्रेनागलोके धूमान्धकारितेजाते भयातुरस्तक्षकस्तस्मै रत्नकुंडले समर्प्य स्वभवनं जगाम ।

अथ समवाप्तकुण्डलोत्तंकस्तमेववाजिनमारुह्य गुरुद्वारं न्यवर्तत । ततो गुरुपत्न्यै ते मणिकुण्डले समर्प्य कृतार्थोबभूव । एवं गुरुकृपयामहामहोपाध्यायत्वमवाप्य ब्रह्मचर्याद् गृहस्थाश्रमं विवेशोत्तंकः । ततोलब्धावकाशस्तक्षकवैरमनुस्मरन् हस्तिनापुरं जगाम ।

तत्र सभासीनं परीक्षितमुत्तंकः प्रोवाच । राजन् ! निर्वैराः क्षत्रिया न भवंति श्रियो-

भाजनम् । दुरात्मातक्षकस्तवजनकमदशत् । तस्मात्तस्यापकाराय त्वमपि प्रबलपुरुषार्थं कुरु । निशम्यैतज्जनमेजयो भ्रुकुटीधूमाविभ्रमैर्वृतोबह्निरनिलेनेवप्रचण्डोबभूव । तच्छ्रुत्वा शौनकोऽपृच्छत् । महाशय! कृपयाऽऽदौ ममवंशं वर्णयेतिप्रोक्तस् सूतोऽभ्यभाषत । पुराऽऽसीन्महामुनेर्भृगोः कुरंगनयनापुलोमानामदयिता । साऽहर्निशं देववत् पतिंपर्यचरत् । अथैकदा पत्यौ स्नानाय निर्याते यदृच्छयागतः पुलोमानामराक्षसो वरवर्णिनींतामेकाकिनीं दृष्ट्वा कस्येयम् भार्येति बह्निमपृच्छत् । तच्छ्रुत्वाऽग्निरवदद् भृगुभार्यैषा । ततस्तेन मदनातुरेण बलादाकृष्टासाऽऽतिविललाप । येन तद्गर्भात् कालानलप्रभः सूनुरच्यवत । च्युतत्वाच्च्यवन इतिसः प्रसिद्धोऽभवत् । तस्मिन्नाश्रमे यत्र तस्याश्रुविन्दवो न्यपतनातत्रत्या नदी लोके बधूसरेति विख्याताऽभवत् । अथ निवृत्तः पावकद्युतिर्भृगुः प्रणिधानेन सर्वं ज्ञात्वा तंबन्हिं सर्वभक्षकोभवेत्यशपत् । ततो रुष्टोऽग्निः सर्वभक्षत्वमवाप्याऽदृश्योबभूव । अथ देवगणप्रार्थनया ब्रह्मा पुनस्तंधरातले प्रतिष्ठाप्य लोकानानंदयामास ।

अथाऽसौ च्यवनः सुकन्यायां प्रमतिमुत्पादयामास । तस्य रुरुर्बभूव । सोऽथ स्थूलकेशाश्रमे स्वायुषोऽर्धप्रदानेनदुष्टाहिदष्टां प्रमद्वरांभार्यामजीवयत् । तदाप्रभृति सर्पनिधनैकव्रतः स डुंडुभमेकमताडयत् । ततः प्रहारपीडितः सः कुटिलोभवन् भोगेन च निवेष्टयन् प्रोवाच । ऋषिपुत्र ! पुराऽहं सहस्रपान्नामविप्रोऽभवम् । एकदा बाल्ये क्रीडता मया तार्णं भुजंगमं कृत्वाऽग्निहोत्रप्रसक्तः खगमाऽभिधो द्विजो भीषितः । ततस् तच्छापाच् चिराड् डुंडुभतामिमां प्राप्तवानस्मि । अथाऽनुनयप्रसादितः स रुरुदर्शनाच्छापनिवृत्तिरित्यवदत् । भद्र ! द्विजो भूत्वा भुजगान् प्रति दीर्घवैरंमाकृथाः । वैरनिर्यातनं तु क्षत्रिया वांछंति । न क्षमाशीला ब्राह्मणाः । पुराऽपि यदा पितृवधकोपेन पारीक्षितोराजा सर्पसत्रेऽसंख्यान् सर्पाञ्जुहाव । तदा कृपालुरास्तीकस्तान् रक्षित्वा मातृकुलादानृण्यमवाप ।

निशम्यैतन्मुनिपृष्टःसूतो वर्णयितुमारब्धवानास्तीकचरितम् । पुराऽऽसीद्यायावरकुले जरत्कारुनामको ब्रह्मचारी । सचैकदा महाकूपे वारणस्तम्बलम्बमानानधोमुखान् स्वपितामहान् दृष्ट्वाऽपृच्छत् । महाशयाः के यूयम् ? कथामिमांच दशां प्राप्ताःस्थ ? एवं पृष्टास्ते कथितान्वयनामानं तं बभाषिरे । वत्स ! वयं तवैव पितरः । त्वद्ब्रह्मचर्यविच्छिन्नपुण्यसंतानतन्तवोऽकालमूषकाक्रान्ताश्चाऽत्रसीदामः । एतदाकर्ण्य सर्वांस्तान् प्रणम्य सः प्रोवाच । महोदयाः ! करिष्येऽहं दारसंग्रहंभवदाज्ञया । परंस्वनाम्नीं विना न भजिष्यामि भार्यामितिमेदृढनिश्चयः । अथ कालेन स मनस्वीवासुकेरनुजां समाननामिकां जायामवाप । ततः सा प्रथमसमागमसमयएव दध्रे गर्भम् । ततः पत्या पृष्टा गर्भोऽस्तीतिप्रत्यवदत् ।

तेनाऽसावास्तीक इति लोकेप्रसिद्धोऽभवत् । ततः प्राप्तविद्यः सः सर्वनागानां मातृशापनिवर्तनं कारयित्वा परमांप्रतिष्ठामधिगच्छाति स्म । एवमाकर्ण्य शौनकेन नागमातृशापकारणं पृष्टो रोमहर्षणिः प्रत्यभाषत । आसीत्कृतयुगे कश्यपप्रजापतिः । तस्य कद्रूविनतेतिद्वेभार्येबभूवतुः । अथ ते दक्षसुते भर्तृवरात् खगोचितंगर्भंसुषुवाते । तत्रादावण्डेभ्यो यदाऽहयो निःसृतास्तदा विनताऽपि स्वाण्डद्वयादेकमीर्ष्यया विभेद । ततोऽपूर्णाण्डविनिर्भेदादनूरुररुणः समजायत । अथाऽसाववलोक्यानिजस्थितिं कुपितो दास्यमवाप्नुहीतिमातरं शशाप । पुराऽमृताहरणार्थंदेवदानवा मंदराद्रिणा क्षीरसागरं ममंथुः । ततः क्षीरसिन्धुः शशांकं कौस्तुभं लक्ष्मीम् सुधाम् धन्वन्तरिम् अश्वराजम् च देवेभ्यः प्रादात् । ततः स्वयं भगवान् विष्णुः स्त्रीरूपेण दैत्यान् वंचयित्वा सुधान्देवेभ्यः प्रायच्छत् । प्रत्युत्पन्नमतयश्च सुरवृन्दाः सत्वरं तत्पीयूषं पीत्वा निर्जरा बभूवुः । ततो राहुर्यदा त्रिदशरूपं धृत्वाऽमृतंपातुमलगत्तदा सोमसूर्याभ्यां सूचितो विष्णुश्चक्रेण तच्छिरश्चिच्छेद । अथ खण्डितमस्तको घोरतरंतपश्चक्रे । येनाऽद्यावधि पर्वसु तौ ग्रसते । अथैकदा सुखासीने भगिन्यौ क्षीरसागरसंभवं दिव्यहयं दृष्ट्वा किंवर्णोऽसौ हय इति मिथः प्रोचतुः । तत्र विनता श्वेत इति कद्रूश्च कृष्णोऽयमिति समर्थयामास । ततो विवादेन ते दास्याय पणं चक्राते । अथ कलुषमानसा कद्रूः स्वसुतान्नागान् समाहूय प्रोवाच । पुत्राः ! श्वेतहयं कृष्णबालं कुरुत । निशम्यैतत् केचित् सर्पाः प्रोचुर्मातः ! अशक्यमेतत् । तच्छ्रुत्वा कुपितानना माता रे रे दुष्टाः ! वितते सर्पसत्रे वोऽग्निरंतकोभविष्यतीति शशाप। ततोऽवशिष्टैर्भुजंगमैस्तुरंगमेऽसितेविहिते वालचेष्टितै र्विजिता विनता दास्यं प्रापत् । अथाऽपरादण्डात् कनकच्छविरुद्गादगरुडः । ततः पूर्णतारुण्यमवाप्य स देववन्द्यस्तार्क्ष्यो मातुरन्तिकमगात् । तत्र स व्याजपणनिर्जिताम् स्कन्धेनकद्रूंवहन्तींमातरं च बिलोक्य तद्दुःखदुःखितोऽपृच्छत् । देवि ! कथय दुर्बलताकारणम् । तच्छ्रुत्वा सरलाशयामाताऽब्रवीत् पुरावृत्तंसर्वम् । ततो मातुर्गिरासर्पान्तकोऽपि स भुजंगमान् पृष्ठोपरि धृत्वा सूर्यरथाभ्यर्णमनैषीत् । अथ कद्रूःसुपर्णेनोह्यमानान् रविकिरणैर्गाढसंतापमूर्छितांश्च निजसुतानवलोक्य मरुत्पतिं तुष्टाव । ततस्तद्विनिर्मितमेघौघवृष्टिनष्टातपक्लमाःसर्पा नदंतो पृथ्वीं बभ्रमुः । अथैकदा सुपर्णो भोगिभ्यः पीयूषाहरणावधि दास्यं श्रुत्वा प्रबलपुरुषार्थमवलंबमानो मातुरन्तिकं गत्वा च प्राह । देवि ! तवविमोक्षणाय सुधामानेतुमहं देवलोकं गच्छामि । त्वं मदर्थं सत्वरं भोजनं समादिश । एतदाकर्ण्य सा प्रोवाच । वत्स ! समुद्रतटेऽस्ति विपुलान्वयोनिषादलोकस्तेनत्वं लभस्व स्वतृप्तिम् । परं तत्र यदि कश्चिद् ब्राह्मणो मिलेत् । स तु त्वया सर्वदैवरक्ष्यः । निर-

स्यैतत् तार्क्ष्यः पप्रच्छ । मातः ! का परीक्षा ब्राह्मणस्य ? सा प्राह वत्स ! यस्तव कण्ठ लग्नो मर्माणिकिरन्निवतप्तवडिशायते । त्वया स ब्राह्मणोज्ञेयः । यद्यपि स धीवरनिवासस्त-थापि न निजधर्मतो हीनो नजात्यातिरस्कृतोन च विलुप्तसंध्योऽस्ति । पुत्र ! व्रज शीघ्रम् । शिवास्तेपंथानःसन्तु । निशम्यैवं मातुर्गिरा पक्षविक्षेपवातविक्षोभिताम्बुधिः स खगो विय-त्युत्पपात । अथसोऽब्धिकूलंगतो विपुलं दासकुलं भुंजानो तन्मध्यगतं द्विजमपि खादि-तुमारब्धवान् । ततस्तंबाडिशवल्लग्नं विज्ञाय सत्वरं तत्याज । अथ क्षणादूर्ध्वमग्रेगत्वा च तेजोनिधिं स्वजनकं कश्यपं ददर्श । ततस्तं प्रणम्य सः पीयूषाहरणोद्यमं तस्मैविनिवेद्य च पर्याप्तभोजनमयाचत । अथाकर्ण्य सुतवचनं मुनिवरः प्राह । वत्स ! सरस्यास्मिन् अनेक-योजनायासौ कुंजरकच्छपौ तिष्ठतः । तौ भक्षयित्वागच्छेति ब्रुवाणं कश्यपं गरुडः कारण-मप्राक्षीत् । ततःकश्यपोऽब्रवीत् । पुरा सुप्रतीकविभावसूनामकौ वणिजौ धनविभागोत्थकलिना मिथः शापादेतांदशांप्राप्तौ । तच्छ्रुत्वा विक्षोभतत्परस्तार्क्ष्यश् चरणाभ्यां तौ समादाय महाजवेनोत्पपात । सोऽथ दिव्यवृक्षवनं गत्वा तत्र स्वर्णरोहणपादपशाखायां विश्रामार्थं समुपाविशत् । ततः शतयोजनविस्तीर्णा मुनिव्याप्ताचसाशाखा तत्पदास्पृष्टैवाऽभज्यत । सोऽथ तां शाखांचञ्चवादायाग्रेययौ । ततो लंबमानैरधोमुखैर्बालखिल्यैश्च व्याप्तेयं शाखे-तिमत्वा भीत्या प्रत्यागत्य च किंकरवाणीति कश्यपं पप्रच्छ । ततः सुतवात्सल्यात् कश्य-पेनप्रार्थितास्तपोजुषोवालखिल्यास्तां शाखां परित्यज्याऽन्यत्र ययुः । अथ पितृवाक्यात् हिमगिरौ तां परित्यज्य भक्षितामिषोगरुडोऽमृताहरणाय शक्रभवनमयासीत् । ततोऽसौ पक्षिराजो वालखिल्यवरात् सुरेशाविजेतृत्वं विष्णुवाहनत्वंच प्राप्तवान् ।

पुरा महर्षिः कश्यपो महायज्ञं प्रारभत । तत्र सुरसिद्धर्षिचारणा अनारतंक्रतुसंभारा-नवहन् । किम्बहुना स्वयंदेवराजोऽपि पर्वतसन्निभं क्रतुसंभारमादाय तस्मै समर्पयामास । अथैकदाऽङ्गुष्ठाग्रप्रमाणान् तपः कृशान् पलाशतूलिकामात्रभारसंपीडिताङ्गकांश्च दृष्ट्वा परिहा-सपूर्वकं सुरराजोऽब्रवीत् । अहो ! जलपूरितं वारिधिं घटनौकया तितीर्षन्तिभवन्तः ? ततस्ते तस्य हास्यात् कुपिताः कश्यपसुतो बलवानिन्द्रविजेता च भूयादित्याशयेन घोरा-मिष्टिं प्रचक्रिरे । ततस्तत्तपः प्रभावात् समुद्भूतः सूर्योपमः सुपर्णो जंगमः सुमेरुरिव तं-सुरेश्वरंजेतुं ययौ । सोऽथवीरो दिवं प्रविश्य देवाञ्जिगाय । ततः सः संमुखागतं शक्रं विजित्य सोमरक्षकं विश्वकर्माणमप्यपीडयत् । अनंतरं सः पक्षसमुत्थित रजःपुंजेन भीषणौ रक्षाभुजगौ निरस्य तं पंजरं व्यदारयत् । ततोबलदर्पितोगरुडोभ्राम्यन्महाचक्रां सुधां जहार । एवंसुधां नीत्वाऽपीत्वैचनिवर्तमानं तं दृष्ट्वा भगवान्विष्णुः परमांप्रीतिमाससाद ।

ततस्तंसमीपमाहूय प्रोवाच । पतगेश्वर ! तवाऽत्रजिह्वाया अलोल्यं दृष्ट्वा प्रीतोऽस्मि । वरं ब्रूहि । ततोऽतिविनतो वैनतेयोऽब्रवीत् । कृपासिन्धो ! किमहंयाचे । भवत्प्रसादात् सर्वमेव संप्राप्तवानस्मि । एवं संतोषाऽतिशयात् परमसंतुष्टोभगवान् त्वं मे वाहनं भवेतिवरंप्रादात् । ततस्तथास्त्विति व्याहृत्य विष्णोर्वाहनतां ध्वजोपरि च संस्थिति मवाप्याऽसौ गरुडःसानन्दं प्रतस्थे । अथ मार्गे ब्रजन् स वज्रिणा वज्रेणताडितोऽभवत् । ततस्तेनाऽहतोऽप्यव्यथितो विहस्य सः शतयोजनं स्वपक्षं वज्रस्य समानोऽस्त्विविति कथयित्वा तत्याज । ततस्तेन पक्षेण समाक्रान्तो वृत्रहा स्वपराभवं मन्यमानस्तेन समं सख्यं चकार । अथ सुपर्णः सुरेश्वरं प्राह । सखे ! मयान्यस्तममृतं पन्नगेभ्यस्त्वयाहर्तव्यमितिव्याहृत्य सः पक्षिराजोभुजगान् ययौ । ततो भुजंगानां सन्निधावमृतं निधाय प्राह । भ्रातरः ! सुरक्षितं चात्र पीयूषम् । विधिवत् तत् पीयताम् । जाताऽद्यप्रभृति  ममभाता पणबंधाद्विमुक्ता । ततः सुधां कुशेषु संस्थाप्य स्नातुं प्रयातेषु भोगिषु तार्क्ष्येण प्रागनुज्ञातो महेन्द्रो जवात्तामपाहरत् । ततो वंचिता भुजगाः सुधालिप्तं कुशासनं दीर्घजिह्वैर्लिलिहुर्येनद्विजिह्वतां प्रापुः । तदाप्रभृति दर्भाणां हव्यकव्ययोः पवित्रता जाता । ततः शक्रवाक्यात् सर्पास्तार्क्ष्यस्यभक्ष्यतां ययुः । मुनिजनाः ! इत्येतच्छेषवासुकिकार्कोटकतक्षकैलादिभोगिनां मातृशापकारणंमयोक्तम् । अथ तीव्रतपसा पितामहाद् वरं समवाप्य तद्गिरा शेषः सगिरिकाननां पृथ्वीं वोढुं समर्थोऽभवत् । ततोऽन्ये च मातृशापपरित्यक्ता वासुकिप्रमुखा एकत्रिता भूत्वा सर्पसत्रप्रतिक्रियां मंत्रयामासुः । तत्र केचिदाहुर्वयंतु तस्मिन् क्रतौ विषोल्काभिश्चतुर्विधैरुपायैर्वा तत् प्रतीकारं करिष्यामः । तच्छ्रुत्वा धीमानैलपत्रो वासुकिमाह । सखे ! शापोऽसाववश्यंभाव इति मातुरुत्संगशायिनामयाप्रागेवश्रुतम् । एकदा देवाः कौतुकात् कमलासनमुपसृत्य शापशान्तिं पप्रच्छुस्तदा ब्रह्मोवाच । सुरगणाः ! ये ये पापनिरतास् तीक्ष्णविषधरास्ते ते तु सर्पसत्रेऽवश्यं क्षयंयास्यंति । परं शेषान् धर्मस्थान् यायावरवंशजोजरत्कारुगर्भजो जरत्कारुसूनुरास्तीकाभिधोमुनिर्मोचयिष्यति । भुजगाधिप ! एतन्मया बाल्ये श्रुतमित्यैलवर्णात् समाचारं श्रुत्वा वासुकिर्भयमत्याक्षीत् ।

अथैकदा मृगयार्थी राजापरीक्षितो वनं बभ्राम । तत्र श्रान्तः पिपासाकुलितश्च समीकाश्रमं विवेश । मुनिस्तदामौनव्रतो निमीलितनयनश्चासीत् । अत्रान्तरे राजा तमुपसृत्याऽब्रवीत् । अपिदृष्टस्त्वयामार्गेकश्चिन्मच्छरांकितः कुरंगः ? इति पृष्टो मुनिर्यदा न किंचिदुवाच । तदाऽसौ कौतुकात् तत्र पतितं मृतभुजगशरीरं तस्य स्कन्धे निक्षिप्य स्वनगरं जगाम । ततो महाक्रोधी तत्तनयः शृंगी सर्पसरघाविषविस्फोटदूषितं पितरं विलोक्य

कम्पमानकराधरः स्फूर्जद्विषस्तक्षकाग्निः सप्ताहेनैव तत्कर्त्तारं धक्ष्यतीतिशशाप । तच्छ्रुत्वा करुणासिन्धुः समीकः पृथिवीभुजः समीपं शापोऽयंरक्ष्यतामितिबुद्ध्या शिष्यं प्राहिणोत् । ततो मुनिशापपरित्रस्तः परीक्षित् सचिवानुमत्या मंत्ररक्षौषधित्राते रात्मनोगुप्तिं विदधे । अथ संप्राप्ते सप्तमेऽहनि विधिचोदितस्तक्षकः पृथिवीपालं निर्दग्धुं हस्तिनापुरं प्रययौ । ततो मार्गेव्रजन् परीक्षिद्रक्षणार्थमायातं विषमंत्रिणं दृष्ट्वा तक्षकोऽपृच्छत् । विप्र ! कुतश्रा-यातः ? सोऽब्रवीत् । काश्यपोऽहं धनार्थं तक्षकदष्टं राजानं संजीवयितुं गच्छामि । तत-स्तस्य व्यवसितं ज्ञात्वा तक्षकोऽवदत् । सोऽहमस्मि तक्षकः । को मां जेतुं प्रगल्भते ? यदि त्वं नरेन्द्रं रक्षसि तर्हि तु मया दग्धमेनं महाद्रुमं संजीवय । तदा ते विषमंत्रितां जानामि । एवमुक्त्वा स विषवेगेन तं न्यग्रोधं भस्मसादकरोत् । ततः स ब्राह्मणो मंत्रबलेन सद्यस्तं तरुं सशाखपत्रपुष्पफलयुतं चक्रे । ततस् तत् प्रत्ययात् तक्षकस्तस्मैयथेष्टं धनं दत्वा व्यसृजत् । सोऽपि पुष्कलं धनमवाप्य भगवदिच्छांबलवतीं मन्यमानः स्वनगरं न्यवर्तत । ततः कालदष्टं नृपं ज्ञात्वा तस्मिन् दिव्यदृशि द्विजे याते तक्षकस्तापसाकारान् सर्पान् राज्ञे व्यसर्जयत् । अथ ते छन्नाःस्वस्तीतिवादिनस्तंमहीपालं समेत्य कुशैः सह तस्मै पुष्पाणि फलानि च प्रददुः । ततो नृपस्तत्फलान्तरनिर्यातं ह्रस्वतरं कीटम् दृष्ट्वा युक्तितः शापं-मानयामीति मुनीनवदत् । ऋषिवराः ! असौ तक्षकनामाकृमिर्मांमिथ्या दशत्विति साचि-वादीन् ब्रुवाणं तं तक्षकः समवेष्टयत् । ततः स्फूर्जद्विषज्वालावलयेन समंदिरं नृपं भस्म-सात् कृत्वा स भोगीन्द्रो वियत्युत्पपात ।

एवं तस्मिन्नृपतौ दग्धे तत्पुत्रो जनमेजयो राज्ये मंत्रिवरैः स्थापितो वपुष्टमां भार्यां भेजे । अथैकदा स वरोद्याने तयातन्व्यासह रममाणो मंत्रिमण्डलात् पितृवृत्तमशृणोत् । ततो मन्युवन्हिसंतप्तो राजा ब्राह्मणैः सह संमन्त्र्य सर्पसत्रे सर्वनागानां प्रतिक्रियां चकार । अथ तस्मिन् व्यालोलविस्फूर्जज्ज्वालालीढनभस्तले सर्पसत्राग्नौ कुंजरोपमाभुजंगमा मंत्र-कृष्टा आगत्य निपेतुः । ततो विषाग्निश्यामानां स्फुलिंगाचिररोचिषां मेघानामिव पतत् भोगिनां संरंभोऽभवत् । एवं महीभुजः सर्पसत्रे दह्यमानेषु सर्वेषु मंत्रकृष्टसूतक्षकः सुरेश-शरणमगमत् । अथ सेन्द्रं तक्षकमाकृष्य पावके पातयेति ब्रुवाणे नरपतौ शतक्रतोः सिंहासनं स्थानाद् व्यचलत् । ततो भयात् कम्पमानोवासुकिरास्तीकमुपसृत्य प्राह भागिनेय ! शरणागतं मातुलं माम् रक्षेति वचनमाकर्ण्य स तथेति प्रतिश्रुत्य च जनमे-जययज्ञस्थलं प्रापत् । तत्र द्वाःस्थैरावेदितःप्रवेशमवाप्य मंत्रबलाद् बज्रिणासह त्रस्ते तक्षके तिष्ठेत्यास्तीकवचनात् लम्बमाने क्षणंस्थिते निर्दग्धभुजगव्रातवसाविपुलकर्दमाः सुविपुल

मेदोनद्यः सरित्पतिं प्रययुः । अथाऽऽस्तीको नृपमभ्येत्य स्वस्तिपूर्वां स्तुतिमकरोत् । ततः संतुष्टोराजा तस्मैस्वस्तिकृतेऽभयवरंप्रादात् । तद्वरात्सफणीश्वरान् ररक्ष । एवमस्तीकवचनान्महीभुजः सर्पसत्रे निवृत्तेऽवशिष्ट नागानां परमोत्सवोऽभवत् ।

---

एवमाकर्ण्यास्तीकचरितं शौनकेन पवित्रां भारतीं कथां पृष्टो वृद्धश्रवाः प्राह । पुरा सर्पसत्रे पारीक्षितेन पृष्टो भगवान् सत्यवतीसुतः स्वशिष्यं वैशंपायनमचोदयत् । वत्स ! पूरयभूपमनोरथम् । ततोऽसौ प्रणम्याच्युतमितिहाससुरद्रुममाहात्म्यं श्रावयामास ।

पुराऽऽखण्डलसखो वसुनामा चेदिषु सार्वभौमो राजाऽऽसीत् । यो भुवि विशेषतो यज्ञेषु महेन्द्रपूजां प्रवर्तयामास । अथैकदा नराधिपो मृगव्यं चरन् ऋतुमत्यां महिष्यां गिरिकायां तामेवायतलोचनां सस्मार । ततः स्खलितवीर्यमाशु तरुपर्णके धृत्वा तत् श्येनगले बद्ध्वा च प्रेयस्यै प्रेषयामास । अथ श्येनादन्यखगाकृष्टं तद्यमुनांभस्यपतत् । तत्र मीनभावं प्राप्ता सा शापच्युताऽप्सरा तन्निपीय गर्भवती बभूव । अथ सा देववारवधूरद्रिका धीवरैः कृष्टा कृत्ता च देवलोकमगात् । ततस्तस्याः प्रजाते मिथुने वसुस्तु कुमारंनीत्वा कुमारीं गन्धकालीं दाशराजाय प्रादात् । ततः सा चन्द्रकलेव वृद्धिमवाप्य रमणीरत्नं बभूव । ततो दिनेषु गच्छत्सु कदाचित् तर्त्तुकामः पराशरो यमुनाकूले समागच्छत् । तत्र नवयौवनशालिनीं दाशपुत्रीं विलोक्य मुनिर्मोहितो बभूव । ततो भाविनोऽर्थस्य माहात्म्यात् स महामुनिः स्वतपोबलेन दिक्षु नीहारं विधाय च तां हरिणेक्षणां भेजे । अथ सा तच्चित्तप्रसादिनी मुनेर्वरादपरिभ्रष्टकौमारा दिव्योत्पलगंधाच बभूव । एवं नवनीरजनेत्रया तया सह संगतोमुनिर्ज्ञानभास्करंतनयं ससर्ज । स एष भगवान् वेदव्यासः सत्यवतीसुतः पुरातनसंस्कारात् सर्वविद्याविशारदो बभूव । यमुनातीरे जातस्तस्माद् द्वैपायन इति विश्रुतोऽभवत् । अथैकदा पितुराज्ञया स मातरं मिलित्वाऽत्यानन्दमवाप । ततो गच्छन् स जननीमाह देवि ! विपत्स्वहं स्मर्त्तव्य इति कथयित्वा तपोवनं जगाम । मातापि तस्मिन्नस्निह्यत् ।

अथ रामहते क्षत्रे विप्रतश्च पुनः संभूते पुरारिदलितादैत्याः स्वांशैः पृथिव्यामवाऽतरन् । ततस्तद्भारपीडिता पृथ्वी ब्रह्माणं शरणमगमत् । अथ सेन्द्रमंशेन गां गतंनारायणमवगच्छेति विरंचिवरात् सा पुनः सुप्रतिष्ठिताऽभवत् । अथ सुरारिदलनोद्यताः ससिद्धगंधर्वा देवाअपि नाना राजर्षिवंशेषु विष्णुमेवाऽन्ववातरन् । पुरा स्वयंभुवा चतुर्विधः सर्गः सृष्टः । तत्र देवदानवा मनुष्येषु संभूताः । पूर्वं ये विप्रचित्तिहिरण्याक्षप्रह्लादाद्यामहासुरा आसन् । ते मनुष्येषु जरासंधचैद्यशल्यादयोऽभूवन् । तत्र गन्धर्वराजो धृतराष्ट्रः । अणी-

माण्डव्यशापेन धर्मो विदुरो बभूव । बृहस्पतेरंशोद्रोणः । कृपाश्वत्थामानौरुद्रांशौ । वसुर्भीष्मः । शकुनिर्द्वापरः । मरुतामंशः सात्यकिः । हार्दिक्योद्रुपदः । सर्वक्षत्रियक्षयकृत् कलेरंशोदुर्योधनः । पवनांशोभीमः । इन्द्रांशोऽर्जुनः । अश्विनोरंशौनकुलसहदेवौ । अनलांशो धृष्टद्युम्नः । कर्णः सूर्यांशः । अरिमर्दनोभगवान्वासुदेवोनारायणांशः । इत्थमंशावतरणं श्रुत्वा जनमेजयः कुरुवंशमपृच्छत् । निशम्यैतद् वैशंपायनोमुनिरब्रवीत् । राजन् !

पुराऽऽसीद् दुष्यन्ताऽभिधो राजा । स महावीरोऽपिपरलोकतो भीरुः । शूरोऽप्यचण्डकरः । अंगनाप्रियोऽपिकुभर्त्ता । पितृहीनानांपिता । अबंधूनांबन्धुः । अनाथानां च नाथोऽभवत् । अथैकदा स धन्वी मृगयारसिकः सैन्यमध्याद्विनिर्गत्य वनान्तरमगात् । तत्र केसरिव्रातान् हत्वा वनकण्टकान् शोधयामास । ततः पर्यटन्नितस्ततो विशालविपुलश्रोणीम् कामिनीमिवहारिणीम् हंसमालिनीम् मालिनी न्तटनीं ददर्श । अथ क्लान्तवाहनोऽसौ क्षणं नदीतटे विश्रम्य तरलालिकुलक्वाणवाचालोत्फुल्लपादपं मंदानिलचलल्लतं च समीपस्थं कण्वाश्रमं प्रापत् । तत्र नयनानलग्धेन मनोभुवा त्रिनेत्रवंचनायेव ललनातनुं कल्पिताम् कमलनेत्रां कन्यां ददर्श । अथाऽऽकुलितो राजा कृतातिथ्यां तामपृच्छत् । मनोरमे ! स महायशाः कण्वमुनिःकाऽऽस्ते ? अत्राऽहं देववन्द्यं तं महाभागं नन्तुमागतोऽस्मि । निशम्यैतत् साचीकृतेक्षणच्छायाकल्पितश्रवणोत्पला सा मुनिकन्यका प्रोवाच । महाभाग ! स मम पिता स्वयंफलान्यादातुं बहिर्गतवान् । कृपया क्षणमिह विश्रम्यताम् । अचिरादसावागामिष्यतीतिवाक्यंश्रुत्वा राजोवाच । भद्रे ! महात्माकण्वस्तु बालब्रह्मचारीति-श्रूयते । कथं तस्य त्वं सुताजाताऽसीतिपृष्टा सा कन्या प्रोवाच । राजन् ! यद्यस्तिकौतुकं तर्हि बाल्ये मुनिप्रोक्तां जन्मकथां वर्णयामि । तां कृपयासमाकर्णय । पुरा भगवतः कौशिकमुने स्तपस्यतो विघ्नाय देवराजेन वराप्सरा मेनका प्रेषिता । अथ सा वामलोचना तद्वनमवाप्याऽनिलाहतावल्लरीव शनैः शनै विंजहार । ततः शचीपतिप्रेरितोवायुर्बालकदलीसुन्दरश्रियस्तस्या वरांशुकं जहार । ततोऽति लज्जा कुलितां तां दृष्ट्वा मुनिरभवत्साभिलाषःसहसा तस्याम् । मनोभवो महतामपि दुर्निवारो भवतीति किंवदन्ती सर्वथैव सत्यास्ति । अथ स्वयं प्रणयिना तेन प्रार्थिता सा घनस्तनी वर्षाणामाधिकं शतं मनसिजक्रीडां भेजे । यथा मंजरीकलिकां तथा काले सा मां जनयित्वा जातमात्रामेव निर्जने मालिनीतटे तत्याज । ततोऽकस्मात् तत्राऽऽयातोमुनिः शकुन्तैः संवृतामामवलोक्य शकुंतलेति नाम धृत्वा स्वकुटीरमानिनाय । साऽहं तपोनिधिविश्वामित्रान्मेनकायां जाता कण्वमुनिना च सुतावत् परिपालिताऽस्मि । महीपतिरिति निशम्य समुद्भूतामन्दकन्दर्पवातव्यालोलमानसः प्रोवाच ।

अयिकुरंगाक्षि ! जनोऽयं तव वशगः । राजसुता त्वं वसुधावध्वाः सापत्न्ये योग्याऽसि ! सुंदरि ! मम गृहे दिवाऽपि त्वदाननशशिद्योतधूता विलासहाससुभगाः कुमुदाकराश्च भवंत्विति संभाष्य विरराम। एतदाकर्ण्य लज्जावनता सा प्राह । राजशेखर ! पितृवशाऽहमस्मि । अतः सोऽभ्येत्य मान्तुभ्यं प्रदातुमर्हतीतिललिताक्षराणि जगाद । ततो राजा प्राह । शुचिस्मिते ! ते पुत्रो भूभर्ता भवितेति संविदं कृत्वा गान्धर्वविधिना पूर्णेन्दुवदनां तां परिणिनाय । अथ व्रजन्नृपः स्मरकेलिकलाक्रान्तां तामामंत्र्य त्वदर्थं वाहिनीं प्रेषयिष्यामीत्यभाषत । ततः क्षिप्रं प्रयातेनृपतौ दिव्यदृष्टिः कण्वो गजभुक्तामाब्जिनीमिव कम्पव्यालोलां शकुन्तलां दृष्ट्वा प्रोवाच। पुत्रि ! तव योग्यसमागमादतीवसंतुष्टोऽस्मि। ततस्तयाऽर्थितो मुनिर्दुष्यन्तवंशजातानां धर्मपरायणताऽस्खलितवंशपरंपराचभूयादितितस्यैवरंप्रादात्। अथापाण्डुमुखी सा समये सुधाकरं प्राचीव किंवा पार्वती स्कन्दमिव सर्वलक्षणसंपन्नं सुतं सुषुवे । ततो मुनिनाकृतसंस्कारः स मृगेन्द्रदमनात्सर्वदमनइति लोके विश्रुतोऽभवत् । अथैकदा मुनिनादिष्टासशिष्याशकुंतला कृतक्षत्रोचितव्रतं पुत्रमादाय दुष्यन्तनगरं प्रायात् । तत्र सभासीनंराजानं समुपेत्य लज्जानतमुखांभोजाऽब्रवीत् । आर्यपुत्र ! अयं ते गुणाधिको मयिजातस्तनयः। यत् त्वया कण्वाश्रमे प्रतिज्ञातम्। तदधुना सत्यं कर्तुमर्हसीतिवचनं श्रुत्वा नृपः शकुन्तलां प्राह । भद्रे ! स्मरन्नप्यहं यदा त्वामेव न जानामि तदा कुतोनु तव तनयम् ? एवमाभाष्य कुटिलाननोराजा सुदृशा तया समर्प्यमाणमपि कमललोचनं बालकं न जग्राह । ततः साऽपन्हववैलक्ष्यकोपकम्पाकुलाशया भूपस्याऽसत्यमलिनां वाचं पुनः पुनर्निनिन्द । राजन् ! त्वं हीनदृष्टिरिव दर्पणे प्रतिबिम्बितं स्वसन्निभं सुतमपि नाऽभिजानासि ? महामते ! जानन्नपि नार्हस्यपन्हवंकर्त्तुम् । किं त्वं नवेत्सि ? यदसत्यरजसः संगाद् राजा राजन्नविराजते ? कीर्त्तिशालिनोराजानः सत्येनैव दीप्यंते । श्रियोहिसाधुवृत्तैरेवक्रीडन्तिनाऽसाधुचरितैः । सहजस्याऽनभिजातस्य गुणज्ञस्य यशोधरस्य च ते नैतदुचितम् । यत् त्वं मां सदसि वदसि । योषित् पूर्वंतु स्नेहायतनम् भवति । ततो दाक्षिण्यभाजनम्। अतस्तस्याः परित्यागं सहसा सज्जना न कुर्वंति । भार्या संपदिसुहृद् । विपदिबन्धुः । चिकित्सायांभिषग् । दासः सेवायाम् । शिक्षायाम् गुरुः । गोष्ठ्याम् मंत्रीत्येवमेकैवनानारूपाणिदधाति । लोके स्त्रीतुल्यमन्यद् विश्रान्तिस्थानं न विद्यते । दीपाद् दीपमिवोत्पन्नं परलोके प्रकाशकं नयनानन्दं च पुत्रं त्वां बिना कोऽवमन्यते ? जगति हृदयादभिजातेन स्वर्गपीयूषवर्षिणाच पुत्रेण कोनाम सुखी न भवेत् ? यस्यान्तः शरीरस्थाः पंचसाक्षिणोऽपरेण सह विद्यन्ते । तेऽपन्हवारंभे छलिनं हसंतीति

लोकप्रसिद्धिः । राजन् ! स्त्रीत्यागसदृशं पातकं नास्तीतिब्रुवाणामनस्विनी स्थूलाश्रुकण-हारेण कुचस्थलं भूषयन्ती हीनतादुःखादरुरोद । राजन् ! तस्मिन्नेवाऽवसरे विमलेऽभासि रविरिव त्वमेवाऽस्यां जातोऽसि । अतोबालचन्द्रोपमं तनयमंगीकृत्य राजीवलोचनां जायां च भजेति गगनाद् देवदूतो वचनमुच्चचार । एतदाकर्ण्य राजाऽपराधक्षमापूर्वकं सपुत्रां शकुन्तलामङ्गीचकार । ततस्तया सह गृहस्थसुखमनुभवन्सुचिरं सागराम्बरामिमां शशास । अथाऽऽयुषश्चरमभागे पुत्रभरते राज्यभारं निक्षिप्य सशकुन्तलो दुष्यन्तो भगवदाराधनाय वनंययौ ।

पुराऽऽसीद् देवाऽसुरयुद्धम् । तत्र शुक्रस् संजीवनीविद्यया त्रिदशैर्हतान् दानवाशिष्यानजीवयत् । एवं दैत्येष्वक्षीयमाणेषु वृत्रहा देवैःसंमन्त्र्य तां विद्यां ज्ञातुं वृहस्पतिसुतं कचं प्राहिणोत् । ततः स दानवेन्द्रवृषपर्वणो नगरं गत्वा शुक्राचार्यस्य छात्रो बभूव । अथाऽसौ वार्षसाहस्रिकं सेवाव्रतं चरन् तत्तनयां देवयानीं परया सेवया संतोषयामास । ततः पुत्रीप्रेरणयाऽतीवसंतुष्टोगुरुस्तस्मै मृतसंजीवनींविद्यां प्रादात् । ततो गच्छताकालेन प्राप्तसंजीवनीविद्योऽयं कचइति मत्वा दानवा मिथः संमन्त्र्य गुरुगोरक्षणव्यग्रं तं रहो जघ्नुः । अथ तस्मिन् स्नेहार्द्रहृदया देवयानी पितरं प्रोवाच । तात ! कमलिनीकान्तोऽयंवासरेश्वरोऽस्तंयातोऽगोपाश्चगावोनिवृत्ताः परं कचो नायातो नूनं दैत्यास्तमवधिषुरितिसुव्यक्तमेव । पितः ! गुरुभक्तं तं विनाऽहं जीवितुं नोत्सहइत्युक्त्वारोदितुमारब्धा । ततो दिव्यदृष्टिः काव्यो दूरादेव संजीवनीविद्यां स्मृत्वा दानवैर्हतं कचं क्षणादजीवयत् । अथ गुरुणाऽऽहूतः कचः स्ववृत्तं सर्वं विनिवेद्य पुष्पार्थं प्रेषितो देवयान्या पुनरपि काननं जगाम । ततो यातुधाना निर्जने पुनस्तं हत्वा दग्ध्वा च तद्भस्मचूर्णं सुरायां निक्षिप्योपचारेण सह गुरवे प्रददुः । अथ देवयानी पितरमुपसृत्य प्राह । तात ! कुसुमार्थं प्रेषितो मया कमललोचनः कचोऽधुनापि नायातः ? तच्छ्रुत्वा क्षणं ध्यात्वा सः कुक्षिस्थकचस्य वृत्तं ज्ञात्वा सद्यस्तं जीवयामास । ततः कचः शुक्रदत्तविद्यया गुरुकुक्षिं विदार्य निर्गतस्तेनैव प्रयोगेण च गुरुमजीवयत् । अथ शुक्रोऽब्रवीत् । अद्यप्रभृति सन्निपातसदृशं मद्यं यो द्विजो मोहात्सेविष्यते । सोऽत्राऽल्पायुष्यं परलोके च तमःपूर्णां दुर्दशां यास्यतीत्यशपत् । अथ प्राप्तविद्यः कचो गुरुमामंत्र्य यदा गृहं गन्तुमैच्छत्तदा देवयानी प्राह । भद्र ! मामुद्वह । तच्छ्रुत्वा कचःप्रत्यवदत् । भद्रे ! शुक्रो मेगुरुः पितृवत् पूज्यः । अपरंच तत्कुक्षावुषित्वाऽहं बहिरायातस्तस्मात् त्वं मम धर्मेण भगिनीतुल्यासि । निशम्यैवं तेन प्रत्याख्याता सा कोपकम्पाकुला प्रोवाच । धूर्त ! यत्त्वं दर्पान् माम् सानुरागां परित्यजसि । तेन तव विद्या न कदापि फलिष्यतीतिशशाप । तच्छ्रुत्वा कचः प्राह ।

भागिनि! सार्थकः शापः फलति न निरर्थकः। अहं सदाचारस्तवशापार्हो नास्मि। त्वं वृथैव मामशपः। येन कोऽपि मुनिपुत्रस्तव पाणिं न ग्रहीष्यतीति शप्त्वा स्वगृहंन्यवर्तत।

अथ देवा वर्षसहस्रेण निवर्तमानं तं कचमभ्युद्गम्य दानमानाभ्यां तं पर्यतोषयन्। ततस्तस्मात्तांविद्यां समवाप्य परमसंतुष्टास्ते तस्मै वरं प्रददुर्येनाऽसावन्नतयशाः क्रतुभागभाजनं च बभूव। कचसदृशो गुरुभक्तो लोके दुर्लभः।

अत्रान्तरे वृषपर्वसुता कमलानना शर्मिष्ठा निजोद्याने विहारार्थं गताऽऽसीत्। तत्र विलासमदालसा दासीसहस्रानुगता च सा वसंतवातव्यालोलल्लतालीलां व्यडंबयत्। तस्मिन्नेवाऽवसरे मनोजजन्मसद्मयौवनशालिनी देवयान्यपि तत्रैव समाययौ। अथ स्मितप्रियः शचीपतिः कौतुकेन वायुरूपं धृत्वा तासां वस्त्रपरिवृत्तिं चक्रे। ततस्तत्र शर्मिष्ठादेवयान्योर्मिथो विवादोऽभवत्। अथ रक्तनेत्रा शर्मिष्ठाऽवदत्। मूढे! त्वमुत्तानपाणियाचककन्याभूत्वापि दैत्यपतिदानशीलसुतां मामवमन्यस इत्युक्त्वा तामन्धकूपे न्यपातयत्। ऐश्वर्यमदमत्तात्कुशलप्राप्तिः सर्वथाऽसंभवमिति वृद्धवचनं सत्यम्। ततः प्रयातायां दैत्यपुत्र्यां मृगयानिर्गतोययातिरकस्मात्तत्रायात्। तत्र जलार्थी स गतोदकात्तस्मात्कूपादसामान्यलावण्याभरणाननाम् तां शुक्रसुतां विष्णुरवनिमिव करेणोज्जहार। ततो याते नरपतौ साऽतिदुःखितादेवयानी राजकुलात् पितरमाहूय वाष्पगद्गदं सर्वं वृत्तं व्यजिज्ञपत्। तच्छ्रुत्वोशनाः प्रोवाच। बाले! सद्भिर्वैरपारतितीर्षया बालकेलिकोपकथा कथं प्रमाणीक्रियते? पुत्रि! साधवोह्यपराधेऽपि कोपपावकं सहन्ते। क्षमाजलैरसंसिक्तः क्रोधाग्निर्बहुभिर्जन्माभिरपि न शाम्यतीतिनानावाक्यैस्तां प्रबोधयामास। ततः सा प्रोवाच। तात! जानाम्यहंसर्वम्। परंनाऽहंविरक्ता मुनिवदेकान्तनिवासिनी। किन्तुदैत्यगुरुपुत्री न सोढुंशक्तास्म्यवमानम्। पितः! लोकेऽस्मिन् धिग्याचकम्। अहं तु प्रतीकारं विना जीवितंनेच्छामीत्यभिधाय चरणयोःपतित्वा रोदितुं प्रारभत।

अथ भार्गवस्तस्या दृढनिश्चयं ज्ञात्वा वृषपर्वाणमेत्य च सर्वंसुतावृत्तान्तमवर्णयत् तस्मै। राजन्! एषोऽहं दैत्यपौरोहित्यं परित्यज्य व्रजामीति निगद्य क्रुद्धः संरंभगलितांशुको राजभवनाद्गन्तुमभ्युद्ययौ। ततो भीतो दैत्यराजोऽस्य पादयोः प्रणिपत्य क्षमामयाचत। गुरुदेव! माव्रजाऽस्मान्विहाय। यतो यजमानस्य कल्याणं पुरोहिताधीनंभणितम्। अथोदारचरित्रः शुक्रः प्राह। राजन्! मम तु मन्युर्न विद्यते। साधूनां हि कोपो विनयावधिस्तिष्ठति। परंदेवयानीं त्वं प्रसादयेति काव्यवचनं श्रुत्वा वृषपर्वा बहुभिरनुनयैर्गुरुपुत्रीं प्रसाद्य दासीशतपुरस्सरांस्वपुत्रीं सेविकारूपेण तस्यै दत्वा गुरुयजमानकन्ययोः कलहं शमयामास। वृषपर्वणोऽनया गुरुभक्त्या शुक्रोऽतीवसंतुष्टोऽभूत्।

ततः परमसंतुष्टा भार्गवकन्यका ब्राह्मण्यं क्षात्राच्छ्रेष्ठममन्यत । अथैकदा देवयानी शर्मिष्ठां प्राह । कथय याचकसुताश्रेष्ठा वा दातृसुता ? तच्छ्रुत्वा पितृभयाच्छंकिताशर्मिष्ठान किंचिदुवाच । किन्तु नम्रानना चित्रार्पितेव तूष्णीमतिष्ठत् । अथ कदाचित् साबाला मल्लिकाकलिकाकुलं चूतालिसंसर्पिपवनं च तदेववनं पुनरगात् । अत्रान्तरे मृगयारसिको नाहुषोययातिरपि दैवयोगात् तत्राजगाम । ततः कमलानना देवयानी द्वितीयं मन्मथमिव तमालोक्य नामाभिजनमाकर्ण्य च महाराज ! त्वद्वशाऽस्मीत्यभाषत । श्रुत्वैतद् ययातिः कथितान्वयां सुन्दरीं प्राह । मुनिसुते ! क्षत्रियोऽहंकथंत्वामभ्यर्थये । द्विजन्मनां हि तेजोऽत्याशीविषमस्त्रं विजितप्रलयानलं च को नु नाम लंघयितुं शक्तः ? सुमुखि ! पित्राऽनभ्युपगतां त्वां नाऽहं बोढुं सर्वथा समर्थः । महाभागे ! महाशयः शुक्राचार्यः पथप्रदर्शकः । तद्वचनं सर्वथैव प्रमाणमित्युक्त्वा तामामंत्र्य च स्वनगरं जगाम ।

ततो नृपवचनं हृदि निधाय सा सुलोचनाऽवसरंप्राप्य विवाहाय पित्रे स्वसंकल्पंनिवेदयामास । अथाचार्यस्तत्कृतकूपोद्धरणरूपमुपकारं स्मृत्वा तस्या अनुरागं च तस्मिन् विज्ञाय विवाहार्थमनुमतिं प्रादात् । ततो मुनिवचनं शिरोधार्यमितिमत्वा राजा देवयानीं परिणिनाय । अथ कृतमंगलविधीराजा प्रत्यग्ररचितोत्सवो राजधानीं प्रविवेश ।

अथ काले सा वरवर्णिनीदेवयानी नराधिपाद् यदुं तुर्वसुं चेति द्वौ सुता ववाप । ततो दिनेषु गच्छत्सु प्रत्यग्रयौवनारंभनिर्भरा ऋतुमतीशर्मिष्ठा निर्जनेऽशोकवनिकाभ्याशे स्थितंराजानमभ्येत्य प्रोवाच । पृथ्वीनाथ ! त्वं मम सख्याः पतिरसि तस्मान्ममापि धर्मतः पतिः । प्रभो ! ऋतौ प्रार्थितः प्रथमः प्रणयोऽयं मम सर्वथैवपूरणीयः । निशम्यैतद् राजा प्राह । सुंदरि ! पुरा काव्यः कन्यादानसमये शर्मिष्ठा न सेवनीयेति मम संविदमकरोत् । सुभ्रु ! तच्छापादहंबिभेम्यन्यथा तु पूर्णेन्दुवदनां त्वां को नहि बहुमन्यते ? एवमाकर्ण्य चरणाग्रेण भूमिंलिखंती राजीवलोचना सा दैत्येन्द्रतनया भूपालमभ्यधात् । कृपानाथ ! विवाहे स्त्रीषु नर्मोक्तौ प्राणभ्रंशे तथा धनक्षये सद्भिः सत्यं न गण्यते । साक्षिषु सत्यं प्रशस्यत इति सविनयं प्रार्थितोराजा स्वेदाम्बुसंसृष्टकपोलाधरपल्लवां लावण्यवतीं तां भेजे । चातुर्येणकृतंकार्यंचिरंसुगुप्तं तिष्ठति । न केनाऽपि ज्ञातुं शक्यते ।

एवं तयामृगदृशा सह गूढं रममाणो राजा द्रुह्युं अनुं पुरुं चेतित्रीनात्मजान प्रापत् । अथ कदाचिदुद्याने कांतिलिप्तदिगंतरान् भूपतुल्याननान् तान् समालोक्य शंकिता भार्गवकन्यका कस्य यूयमिति पप्रच्छ । ततस्तेंऽगुलिसंकेतेन दूरस्थं तं नृपं दर्शयामासुः । ज्ञात्वैवं कोपानलाक्रान्ता देवयानी निर्मक्षिकं पितुर्गृहं कृत्वा सर्ववृत्तान्तं

तस्मै निवेदयामास । अथ क्रुद्धः काव्यस्तामेव जायामनुसरंतं नृपं सान्त्वयितुं जराजीर्णोभवेति शशाप । ततो राजा शापं निशम्य प्रणामानुनयादिभिर्भृगुसूनुं प्रसादितवान् । ततस्तुष्टोभार्गवः प्राह । राजन् ! पुत्रे जरां निक्षिप्य पुनर्यौवनमवाप्स्यसि । अथगच्छतिकाले राजा पुत्रानाहूय क्रमादपृच्छत् । पुत्रकाः ! जरया यौवनं मह्यंदीयतामित्याकर्ण्य तेतम् प्रत्यवदन् । तात ! जरार्दिताद् गतप्राणो धन्यः । शरीरभारवाहो हि जरी सर्वापदामास्पदं लोकेगण्यते । एवं स चतुर्भिर्यदुमुखैः सुतैः प्रत्याख्यातोनृपो यूयं न राज्यार्हा इत्यशपत् । ततो येये शप्ताआसन् तेते पापवंश्या अभूवन् । अथ पार्थिवः पूरुणावितीर्णमवाप्यतारुण्यं संभोगतत्परः सहस्रमब्दानां सुखी बभूव । ततः पूर्णेकाले परितुष्टो राजा निजंयौवनं राज्यं च पूरवे दत्त्वा वानप्रस्थाश्रमं समाश्रयत् । अयं पूरोराजवंशः पौरवो यदोश्च यादवोऽभवत् । पितृशापाच्छेषाणां वंशधरा म्लेच्छशकयवनादयोऽभूवन् ।

ततो नाहुषः परेणतपसा स्वर्गमारुह्य ब्रह्मलोके लोकपालसभासु च चिरमुवास । अथ कदाचिद् देवेन्द्रः कथान्तरेनृपमपृच्छत् । राजेन्द्र ! कैःपुण्यैर्विराजसे ? केन च तपसा समोऽसि ? निशम्यैतत् सोऽब्रवीत् । देवराज ! सुरसिद्धर्षिगन्धर्वनृपभोगिषु यशसा तपसाऽपिवाऽऽत्मनस्तुल्यं नाऽहं पश्यामि । समाकर्ण्यैतद्वाक्यं मघवोच्चयागिराऽधः पतेत्याह । राजन् ! सर्वभूताऽवमानेन तत्तेतपःक्षीणतां गतम् । प्रहर्षक्रोधविस्मयैर्महतामवमानेन च सुदुर्णयैर्यशांसीव तपांसि क्षयमायांतीतिशतक्रतुगिरा क्षिप्रं राजा देवलोकादपप्तत् । ततो विध्वस्तवदनच्छायोभूपालोऽयाचत सत्संगम् । तच्छ्रुत्वा सुरेन्द्रः प्राह । तथास्तु । शोभनोऽयंविचारः । ततो राजा दौहित्राणां क्रतुक्षेत्रेऽधोमुखो दिवो निपपात । तत्र प्रतर्दनो वसुमनाः शिविरौशीनरोऽष्टकश्चेते सूर्यसंकाशं पतंतं तं विलोकयामासुः । ततस्तेष्वष्टकस्तमपृच्छत् । देव ! दीप्तानलद्युतिस्त्वं कः ? नैवंविधानां महसामाकरोजात्वल्पकः ? इत्यष्टकेनारात् पृष्टः स निजं नाम निवेद्य जन्मवृत्तान्तं दिवोभुवि च पतनं वर्णयामास । अथ दौहित्रेण संसारतत्वं पृष्टः सर्ववित् सोऽस्पृष्टभूमिः सत्संगादनुभूतमभाषत । वत्स ! पुण्यपाथेयोनरस् त्रिदशमन्दिरमारुह्य कलाकेलिकलं दिव्यं शुभफलं भुंक्ते । ततः क्षीणपुण्योऽसौ क्षपितार्थइवेश्वरः कामी वेश्यागृहादिव स्वर्गादेको निष्कास्यते । घोरा गृध्रगोमुखा महारवाश्च राक्षसा दिवःपतन्तं पुनः पुनः समुद्भूतं च तं भक्षयंति । एवं बहूनि वर्षाणि तैर्भुक्तो बहुधेरितः स्वकर्मानुगतश्चिन्मात्रो देहसंगमंयाति । ततो वासनासंपृक्तोदेही अव्यक्तशक्तिभिर्भूतैः शब्दैराक्रान्तोवायुरिव गर्भं प्रसर्पति । परापमानी च पापो नीचयोनिषु जायते । पुण्यपरश्च नरः पुनः स्वर्गगतिं याति । तत्रादौ ब्रह्मचारी

ततो गृहस्थोऽनंतरंवानप्रस्थोऽन्ते च न्यस्ताखिलक्रियो निर्वैरोनिर्ममः शान्तश्च परमंपदं प्रयातीति निगद्य तत्पुण्यसंस्पृष्टस्तैरेवसहितो दिवं प्रययौ । एवं ते पंचाऽपि पार्थिवा दिव्यधिष्ण्यैरारूढा महोत्साहा उदिताः पंचसूर्याइव व्यराजन्त । तेषां मध्ये च तपोदान-कीर्तिसत्यक्षमाभिः शिविरौशीनरो राजाधिकमैश्वर्यमासाद्य विरेजे ।

एवमाकर्ण्य राजा स्ववंशावलीं पृष्टवान् । ततो वैशंपायनोऽब्रवीत् । वैवस्वतमनोर्वंशे इडः । इडादायुः । आयोर्नहुषः । नहुषाद्ययातिः । ययातेः पूरुः । पूरोर्जनमेजयः जनमेजयात् प्राचीनधन्वा । प्राचीनधन्वनः संयातिः । संयातेः शम्पातिः शम्पातेः सार्वभौमः । सार्वभौमादयुतनः । अयुतनादक्रोधः । अक्रोधनादेवातिथिः । देवातिथेःपदः । पदादृक्षः । ऋक्षान्मतिनारः । मतिनारात्तंसुः । तंसोर्नलिनः । नलिनात्त्रपुः । त्रपोर्दुष्यंतः । दुष्यंताद्भरतः । भरताद्भुमन्युः । भुमन्योः सुहोत्रः । सुहोत्राद्धस्ती । हस्तिनो विकुण्ठः । विकुण्ठादजमीढः । अजमीढात् संवरणः । संवरणात्कुरुः । कुरोरनश्वा । अनश्वनः परीक्षित् । परीक्षितोभीमसेनः । भीमसेनात् प्रतीपः । प्रतीपाच्छंतनुः । शंतनोर्विचित्रवीर्यः । विचित्रवीर्यात्पाण्डुः । पाण्डोरर्जुनः । अर्जुनादभिमन्युः । अभिमन्योः परीक्षित् । परीक्षितोजनमेजयस्त्वम् । ततआयुष्मान् । आयुष्मतः शतानीकः । शतानीकात् सहस्रानीकः । अयमश्वमेधेन दिवमारुरोह ।

——:-०-:——

पुरा ब्रह्मलोके राजर्षिभिः सह मनुवंश्यो यज्वा महाभिषोऽतिष्ठत् । तत्र मूर्त्तामंदाकिनी जलजजन्मना हंसशुभ्रेणचामरेण सभासीनं पितामहं सिषेवे । अथैकदा मृगलोचनायास्तस्याः फेनमालाधवलोद्दुकूलपटपल्लवो बालानिलाधूतो विचचाल । ततः संभ्रमालोलकूचणद्वलयमेखलान्तां दृष्ट्वा सर्वेदेवास्तु क्षणमवाङ्मुखा वैलक्ष्यमगमन् । केवलमेको महातिथिः कदलीगर्भनिभप्रभां तां दृष्ट्वा निमेषदोषशून्येनचक्षुषा समुदैक्षत । ततः कोपाद् ब्रह्मणाशप्तः स भुवि निपतन् प्रतीपभूपालस्य पुत्रोभूयासमित्याचिन्तयत् । तस्मिन्नेवावसरे ब्रह्मलोकतो निवर्त्तमाना व्योमगामिनीगंगा विषण्णवदनाँ स्तान् वसून् दृष्ट्वा

( १ ) राजा हस्ती हस्तिनापुरमावासयामास । केचिद् हस्तिनः पर्यायोऽयंगजशब्दोऽतस्तन्नागजननगरस्यप्रतिष्ठाजातेतिकथयंति । गजनंगजनीतिजनाव्याहरंति ।

( २ ) अजमीढादेव अजमीर इति केचित् । अपरेऽजपालादजमेरुरितिसमर्थयंति ।

शोककारणमपृच्छत् । ततस्ते गतविषः प्रोचुः । मातः ! वसिष्ठेन शप्ता वयं महीतलेऽवतीर्य प्रातिपीयस्यशंतनोः पुत्रतां यास्यामस्तत्र कारुण्याज् जननीभवितुमर्हसि । अपरंच जातानस्मान् जले क्षिप्ता नो विमुक्तिंविधत्स्व । देवि ! सायासमापदावासं च मानुषंजन्म कःसहेत ? तच्छ्रुत्वा जान्हवी प्राह । सर्वमेतदहंकरोमि । किन्तुभवन्मध्यादेकतमस्तु तत्राऽवश्यं तिष्ठतु । नाऽहंस्वावतरणंसर्वथाविफलीकर्त्तुमुत्सह इति गंगावचः श्रुत्वा प्रहृष्टास्तेवसवोऽवदन् । भगवति ! बलवीर्यगुणौजसामस्माकमष्टमांशेन तवात्मजोऽखण्डब्रह्मचारीभवितेतिसंविदमादाय यथागतं जग्मुः । ततः कांतितरंगिता साक्षाद्भगवती गंगाऽवतीर्य तटान्ते चिरजापिनः प्रतीपभूपालस्य दक्षिणमूरुमारुह्य भजमामित्यभाषत ।

एवमाकर्ण्य राजोवाच । भद्रे ! नाऽज्ञातां नाऽवर्णां न च परस्त्रियं व्रजामीति सर्वदा मम व्रतं विद्धि । अपरंच त्वं दक्षिणांकोपविष्टाऽस्यतो मे स्नुषा तु भवितुमर्हसि । देवि ! पदमेतदपत्यानान् दयितास्पदंतुवाममिति धर्मशास्त्रिणः समामनंतीतिराजवचनमाकर्ण्य तथास्त्विति च व्याहृत्य त्रिमार्गगा कांतिपूरोर्वैस्तटस्थलीं पूरयन्ती यथागतंस्थानं प्रययौ ।

अत्रान्तरे ब्रह्मशापाद् व्रतवतः शान्तवयसः प्रतीपस्य शंतनुः सुतोऽभवत् । अथैकदाप्रतीपनृपो युवराजं शंतनुं प्राह । वत्स ! पुरा गंगातटेमयैकादिव्ययोषित् स्नुषार्थमङ्गीकृता । यदिबचनबद्धा सा त्वां कदाचिदुपसर्पेत्तदाऽवश्यं सा परिणेयेति समादिश्य सपत्नीकोराजा तपोवनं जगाम । तत्रयोगेनतनुंत्यक्त्वास्वर्गमगात् ।

ततो जनवल्लभो शंतनुर्हस्तिनापुरे राजा बभूव । सोऽथ गंगापुलिने विचरन्नेकदा कार्तिकीचन्द्रवदनां देवाङ्गनां दृष्ट्वा पितृवचनं सस्मार । ततस्तामुपसृत्य प्रोवाच । रंभोरु ! पाणिपीडनेन मामनुगृहाण । तच्छ्रुत्वा सा प्रोवाच । राजन् ! यथेष्टकरणप्रत्याख्यानावधि हि ते संगमोभवतु । ततो राजातथास्त्वितिप्रतिज्ञाय तां पर्यणयत् । ततो नवोद्याने तयासह रममाणो नरपालः प्रयातमपिदीर्घकालं नाज्ञासीत् । अथ सा शापच्युतान् क्रमाजातान् सप्तवसून् यावज्जले क्षिप्त्वा जघान । तावत्तु राजा न किंचिदुवाच । परं यदाऽष्टमं सुतं नीत्वा हन्तुमैच्छत्तदा कोपाविष्टो राजा प्रोवाच । आःपापे ! किमेवंकरोषीतिनिरुद्धा साऽऽह । भूपते ! अलमनेन निरोधेन । समयात् त्वं विचलितोऽभवस्तेनाऽहं गच्छामि । स्वस्त्यस्तुते । महीपाल ! त्रिपथगाऽहं । वसिष्ठशापात्पतितवसून्समुद्धर्तुमत्राऽवतीर्णा । पुरा विहाररसिकाः प्रियासखाश्चाष्टौवसवो वसिष्ठाश्रमे चेरुः । तत्र चरंतींकामधेनुं दृष्ट्वा तेष्वेकतमो द्यौर्वसुर्निजजायामभाषत । प्रिये ! आपिजानासि मुनिधेनुरियम् ? यत्पीयूषक्षीरेण मर्त्योऽप्यमर्त्यतामायाति । निशम्यैवं सा वसुपत्नी

दयितं प्राह । कान्त ! उशीनरदुहिताऽजिरावती मर्त्यलोके मे बहिश्चिरंजीवितम् । तदर्थं-क्षीरमिच्छामि । बलादेतां सुरभिं हरेतिवाक्यमाकर्ण्य स्मरमोहितस्तथेत्युक्त्वा बलात्ता-मपाहरत् । प्रायः स्त्रीजितानांहिबुद्धयस्तेजसासहनश्यंतीतिसत्यैषालोकभणतिः । ततो मुनिःकोपान् मर्त्येषु वो जन्मभवत्वित्यशपत् । ततः शापंश्रुत्वा ते प्रोचुः । महात्मन् ! किमेकस्यापराधेन सर्वमस्मद् वृन्दं वाच्यतां याति ? कृपया न्यायमवलंबस्व । तच्छ्रुत्वा मुनिः प्राह । वसवः ! वः सप्तानांतु गर्भावधिरयंशापः । परं यो गोहर्ता द्यौरस्ति । स चिरं मनुष्ययोनौ मुनिशापानुसारेण स्थास्यति । राजन् ! सप्त तु मया जलप्रवाहद्वारा शापान्मोचिताः । एषोऽष्टमोवसुस्तव सुतो द्यौश्चिरंजीवत्वित्यभिधाय सपुत्रागंगान्तर्दधे । ततः कालेन सा जान्हवी पुनरेत्य संस्कृतं शस्त्रास्त्रकोविदं च तं सुतं नृपाय दत्वा कृतकृत्या बभूव । अथ शंतनुरपि सर्वं दैवाधीनं मत्वा तं यौवराज्येऽभिषिषेच । ततो युवराजे मंत्रिषु च राज्यभारं निक्षिप्य शंतनुर्गंगाविरहितो बहून् मासानेकान्ते निनाय ।

अथैकदा तपस्यतोगौतमस्य शरद्वतोर्विघ्नाय भीतः पुरंदरः सुरकन्यां प्राहिणोत् । ततः स्मरनिर्धूतधैर्यो मुनिःप्रफुल्लकमलेक्षणान् तां जलपदीं दृष्ट्वा शरमध्येवीर्यमवासृजत् । ततःकाले शरमध्यात् कृष्णाजिनयुतं सायकांकं मिथुनमजायत । ततो मुनिर्वैराग्यमा-पन्नो यदातान्मिथुनं परित्यज्य तपश्चर्यार्थमन्यास्मिन्वनेगन्तुमुद्यतस्तस्मिन्नेव समये मृगयार्थीशंतनुस्तत्रा जगाम । ततः स करुणाबुध्या तन्मिथुनं नीत्वा स्वनगरमानिनाय । ततो मंत्रिभ्यः समर्प्य तयोःपालनं पोषणंच कारयामास । अथ महर्षिभिश्च कृतसंस्कारौ कृपः कृपीच लोके विख्यातिमवापतुः । ततोऽसौकृपो जामदग्न्यइवधनुर्वेदनिष्णातत्वम-धिगम्य कौरवाणां शिक्षकोऽभवत् । कृपीचद्रोणपत्नी बभूव ।

अथैकदा शंतनुर्मंजुगुंजद्विहंगमाः कालिन्दीतटोपान्तवनस्थलीः पश्यन् विचचार । तत्र प्रफुल्लोत्पलामोदसोदरं दिव्यसौरभमाघ्राय तत्कारणमन्विष्यन् दूरंगतः कलानिधेः कलामिव कान्तिमतीं कन्यां ददर्श । अथ तेन परिचयं पृष्ठा सा प्रोवाच । महानुभाव ! सत्यवतीनामदाशराजसुताऽस्मीत्याकर्ण्य धीरोऽपि राजा स्मरविवशो बभूव । ततस्तामेव-ललनां ध्यायन् स कैवर्तपतिमभ्येत्यात्मार्थमयाचत । एवमाकर्ण्य दाशराजः प्रोवाच । भूपाल ! सर्वथैवमाननीयंतववचनम् । यद्यस्यांजातस्तेसुतोराज्यभागीभवेत्तदा-त्वहमेनां तुभ्यंदातुंशक्नोमि । नाऽन्यथा नमेऽन्तरात्मा प्रसीदति । निशम्यैवं शंतनुर्धुर्यं देवव्रतं सुतं विचिन्त्य तद्वाक्यमनादृत्यैव हस्तिनापुरं प्रययौ । ततो मन्मथाक्रान्तः स हृदयस्थितां तामेव ध्यायन् गाथामर्धस्मृतामिव निद्रां नलेभे । ततो धैर्यसागरो देवव्रतः

स्वयमेकान्ते चिन्ताग्रस्तं तमभ्युपेत्य प्राह । तात ! यदि गोप्यं न स्यात्तर्हितु शोकसंताप-कारणं वदेति गांगेयवचनमाकर्ण्य राजोवाच । वत्स ! त्वमेवैकोमम वीरसुतः । नैकनेत्रं नेत्रं नैकपुत्रश्चपुत्रः । लोके एकपुत्राणां शोकसंतानक्षयजं भयंनाऽपैति । अपरंच सर्व-गुणाधिके त्वयि कुलोचिते पुत्रे जाते कृतकृत्यस्य मे पुनर्दारसंग्रहो विडम्बनेतिवाक्यमा-कर्ण्य गांगेयो मंत्रिगिरा दाशकन्याहृतमानसं पितरं विवेद । ततः स यमुनाकूलवर्तिनं दाशराजं गत्वा तेन च पूजितो जनकार्थं तां सुलोचनां कन्यां ययाचे । अथ तस्य तद्व-चनमाकर्ण्य कैवर्तराजोऽब्रवीत् । वीर ! त्वमेवचिन्तय । यद् विद्यमानेत्वयि मे दौहित्रः कथंनृपो भवेदिति दाशराजेनोक्ते शूरः शान्तनवोऽब्रवीत् । भद्र ! नाहं राज्यलोभी । पितृहिताय यावज्जीवं ब्रह्मचर्यव्रतंपालयिष्यामीतिमे सत्यः समय इति ब्रुवाणं गांगेयं पुनः कैवर्तराजः प्रोवाच । सत्यसंध ! प्रतिज्ञैषा तावदनश्वरी । वीराणां त्वत्सुतानांतु राज्यं को वारयिष्यति ? एवमाकर्ण्य देवव्रतोऽब्रवीत् । दाशराज ! मत्सुतभयं तु ते हृदयाद्व्य-पैतु । अहमामरणं ब्रह्मचर्यव्रतं पालयन् न कदापि दारसंग्रहं करिष्यामीति राजपुत्रेणोक्ते गगनात् पुष्पवर्षिणोदेवा ऊचुः । भीषणेयं तवप्रतिज्ञाऽतस्त्वंभीष्म इति प्रसिद्धोभविष्यसि । ततो भीष्मो निःशंकचेतसा दाशराजात्तां कन्यामानीय राज्ञे समर्पयामास ।

अथाऽसौ नृपः पुत्रेण वितीर्णां सत्यवतीमवाप्य तत्प्रतिज्ञां निशम्य च लज्जानतमुखोऽ-भवत् । ततस्तस्य पितृभक्त्या संतुष्टोऽयाचिताय तस्मै स्वच्छन्दनिधनोभवेति वरं प्रादात् ।

अथ सत्यवती काले वेणुवल्लीमौक्तिकमिव किंवा प्राची रजनीपतिमिव राजदारकं सुषुवे । ततस्तस्मिन् चित्रांगदे यौवनमुपेयुषि सत्याऽपरंबालकं प्रासूत । एवं विचित्रवीर्ये संपूर्णविग्रहे राजा मखसोपानपंक्तिभिर्दिवमारुरोह । ततो भीष्मेण दत्ताभिषेकोवीरश्चित्रां-गदोऽरिणा गन्धर्वेणाहतो रणे युवैव वीरगतिमवाप ।

अथ देवव्रतो विचित्रवीर्याय राज्यं प्रादात् । सतां सत्प्रक्रियाः क्रिया नापत्स्वपि सीदन्ति । ततो गांगेयः स्वभ्रातृहितार्थं स्वयंवरे भूपालन् विजित्य काशिराजसुताश्चानिनाय । ततस्तासु ज्येष्ठामम्बामन्यमनस्कां ज्ञात्वा भीष्मो ज्वलिताग्निशिखामिव सद्यस्तां तत्याज ।

अथ विचित्रवीर्योऽम्बिकामम्बालिकां च परिणीय प्रौढानंगतरंगितोऽहर्निशं तद्र-सार्द्रहृदयो बभूव । ततोऽतिस्त्रीप्रसंगाद् राजयक्ष्मणाग्रहीतो जनानुरागसंध्यांकः स राज-शशी सहसैव कालमेघाच्छन्नो भूत्वालोकाच्छोकसागरेन्यमज्जयत् ।

एवं विचित्रवीर्ये दिवंयाते पुत्रशोकातुरा सत्यवती गांगेयमुपसृत्य वाष्पगद्गदं प्रोवाच । पुत्र ! क्रूरकालेनाऽयं शंतनोर्वंशशाखाछिन्नः । हा ! किमहंकरवाणि । क्वागच्छानि ।

अत्र यत् कर्तव्यं तत् कुरुष्व । भ्रातुर्विचित्रवीर्यस्य क्षेत्रे स्वयं वंशप्रतिष्ठामाधत्स्व । दारसंग्रहं वा समाचर । एवमाकर्ण्य सत्यावचनमविलुप्तधैर्यो भीष्मः प्रोवाच । मातः ! सत्यविप्लवान्मरणं मे श्रेयः । त्वद् विवाहसमये या प्रतिज्ञा मया कृता तामेकाग्रमानसोऽहं सततं स्मरामि । मानिनो जीवितं त्यजंति । परं न मर्यादाम् । देवि ! कश्चिद् ब्राह्मणः समभ्येत्य नो वंशप्रतिष्ठामाधत्ताम् । पुराऽपि रामहते क्षत्रे बहवो नृपा द्विजैर्जाताः । यथा बलिभूपतेर्वल्लभायां सुदोष्णायां औतथ्येन मुनिना नृपोऽङ्गाख्यो जनितः । ततस्तयैव विसृष्टायां शूद्रायां स मुनिः कुक्षिवदादीनेकादशात्मजानजीजनत् । एवं भीष्मवचः श्रुत्वा सत्यवती शनैर्जगाद । पुत्र ! त्वमसि देवकल्पः । अतोऽहं तुभ्यमेकं रहस्यं निवेदयामि । ममाऽपि पराशराज्जातः कानीनः सुतोऽस्ति । स कृष्णद्वैपायन इति ख्यातो यमुनाद्वीपे निवसति । सम्प्रति स्वकुलरक्षार्थं तमहं स्मरामि । स नूनं मयार्थितोऽत्र समागत्य वंशं पुनः प्ररोहश्रियं विधास्यति । तच्छ्रुत्वा भीष्मस्तथास्त्विति प्रत्यवदत् । ततः सत्यवती भीष्मानुमत्या पाराशर्यं सस्मार । सोऽयं ध्यातमात्र एव निजतेजश्छटापुंजपिंगश्मश्रुविलोचनोऽजनद्युतिर्वेदव्यासः समाययौ । ततो वात्सल्यात् प्रस्नुतस्तनी माता पुरोधसा पूजितं तं सर्वं वृत्तान्तं श्रावयामास । अथ भीष्मस्तत्रागत्य प्रोवाच । धर्मज्ञ मुने ! मद्वचनाद् भ्रातृविचित्रवीर्यक्षेत्रे संतानोत्पत्तिं कुरु । प्रयोजनायास्मै त्वमिदानीमाहूतोऽसि । इयमराजका भूमिरकर्णधारा नौरिव वर्तते । व्यासदेव ! नृपवर्जिते हि राष्ट्रे धर्ममर्यादाऽवसीदतीत्यभिधाय विरराम । निशम्यैवं गांगेयवचनमोमिति द्वैपायनो व्याजहार । ततः सत्या ज्ञातवृत्तामाम्बिकां पूर्वं तस्मै व्यसर्जयत् । अथ सा काशिराजसुता कृष्णं पिंगललोचनं च तं मुनिवरं दृष्ट्वा भीता नेत्रे न्यमीलयत् । ततस्तत्सकाशादायातं मुनिं सत्याऽपृच्छत् । व्यास ! अप्यस्यां कुलोचितः पुत्रो भविता ? तच्छ्रुत्वा मुनिः प्राह । देवि ! भविष्यत्यस्यां बहुपुत्रस्तनयः । परं स मातृदोषादांध्यमुपैष्यति ? ततस्सोवाच । किमन्धेनेति वाक्यमाकर्ण्य मातुरभ्यर्थनया व्यासोऽम्बालिकां समभ्यायात् । अथ साऽपि चण्डांशुमिव दुष्प्रेक्ष्यमचलामिवाऽनाधृष्टं च तं तपोनिधिमवलोक्य पाण्डुरमुखी बभूव । ततः सत्या समभ्येत्य पुनः पृष्टो मुनिरवदत् । जननि ! अस्याः पाण्डुवदनायाः पुत्रोऽपि पाण्डुर्भविता । ततो मात्रा पुनरभ्यर्थितो मुनिरम्बिकाकूटनिर्दिष्टस्त्रीसंगमात् तृतीयसुतमसृजत् ।

अथाम्बिका काले धीनिधिमन्धं धृतराष्ट्रमसूत । अम्बालिका च यशःकर्पूरपाण्डुं पाण्डुमजीजनत् । ततो माण्डव्यशापेन धर्मः शूद्रयोनावुत्पन्नो विदुर इति प्रसिद्धो बभूव ।

अथ जनमेजयेन पृष्टो वैशंपायनो माण्डव्यशापकारणं प्रोवाच । पुरा तपस्यतो

माण्डव्यस्यान्तिके भीताश्चौराधनं प्रक्षिप्य क्वापि पलायिताः। ततोऽनुसंधानपराः पुररक्षिण आश्रमे धनं विलोक्य स मौनव्रतस्तैः पृष्टो यदा किंचन नोवाच। तदा ते निग्रहार्थं तं पार्थिवान्तिकं निन्युः। ततः स महात्मा शूलस्थितोऽपि भगवच्चिन्तनंकुर्वन्नास्ते। एतस्मिन्नेवान्तरे समुत्पतन्तः खगरूपामुनयः शुचा शूलस्थं तमपृच्छन्। भगवन्! कस्य कर्मणोनिष्ठामिमांयातनामाप्तोऽसि ? तच्छ्रुत्वा सोऽब्रवीत्। महाशयाः! आत्माऽत्मनैव पुराविहितं कर्मफलं समश्नुते। श्रुत्वैवंवचश्चकितो नृपस्तं पुनः प्रसादयामास। अथाऽऽकृष्यमाणं शूलाग्रं यदा तस्य न निर्ययौ। तदा स विकृत्तां तत्कोटिंबहन्नन्तश्चचार। ततः प्रभृति लोकेऽसावणीमाण्डव्य इति प्रसिद्धोऽभवत्। ततः कुपितोऽसौ सभासीनं धर्मं गत्वाऽपृच्छत्। धर्मराज! वद। शूलाधिरोहणं मम कस्य कर्मणः पाकोऽयम्। एवमाकर्ण्य धर्मोऽब्रवीत्। ऋषे! पुरा त्वयैकापुत्तिका पुच्छे तृणाङ्कुरैर्विद्धाऽतिपीडितामभार। तस्यकर्मणः पाकोऽयमित्यवगच्छ। ततोमुनिराह। अहोधर्म! त्वया स्वल्पापराधस्य मम सुदुःसहोदण्डः कृतस्तस्मात् त्वं शूद्रयोनौभवेत्यशपत्। मयात्वेतद् वाल्यात् कृतम्। बालाहि आचतुर्दशवर्षपर्यन्तादपातकाभवंतीति लोकसत्कृतास्थितिः। एवं मुनीन्द्रेण शप्तः स धर्मः शूद्रतां गतः। बिदुरो दीर्घदर्शी धर्मज्ञश्चासीत्। एवमुक्त्वाऽन्तर्हितेव्यासे कौरवास्ते प्रजोत्सवैः सह व्यवर्धन्त। तेषामग्रजो बलवान् प्रज्ञाचक्षुर्धृतराष्ट्रो बभूव। सोऽम्बिकेयो गान्धारराजसुबलकन्यामुपयेमे। पतिव्रतपरायणा सा पतिमन्धंविदित्वा सुपट्टेन नयनेबबंध। एतादृशी मनस्विनी लोके न भूता न च भविष्यतीति पुरावृत्तज्ञा व्याहरन्ति। अथ सा भगवन्तं नारायणं समाराध्य विशालबलतेजसां पुत्राणां शतमवाप।

ततो ज्येष्ठानुमत्या पाण्डुर्दुष्यन्तभरतोपमो राज्यं शशास। अत्रान्तरे राजाकुन्तिभोजः शूरसेनाद्वसुदेवानुजां कुंतीं पुत्रींकृत्वा जग्राह। तस्यगृहे सा शुक्लपक्षे शशिकलेव शनैः शनैर्ववृधे। अथैकदा वंचनैकरसो दुर्वासाः कुंतिभोजस्य सद्मन्यागत्य तस्थौ। राजा तस्य परिचर्यार्थं कुंतीं समादिशत्। ततः सा विधिवत्तमुपचचार। अथैकदा स मुनिः कुंतीभक्तिजिज्ञासुः सन्नभाषत। बाले! यावदहंस्नात्वोपैमि तावत्त्वं पायसं पच। ततः स ऋषिः स्नात्वा द्रुतं भोक्तुमाययौ। अथ कुंती तदन्नपूर्णां पात्रीमढौकयत्। ततोऽतितप्तेनान्नेन ज्वलन्तीमिव तां मुनिर्हस्तग्रहायोग्यां मत्वा कुन्त्याः पृष्ठे दृष्टिमदात्। साऽपि मुनेराशयं ज्ञात्वा पृष्ठेन तां पात्रीं दधौ। ततः स तु स्वेच्छं वुभुजे। परं कुन्तीपृष्ठं दग्धमभवत्। एवं दह्यमानामपिनिर्विकाराननां तां विज्ञाय तुष्टोमुनिस्तस्यै त्रिदशसाक्षात्कारकं विधिमुपदिश्य तपोवनं प्रायात्। अथगतेमुनिवरे कुंतीप्रत्यहंमंत्राञ्जजाप सिद्धिंचालभत।

ततः कदाचित् सौधस्था नवयौवनशालिनी कुंती मंत्रपरीक्षार्थं सहस्रांशुमाजुहाव । अथ ध्यातमात्रः स भगवान् योगवपुषा तामभ्येत्य किमर्थमहमाहूतोऽस्मीत्यभाषत । तच्छ्रुत्वा कम्पशिंजानमेखला सलज्जाकुंती प्रोवाच । भगवन् ! मुनिमंत्रपरीक्षार्थं ध्यातोऽसि । करुणासिन्धो ! कृपांकृत्वा मे बालचापलंक्षमस्वेत्यभिधाय विरराम । एवमाकर्ण्याऽमोघदर्शनोभास्करः प्रोवाच । चारुहासिनि ! त्वदर्थमायातं मां सेवस्व । कुरंगाक्षि ! त्वयासहमेसंगमोऽनुग्रहो न दोषः । लोके निष्फलाव्हानसदृशी परावमानमही न विद्यते । एवं बहुशोविज्ञापिता सा रविसंगमंगीचकार । ततः सहस्रांशुप्रसादादविलुप्तकन्यकाभावा सा भास्वत्कनककुंडलं कर्णं सुतं प्रासूत । अथ सा बन्धुभयात् तं शिशुं मंजूषायांधृत्वा सलिले प्राऽक्षिपत् । ततोऽसौ यदृच्छयागतेन सूतेनाधिरथेन प्राप्तस्तद्भार्यया राधया च संवर्धितः । वसुनासहाधिगतस्तेन वसुषेणाभिधो बभूव । ततः स जामदग्न्याद् धनुर्वेदशिक्षामधिगम्य भुवनविदितो धनुर्धरोऽभवत् । सूर्योपस्थानसमये तस्य किमप्यदेयं नासीत् । अथगच्छताकालेन स्वयंवरे सर्वाङ्गसुंदरीकुंती पाण्डुनरेश्वरं पतिं वव्रे । ततो देवव्रतशौर्यप्रभावात् पाण्डुर्लावण्यवाहिनीं मद्रराजसुतां माद्रीमपि द्वितीयां महाराज्ञींलेभे । एवं ताभ्यां तरलनेत्राभ्यां रममाणो राजा प्रीतिरतिभ्यांयुक्तो मनोभव इव व्यराजत । ततो महाधनुर्धरः पाण्डुर्दिक्षु भूपालान् विजित्य तेभ्यश्चकरं समवाप्य ययातिशर्यातिनृगनाभागतुल्यतामयासीत् । अथ भीष्मो देवकमहीपतेः कन्यां पारशवीं समादाय वंशविवृद्धयेविदुराय प्रादात् । अत्रान्तरे व्यासवाक्याद् धृतराष्ट्रवल्लभा सती गांधारी संवत्सरयुगं गर्भमुवाह । ततः पुत्रार्थिनी जातमत्सरा च सा चिरधृतंगर्भं मुष्टिभिस्ताडयामास । तस्मिन्नेव समये महिष्या उदरान् मांसपेशी सद्योऽच्यवत । अथ व्यासवाक्याच् छीतवारिणा संसिक्तास्तेंऽगुष्ठमात्राश्चैकोत्तरशत मांसखण्डाः पृथक् पृथग् घृतकुंभेषुरक्षिताः कालेन कान्तवर्चसोबालका बभूवुः । तेषां ज्येष्ठो दुर्योधनस् ततो दुःशासनविकर्णदुःशलादयो राजकुमारा एकाच दुःशलाभिधा कन्यकासमभवत् । ततस् तेषु जातेषु घोरा दुर्निमित्तपरंपरा विलोक्य लोकाः संसारक्षयकारिणीं शंकां मेनिरे ।

अथैकदा मृगयाशीलो धनुर्धरः पाण्डुर्वने विचरन् शरेण सुरतासक्तं मृगरूपं किंदमं मुनिं विव्याध । ततो दयितारतपर्यन्तजीवितोमुनिर्ममबधकृत् त्वमप्येवमकालेमृत्युमवाप्स्यसीतिराजानमशपत् । ततो दुःखानलाहतः पाण्डुः साम्राज्यं त्यक्त्वा वधूभ्यां सह वने वसन् मुनिजनानुमत्या यमनियमादिपरायणो बभूव । अथगच्छताकालेन स राजा मुनिमण्डल्यासहैव शतशृंगाभिधं तपोवनं गत्वा तत्र मुनिजनसंसर्गात् शमसंतोषपीयूष-

विषदाशयो बभूव । अथैकदा स चिन्ताकुलितो विजने कुंतीमाह । सुंदरि ! याजिनोऽप्यपुत्रस्य गतिः स्वर्गे नाऽस्तीति श्रूयते । तस्मान्मे क्षेत्रजसुतमुत्पादय । नृपात्मजे ! पुराऽपि क्षत्रक्षेत्रे ब्राह्मणेभ्यो नृपा जाता इत्याकर्ण्यते । निशम्यैवं पत्युर्वचः सुलोचना कुंती प्राह । राजन् ! नैतन्ममोचितम् । अहं तु भवदन्यं पतिं मनसाऽपि न चिंतयामि । आर्यपुत्र ! त्वत्तएवमे पुत्रो भविष्यति । पुरा पुरुवंशे व्युषिताश्वो नाम राजा बभूव । स यज्वाऽपि नित्यं दयितारतो यक्ष्मणा क्षयमगात् । ततो राजमहिषीभद्रा प्रियतमं व्यसुं ज्ञात्वापि विलपंती यदा तं न तत्याज । तदा नभोभवा वाणी प्रोवाच । भद्रे ! माजीवितंत्यज । गताऽसुनाऽनेन रहः संगच्छ । सतीधर्मप्रभावेण त्वमवश्यं तनयानवाप्स्यसीत्याकर्ण्य सा तथैव व्यधात् । ततस् तस्य महीपते रेव सकाशात् त्रीन् साल्वांश्चतुरश्च मद्रान् सुतानवाप । कृपानिधान ! अनन्यधियां सतीनां परमंदैवतंपतिरेव । एवमाकर्ण्य कुंतीवचनं पाण्डुराह । महाभागे ! सत्यमेतत् । पुरा स्ववर्णेष्वनावृताः सर्वसाधारणानार्यो बभूवुः । यतः सर्वोजनो निर्वैरोऽभवत् । एकदा केनचिदपूर्वेण द्विजन्मना करेणानेतुमाकृष्टां मातरं वीक्ष्य कुपितः श्वेतकेतुरौद्दालिको नारीणामेकभर्तृव्रतां स्थितिं विदधे । पत्युस्तुशासनात् तासां परसंगमे दोषोनास्ति । पुरा कल्माषपादनृपाज्ञया सती मदयंतीवाशिष्ठादश्मकाभिधं तनयंलेभे । किंबहुना वयमपि राज्ञोविचित्रवीर्यस्य क्षेत्रजाः सुताः स्मः । अतो राजदयिते ! त्वमपि मद्वचः प्रतिपालयेति भर्तृवचः समाकर्ण्य लज्जामुकुलितापांगसाचीकृतविलोचनाकुंती करौ संयोज्य प्राह । प्राणनाथ ! पूर्वं मयासमाराधिताद्दुर्वाससोमुनेः सकाशात् स्फारस्फुरद्वीर्यस् त्रिदशाह्वानसत्फलोमंत्रः संप्राप्तः । प्रभो ! साऽहं कं देवमाहूय तवसंकल्पसिद्धये तनयोत्संगाभवामीति राज्ञा वचः श्रुत्वा प्रहृष्टः पाण्डुरब्रवीत् । देवि ! दिवौकसांमध्ये धर्मः श्रेष्ठः । सर्वे प्रवराननना देवास्तन्मयाः । तस्मात्समाहूय धर्मं सुपुत्रमवाप्नुहि । एतदाकर्ण्य यतव्रता राजमहिषी योगमूर्तिनाधर्मेण संगता गर्भमादधे । ततः कुंती काले सर्वभूपालतिलकमजातशत्रुंसुतं सुषुवे । अयं धर्मसूनुर्युधिष्ठिर इति गगनचारिणांवाचस्तास्मिन्जातेउद्ययुः । ततः पाण्डुर्वधूं प्राह । प्रिये ! बलज्येष्ठाभवंतिपार्थिवाः । अतोमारुतमाहूय बलिनं पुत्रमवाप्नुहि । तच्छ्रुत्वा तथास्त्वितिव्याहृत्य कुंती जगत्प्राणसमीरणात् संवत्सरानंतरजं द्वितीयं दारकं प्राप । ततोव्याघ्रभीतेर्मातुरुत्संगात् पतितः स बालको वज्रसंहननैर्गात्रैर्दलशः शिलाम् विदधे । जातोऽयं बालकोभीमपराक्रमोभीमसेन इति गंभीरभावा सरस्वत्युन्ननाद । यस्मिन्दिने बली धार्तराष्ट्रोदुर्योधनोजातस्तास्मिन्नेवदिनेऽसौभीमकर्मावृकोदरोऽप्यभवत् । ततः पाण्डुः क्षणं ध्यात्वा देवराजं च

स्मृत्वा तत्सुतप्राप्त्यै पुनर्दयितां शशास । अथ सभार्यः पाण्डुरुग्रेणतपसा वर्षेण त्रिदशेश्वरं परितोष्य साक्षाद्दर्शनमवाप । ततः पुत्रं तुभ्यंप्रदास्यामीत्यभिधायतिरोहितेवृत्रघ्नि राजा परमहर्षमाससाद । ततो मंत्रबलात्समाहूतान्मघोनोऽदितिस्तेजोराशिंसूर्यमिव कुंती पुत्रमर्जुनमजीजनत् । अयं शक्रसुतत्वात् तत्तुल्यपराक्रमोऽभवत् । जातेऽस्मिन् नाककामिन्यो ननृतुः । गन्धर्वगणाजगुः । नंदनौकसश्चननन्दुः । ततो भर्त्रार्थिता कुंती माद्र्यै मंत्रं दत्वा प्राह । भागिनि ! सकृदाह्वानफलदोऽयं मंत्रः । अनेन स्वाभीष्टदेवमाहूय वांछितार्थं लभस्व । अथाऽसौ विमृश्याश्विनोः सममाह्वानमकरोत् । विदग्धमनसां कौशलं कोविज्ञातुं समर्थ इति वृद्धवचनमक्षरशः सत्यम् । ततः सम्प्राप्तेऽवसरे माद्री मतिः श्रुतोपश्रुताविव यमजौनकुलसहदेवावजीजनत् । एवं पंचपुत्रानवाप्यसिद्धार्थोऽभवत्पाण्डुः ।

अथ पाण्डुस्तपोवने मुनिभिः कृतराज्योचितव्रतैस्तैः पंचभिः सुतैर्मंत्रोऽङ्गैरिव विरेजे । अत्रान्तरे मनोभवबालसखो वसंतर्तुः समाजगाम । तस्मिन्समये पंकजाक्षी-माद्री कुसुमावचयार्थं गताऽऽसीत् । ततोऽकस्मादागतो राजचन्द्रः पाण्डुः कुसुमायुधवैजयंतीं तान्दृष्ट्वा सहसा स्मरविह्वलो बभूव । अथाऽलंघ्यशासनकामस्याज्ञया विवशीकृतेन दयितेन संभाषिता स्मितार्द्रज्योत्स्नावदातकिरणांकुरिताननाब्जा सा प्रियस्य प्रसृतंमनो निरोद्धुं न शशाक । लोके नहिकोऽपि विधातृचरितं परिमार्ष्टुमीशत इति नियमाच्छापोपशांतिविधेश्चेतोनिवार्य कुलालिकुलहुंकृतिभिर्लताभिर्विधुतैःपल्लवकुलैर्भीत्या निषिद्धोऽपि च स राजांऽचलेन तां परिधाय दृढमालिलिंग । ततः पुलकपीनकपोलभागां मद्रराजसुतां विजने नीत्वा यावद्रन्तुमारभते तावद्द्विजशापवशीकृतः स्पर्शसुखास्वादमीलितार्धलोचनो भूपो हा दैव ! इति ब्रुवाणस्सद्योजीवितं तत्याज ।

एवं नरनाथेदिवंयाते माद्री भविष्यतश्चितावन्हेः सारतां विज्ञातुमिव सहसा शोकाग्निं समाविशत् । ततः श्रुतवृत्तान्ताकुंती तत्र गत्वा गतासुनरेशं दृष्ट्वा च हा प्राणनाथ ! क्वाऽस्मान् विहाय गतोऽसीति विलपंती धरण्यांपपात। ततो माद्याप्रबोधिता समुत्थाय प्रोवाच । भगिनि ! त्वं धन्यासि । यस्यास्ते प्रहृष्टभूपेनानंगमंगलोत्संगसमालिंगनोत्सवो जातः । सम्प्रत्युत्तिष्ठ । तनयान्पाहि । पतिमहमनुगच्छामीति कुंतीवचः श्रुत्वा मद्रराजासुताऽवदत् । आर्ये ! महीपातिरयं मन्मुखविन्यस्तलोचनो मनोरथानामतृप्त एव त्रिदशालयं प्रयातः । अतोऽहं सतीवत् तं नयनानंदबन्धुम् प्रणयिनमेकाकिनं परलोकप्रस्थितं च कथं त्यक्तुं शक्तास्मि । अपरंच त्वमसिलोकव्यवहारकुशला । तस्मान्मे तनयावपि स्वपुत्रनिर्विशेषौ पाल्यावित्युक्त्वा तस्याश्चरणयोर्निपपात । ततः कुंत्या समाश्वासिता विव

सदृशीं वेशश्रियं विधाय नरेश्वरं परिष्वज्य च पंकजाक्षीमाद्री पावकं प्रविवेश। अथ पाण्डौ त्रिदिवं प्रयाते शतशृंगानिवासिनोमुनयः सपुत्रां कुंतीं नीत्वा हस्तिनापुरं जग्मुः। तत्र कुरुभ्यः पांडुवृत्तान्तं तत्सुतानांसंभवम् पतिव्रतायामाद्र्या भर्तुरनुसरणं च सर्ववृत्त-माद्योपान्तं न्यवेदयन्। ततो न्यासभूतान् राजपुत्रान् धृतराष्ट्राय पितामहाय च समर्प्य स्वतपोवनं निवृत्ताः। अथसपुत्रकुंतीस्वसदनमवाप्यातिविश्वस्ता बभूव।

ततो भीष्मादयः पौराश्चशोकार्तास्तयोः सलिलक्रियां कृत्वा तन्निमित्तकमसंख्यधनं सुपात्रेभ्यो ब्राह्मणेभ्यो व्यतरन्। अथैकदा भगवान्वेदव्यासः स्वयं तत्रागत्य मातरं सत्यां विजने प्राह। देवि! सुखकालस्तु गतः। सम्प्रति विषमोऽयं कालःप्राप्तः। वृद्धस्य-क्षयज्वर इव जगतः पापं विवर्धते। इयमतीतरमणीया विध्वस्तगुणमण्डला च संकुचि-ताभूमिर्हिमाहतापद्मिनीव न भाति। तस्मात् स्नुषाभ्यांसहिता त्वं तपोवनं गत्वा परलोक-चिन्तनं कुरु। निशम्यैतद् व्यासवचनं स्नुषासहिता सत्यवती तपोवनं गत्वा तत्र भगव-दाराधनेन परमपदमवाप। अथ व्यासदेवोऽपि परमेश्वरेच्छांबलवतींमत्वावनंगतः।

ततो महौजसां राजकुमाराणां संख्या पंचोत्तरशतं बभूव। तेषां ज्येष्ठो दुर्योधनो भीमतुल्यवयाः सदा डिम्बकेलीषु विक्रान्तं पवनात्मजं न सेहे। ततो बद्धवैरो वृकोदरस्तरुमूलं कराभ्यां विधूय फलावचयसक्तान् वृक्षारूढान् राजपुत्रान् न्यपातयत्। ततः कदाचिज् जलकेलिषु निःशेषान् तान्दोर्भ्यामादाय जवाच्चिरं ममज्ज। येन ते क्षणाच्चाल्पजीविता अभूवन्। अथैकदा दुर्योधनो बालकेलिषु निर्जितो मन्युसंतापमूर्छितः कुबुद्धिमास्थाय प्रमाणकोट्यां सुप्तं तं रज्जुभिर्बध्वा सर्पैर्वेष्टयित्वा च जले चिक्षेप। दुष्टाः परोत्कर्षं न सहन्त इति सत्येषा लोकोक्तिः। तस्मिन्समये निद्रार्धजिह्माननो मारु-तिरपहस्तहस्तलीलयैव दुर्योधनदयितं सारथिं जघान। अथ प्रबुद्धोवृकोदरस्तद्रुषा दंश-भग्नरदान् सर्पांश् छित्वा यदा प्राक्षिपत्। तदा कौरवा विषमिश्रितभोज्यदानेन तं हन्तुं प्रयतिरे। पूर्वपुण्यैस्तत्रापि स सुरक्षितोऽभवत्। ततस्तेषां मन्युवृक्षो व्यवर्धत। यस्य सर्वमहीपालक्षयकारको विषवृक्षः प्ररूढः। लोके भावितव्यंनकोऽपिवारयितुंशक्तः।

अथ राज्ञा पृष्टो वैशंपायनो द्रोणजन्मकथां वर्णयितुमारब्धवान्। पुरा भरद्वाजो घृताचीं दृष्ट्वा स्खलितवीर्यं कलशे न्यदधात्। ततः काले तस्मिन्यः सुतः समुत्पन्नः स द्रोण इति संज्ञा मवाप। अथ सोऽग्निवेशमहर्षि कृपया धनुर्वेदपारगामित्वमवाप्य द्रोणा-चार्य इति लोके प्रसिद्धोऽभवत्। ततो लब्धविद्योऽसौ कृपभगिनीं कृपीं परिणीय तस्या-मश्वत्थामानं सुतमजीजनत्। स जातमात्र एव दिव्याश्ववन्ननाद तेनाश्वत्थामेति लोके

प्रथितो बभूव । सोऽयंपितृवदासीत्प्रथितयशाधनुर्वेदे चीरंजीवोऽपिचासीत् ।

अथैकदा सुतवान् द्रोणोऽविश्रान्तवसुवर्षिणं जामदग्न्यं गत्वा धनमयाचत । महात्मा परशुरामस्तस्याऽतिलालसां ज्ञात्वा प्रोवाच । विप्र ! कश्यपाय सागरान्तां पृथ्वीं दत्त्वा शरीरमात्रशेषोऽहं जलधितटं गच्छामि । भार्गवोऽहं याचकाशापूरणमेव परमधर्मंजाने । कथय किंकरोमि ! यद्यस्त्रविद्यया ते प्रयोजनं सिद्ध्येत् तर्हि तु सन्नद्धोऽस्मि दातुम् । तच्छ्रुत्वा द्रोणोऽब्रवीत् । कृपासागर ! विद्यया धनं धनेन च विद्या परस्परनिबन्धनमेतत् । ततस्तुष्टो भगवानस्मै विद्यास्त्रग्राममगुंफितं ससंहारं सरहस्यं च समग्रंधनुर्वेदं प्रादात् ।

पुराग्निवेशगुरुकुले द्रोणद्रुपदावास्तां सहपाठिनौ । तत्र द्रोणोऽहर्निशं द्रुपदाय साहाय्यं ददान आसीत् । अथैकदा परितुष्टोराजकुमारः प्रतिज्ञातवान् । सखे ! यदाऽहमवाप्स्यामि पितृराज्यं तदा तुभ्यं राज्यार्धं दत्वा करिष्याम्यस्यहितार्चिंतनस्यप्रतीकारम् । अथैकदा धनार्थीद्रोणः स्मृत्वा च तां वार्तां द्रुपदसमीपमगमत् । ततः कुशलप्रश्नानंतरं द्रोणः प्राह । सखे ? देहि मे तत् प्रतिज्ञातं राज्यार्धम् । तच्छ्रुत्वा द्रोणोऽवदत् । ब्राह्मण ! त्वंमहामूर्खोऽसि । ज्ञानार्थं किमप्यौषधं सेवस्व । राजा कस्यापि ब्राह्मणस्य सखा श्रुतो वा दृष्टः ? समानकुलशीलानां तुल्यार्थज्ञानचेतसां सख्यं शोभते । आवयोर्मध्येत्वाकाशपातालयोरन्तरं विद्यते । अतिथिरसि । यद्यामान्नेन किंवा पक्वान्नेनप्रयोजनं स्यात् । तर्हि तुतद्गृहीत्वागृहंगच्छेत्यादिभिर्वाक्यैर्निरस्तो द्रोणो परित्यज्य धनाशां जीविकार्थं हस्तिनपुरं च गत्वा कृपाचार्यगृहेऽतिष्ठत् । ततः शनैःशनैर्देवव्रतेन सहद्रोणाचार्यस्यपरिचयोऽभवत् ।

अथैकदा केलिशालिनोराजपुत्राः क्रीडार्थं वनं जग्मुः । तत्राऽकस्मात्तेषां कंदुकः कूपेऽपतत् । ततस्ते नानाप्रयत्नैर्यदानालभन्त तत् । तदा हताशा कूपंपरितो मलिनमुखास्तस्थुः । तस्मिन्नेवावसरे यदृच्छयागतो द्रोणः श्रेणीकृतनैषीकमुष्टिना तद्विद्धा शनैः शनैरुद्धरन्नुपर्यानिनाय । एवं तस्य हस्तलाघवं दृष्ट्वा चकिताराजपुत्रास्तत्सर्वं वृद्धभीष्मायैत्यानिवेदयामासुः । ततो देवव्रतस्तं सर्वकुमाराणां गुरुं चक्रे । यद्यप्यस्य नानादेश्या राजपुत्रशिष्या आसन् । परं पार्थ एवास्य कृपापात्रो बभूव । अथैकदा धनुर्विद्यापरं यत्नंकुर्वाणो निर्दीपेनिशि च भुंजानोऽर्जुनो विनैवायासं ग्रासं मुखागतं विज्ञाय तमस्यपि बाणप्रक्षेपणं संभवतीति निश्चित्य निरंतराभ्यासेन शब्दवेधविद्याविशारदो बभूव । तस्य मौर्वीरवं श्रुत्वा मुदान्वितो द्रोणः पुनः पुनरभाषतकुमारमण्डलम् । सव्यसाचिसमच्छिष्यो नभूतो नभविष्यतीति सत्यमवगच्छामि । सुपात्रनिक्षेपोहिलोकेफलति ।

ततः कदाचिन् निषादराजहिरण्यधन्वनः सूनुरेकलव्यो विजने द्रोणमभ्येत्य प्र

तिपुरस्सरं प्राह । गुरो ! शरणार्थिनं माम् धनुर्वेदमुपादिश । ततो भारद्वाजो दाशोऽय-
मिति मत्वा तद्वचनं यदा नाङ्गीचकार । तदाऽसौ श्रद्धावान् वनं गत्वा तत्र मृण्मयं
द्रोणं निर्माय प्रतिदिनं प्रतिपूज्याभ्यासं च कुर्वन् स्वल्पेनैव कालेन महाधनुर्धरो बभूव ।
अथ कदाचिदभ्यासार्थं निर्गताः पाण्डवा वने सप्तभिर्वाणैः पूरिताननं श्वानं विलोक्य
मिथः प्रोचु रहो कस्येदं हस्तलाघवम् ? निशम्यैतदन्विष्यन्तः केचिद् विजने यतव्रतं
धन्विवरं दृष्ट्वा तमपृच्छन् । भद्र ! कस्तवगुरुः ? तच्छ्रुत्वा स विहस्य प्रोवाच । महा-
शयाः ! द्रोणशिष्योऽस्म्यहम् । ततो विस्मयाविष्टोऽर्जुनो गुरुवर्यमुपेत्य सादरं प्राह ।
महाराज ! अप्यस्तिमदधिकः कोऽपि धनुर्धरोभवाच्छिष्यः ? एवमाकर्ण्य ज्ञातवृत्तोगुरुः
सहसा तत्र जगाम । यत्रैकलव्योऽभ्यासंकुर्वन्नास्ते । अथ संमुखागतं गुरुं विलोक्य
दण्डवत् प्रणतः सः प्राह । गुरुदेव ! अनुग्रहीतोऽस्मि । कथय किंकरवाणि ? तच्छ्रुत्वा
द्रोणाचार्योऽब्रवीत् । वत्स ! पार्थायाऽहमद्वितीयोधनुर्धरोभवेति वरं दत्तवानस्मि । परं
तवाभ्यासं विलोक्य चकितोभवामि । महानुभाव ! यदि त्वं माम् गुरुंमन्यसे । तर्हि
तु देहि मे गुरुदक्षिणाम् । निशम्यैतत् सोऽवदन् । आचार्य ! धन्योऽहम् । यस्माद्
भवद्विधोगुरुर्दक्षिणां याचते । शीघ्रमाज्ञापय प्राणैरपि तवप्रियं करोमीतिवचनंसमाकर्ण्य
गुरुः प्राह । देहि मे दक्षिणांगुष्ठं गुरुदक्षिणायाम् । ततोऽसौ निर्विकाराननो निकृत्यास्मै
दक्षिणांगुष्ठं समर्पयामास । ततोऽतिसंतुष्टोगुरुस्तस्मै यशस्वीभवेतिवरं प्रादात् । अथाऽर्जु-
नादयः पाण्डवास्तस्मै वनराज्यं प्रददुः । येन सोऽतिसंतुष्टो भूत्वास्वपीडांव्यस्मरत् ।

अथैकदा द्रोणाचार्यः शिष्यपरीक्षार्थं भासमत्युच्छ्रितं लक्ष्यं विधायछात्रान् सर्वान-
पृच्छत् । वत्साः ! युष्माभिरत्रकिंदृश्यते ? तदाकर्ण्य ते प्राहुर्गुरो ! वयं भासमखिलं
कार्मुकं च स्वकीयं पश्यामः । ततोऽपसार्यसर्वानर्जुनंपप्रच्छ गुरुः । तच्छ्रुत्वाऽर्जुनोऽब्रवीत् ।
देव ! भासग्रीवामृतेनाऽन्यत् किमपिपश्यामि । ततः पार्थंपरिष्वज्य गुरुः शरंमुचेतिसमा-
दिशत् । अथ सव्यसाची वाढमित्युक्त्वा सत्वरमेव वाणेन तस्य ग्रीवां चकर्त । तत-
स्तुष्टोगुरुर्विजयीभवेति शुभाशीर्वादं तस्मै प्रादात् । ततः कदाचित् सुरसरिति स्नातुं-
सशिष्यो गुरुरगात् । तत्र प्रविष्टं जंघायाम् ग्राहो जग्राह । ततस्तेन तन्मोचनाय
प्रेरिताशिष्यमण्डलीतस्ततः प्रेक्षमाणाऽपि न कर्मनिश्चयं चक्रे । ततः प्रत्युत्पन्नमतिः
पार्थः सहसैव पंचभिर्वाणै स्तं नक्रमवधीत् । ततो लब्धजीवितोगुरुरस्मै ब्रह्मशिरोऽस्त्रं
प्रादात् । उपकारमिमंगुरुर्यावज्जीवं सस्मार । अश्वत्थामापि च पार्थं प्रशशंस ।

अथैकदा प्राप्तविद्येषु सर्वेषु राजन्यसूनुषु गुरुगिरा राजाधृतराष्ट्रो भीष्मप्रमुखैः

सर्वैर्बान्धवैरन्तःपुरैश्च सार्धं कुमाराभ्यासपरीक्षाफलंश्रोतुम् शिल्पिकल्पितं सभामण्डपं च गत्वा निर्दिष्टमंचे समुपाविशत् । ततो गंगाजलोज्वलेवाससीविभ्राणः शशिद्युतिर्द्रोणो भव्यमूर्त्तिनाऽश्वत्थाम्नासह प्रेक्षकपूर्णं रङ्गमण्डपं प्रविष्टवान् । तस्मिन्समये स द्रोणाचार्यः पुत्रयुतस् शक्तिमतास्कन्देन सह त्रिलोचन इव शुशुभे । ततः प्रविष्टा राजपुत्राः शस्त्राऽस्त्र-विद्याप्रदर्शनेन प्रेक्षकमालिकाश्चित्रन्यस्ता इव प्रचक्रिरे । ततः परस्परस्पर्द्धादर्शितोत्ताल-मण्डलौ गदाहस्तौ च भीमसुयोधनौ विविशतुः । ततस्तौ प्रेक्षकोत्साहवचनैर्विस्मृत्यकर्तव्यं सहसैव संगरोद्यतावभूताम् । अथ तत्राऽनिष्टापत्तिं विलोक्य गुरुराज्ञयाऽश्वत्थामा मध्यस्थो भूत्वा भुजाभ्यां तौ निवारयामास । ततस्तत्र यत्किमपि वैचित्र्यमासीत् तद् विचक्षणं धृतराष्ट्रं विदुरः सुबलात्मजांगान्धारीं च कुन्ती श्रावयामास । ततो हर्षविस्तारनयनो भारद्वाजोंऽगुलिसंज्ञया कलकलशब्दं निवार्य प्रोवाच । भो भो दर्शकगणाः ! पूर्वं मम पुत्रादपिप्रियतरं पार्थंविलोकयत । वर्तमानसमयेऽयंकार्तवीर्यार्जुनमपि स्पर्द्धयाऽतिक्रामति । गुरुणैवमुक्ते श्यामसुन्दरोऽर्जुनो रंगेऽवतीर्य दिव्यास्त्रप्रभावेण जलानिलादीन्सृजन् पौरस्त्री-कटाक्षमालितश्चचार । ततः किरीटिनो दिव्यप्रभावमालोक्य सुसंरब्धाः कौरवगणा अपि स्पर्द्धया स्वां स्वां शस्त्रास्त्रशिक्षां प्रदर्शयामासुः । तस्मिन्नेवावसरे द्वारदेशाज् जलधरध्वान-धीरगंभीरनिस्वनो भुजास्फालनसंभवध्वनिरुदपद्यत । ततो द्वाराग्रन्यस्तचक्षुषाम् किमेत-दित्युन्मुखानां प्रेक्षकाणां समक्षं दिव्यकवचधारी द्वितीयोदिनमणिरिवप्रकाशितः कर्णः समाययौ । तदातत्रकोऽप्यपूर्वः कौतुकविभ्रमोऽभवत् । अथाऽसौ प्रविष्टोरंगभूमिं कृपद्रोणौ प्रणम्य च पार्थवत् सर्वप्रयोगनैपुण्यं दर्शयामास । ततस्तद्दर्शनानंदपुलकाङ्कुरितः सुयोधनः प्रणयात् पूर्वमाभाष्य तेन सार्धं सख्यं व्यधात् । ततः स्पर्द्धानुबन्धो-त्थवैरयोः कर्णपार्थयोर्द्वन्द्वयुद्धसमारंभं दृष्ट्वा गूढार्थसुतवृत्तान्तकोविदा कुंती मुमोह । ततः प्रवर्धमानं कलहं विलोक्य कृपाचार्यः प्राह । राधेय ! नृपाणां सख्ययुद्धविवाहविवादा नृपैरेवभवंति नान्यैः । पार्थस्तुपाण्डुदायादः कुरुवंशाविभूषणं च । तस्मादज्ञातकुलशीलेनाऽ-राज्ञाचत्वयासह योद्धुं नार्हति । एतदाकर्ण्य लज्जामुकुलितेक्षणः कर्णो नीचैः शिरोधरां कृत्वा चरणाग्रेण पृथ्वीं लिखितुमारब्धवान् । ततो दुर्योधनः प्राह । गुरो ! न युक्तमेतत् यत्र गुणप्रकर्षो भवति तत्र जन्मादिविचारो न क्रियते । गुणाढ्याः स्वबुद्धिविद्यातपः शौर्यसंपद्यशोभिश्च कुलान्युन्नयंति । संप्रति मयाङ्गविषयेऽयं महीपतिः कृतः । पुरुषस्यै-विधस्याऽग्रे देवराज्यमपि किमद्भुतम् ? इत्यभिधाय हेमासने सलाजकुसुमांबुभिः स्वर्ण-कलशैश्च तमभिषिच्य कृतोष्णीशं नृपं व्यधात् । ततः कांताकराधूतासितचामरवीजित

स राजहंसगणव्याप्तः कमलाकर इवाबभौ । अथ तस्य मूर्ध्नि शशिप्रभं सितच्छत्रं व्योम्न्यावर्तमानं लीलामण्डितंयशइव व्यराजत । अत्रान्तरे जराजीर्णोऽधिरथः सकम्पो यष्टिव्यग्रकरः पदेपदे प्रस्खलन् पुत्रंद्रष्टुं तत्रायचौ । ततो दूरात् पुत्रेतिवादिनं हर्षास्रुपरिसुतं तं बद्धाभिनवशेखरः कर्णः प्रणनाम । सोऽपितस्मैप्रेम्णाशुभाशिषं प्रादात् ।

ततो भीमः सूतोऽयमितिज्ञात्वा विहस्य च तं प्रोवाच । राधेय ! कौलीन्येनाऽनेनैव सव्यसाचिनासह स्पर्द्धसे ? सारथेरथचर्यासु शिक्षितोभव । मार्जारस्य पंचाननानुकारो न शोभते । निशम्यैतत् कर्णो निःश्वस्य रविं समैक्षत । एवं पुनःपुनस्तिरस्कारं विलोक्य कर्णस्य वीरसुयोधनः कोपात् समुत्पत्य प्रोवाच । वृकोदर ! शूरस्य कृतविद्यस्य च धीमन्तो मूलान्वेषणं न कुर्वंति । अनलः सलिलात् कार्त्तिकेयोऽपि बन्हितोजातः । गूढं हि महात्मनां जन्म परिच्छत्तुं क ईश्वरः ? किंबहुना पार्थ ! यूयं यथा जातास्तेन कथितेन किम् ? सर्वे हि किल परदोषानुदर्शने भवंति प्रगल्भाः । सकुंडले सकवचे सहस्रांशुसमत्विषि च कर्णे मनुष्यशंका वक्तुर्जाड्यमेव प्रकटयति । अथवा किमेतैर्वचोभिर्यद्यभिमानज्वरोऽस्ति । तर्हि तु मण्डलितोच्चण्डकोपोभुजः क्रियताम् । निशम्यैतद् दुर्योधनवचः समाकुलितेजनेऽस्ताचलशिरश्चुंबीरविरपि सकुंचित इव देशान्तरमगात् । ततः पूर्वं संध्यारुणेगगनेऽनंतरं च शनैःशनैश्च तमोव्याप्ते नभोमण्डले यामिनीकामिनी कर्णपूरचण्यककोरकैः प्रदीपै राजवर्त्मनि कांचनच्छायेसंजाते दुर्योधनः पाणिनाकर्णमालंब्य रंगस्थलान्निर्ययौ । ततोधनंजयमुखांभोजेन्यस्तसस्नेहलोचना भीष्मद्रोणकृपादयः पाण्डवैः सहिता यथागतं जग्मुः । अथ चित्रंकर्णोऽद्भुतंभीमो वतार्जुनः कौतुकमहोदुर्योधनश्चेति प्रशंसन्तो जना श्शनैःशनैः सभाभवनान् निर्ययुः ।

अथैकदा गुरुरर्जुनप्रमुखाञ्छिष्यानेकत्रीकृत्याऽब्रवीत् । वत्साः ! बाल्ये द्रुपदो ममसखाऽभूत् । स शैशवे राज्यार्धं ते प्रदास्यामीतिप्रतिजज्ञे । यदा सरलाशयेन मया याचितस्तदा मदोद्धतः स मामवोचत् । अरेभिक्षुक ! नमेतुल्योऽसि । दूरमपसर । यत् किमपि कर्तुंशक्नोषि तत्कुरुष्व । सम्प्रति तस्य मन्युमहाबन्हेर्भवन्तएवसर्वेवारिदाः प्रमाणमित्युक्त्वा तूष्णीमतिष्ठत् । अश्वत्थामाऽपितदापितृमुखं विलोकयन्नास्ते ।

एतदाकर्ण्य सहसा धनंजयप्रभृतयो राजपुत्रा गुरुमानरक्षार्थमहंपूर्वमहंपूर्वमितिवदन्तो द्रुपदराजधानीं गत्वा रुरुधुः । ततो रणे द्रुपदंविनिर्जित्य पार्थो बद्धांजलिं तं द्रोणचरणयोः पातयामास । अथ भारद्वाजस्तेन सह विधायसख्यं तममुंचत् । ततः सोऽपि द्रोणायाहिच्छत्रपुरं दत्वा स्वपिण्डममोचयत् । यद्यपि द्रोणोऽभवन्निर्मुक्तस्तथाप्यवमानाग्निस्त-

महर्निशं ददाह । ततो राजा द्रोणं सुदुर्जयं मत्वा पुत्रद्वाराऽस्यप्रतीकारंकारयिष्यामीतिनिर्धार्य तपोवनमयासीत् । ततः पौरैर्गीयमानगुणान् विद्याविक्रमशालिनश्च पार्थान्ज्ञात्वा द्वेषाग्निना ज्वलितोदुर्योधनः कर्णसौबलनुमत्या तत् पराभवदीक्षितो बभूव । एवं यदायदा स दुष्टप्रयोगानकरोत्तदातदाहि विदुरः स्वबुद्धिप्रभावेण तानरक्षीत् ।

अथैकदा दुर्योधनः प्रजानुरागेण पाण्डवान् राज्यार्हान् विज्ञाय विजने धृतराष्ट्रमभ्युपेत्य प्राह । तात ! पृथासुताः केवलेन पुण्येनैव लोकप्रियतां याता नान्यैः सामादिभिरुपायैरितिसम्यगहमवगच्छामि । सम्प्रति हस्तगतराज्यं परगतं न भवेत्तथा भवद्भिर्यतितव्यम् । राजन् ! परपिण्डोपजीवनान्मरणमहं वरं मन्ये । एवं दुर्योधनवचः श्रुत्वा धीमान् धृतराष्ट्रः क्षणं ध्यात्वाऽब्रवीत् । वत्स ! स ममभ्राता पाण्डुः कनीयानपिगुणज्येष्ठोऽभवत् । यस्यवृद्धोपसेविनः प्रजारंजनमेव विभूषणमासीत् । जनप्रियोयुधिष्ठिरः स्वदायाद्यं राज्यार्धंवांछतीत्यत्र को दोषस्तस्य ? लक्ष्मीर्जनानुरागजाताहिवंशमनुधावति । पुरा पाण्डुनाऽतिदानमानाभ्यां पूजिताः प्रकृतयोबान्धवाश्च पार्थद्रोहं न सहन्ते । वत्स ! विभज्यदानं वैकुण्ठयानमितिलोकाव्याहरन्ति । अतस्त्वं न्यायमवलम्ब्यसुखीभव । निशम्यैवं भूपवचनं दुर्योधनः प्राह । राजन् ! सत्यमभिहितंभवता परं वयमग्रजास्तेचाऽवरजाः । राज्ये तु भवति ज्येष्ठानामेवाधिकारः । अपरंच हस्तगतराज्यं मया दातुं न शक्यते । सर्वोजनोऽर्थेनैव वशवर्तीभवति । सचार्थोऽस्त्यस्मदायत्तः । द्रविणैर्लोकस्यनित्यंतृणवत्प्राणविक्रयः सहजः । तात ! किंचित्कालं पाण्डवान् वारणावतं विसृज्य लब्धावसरस्त्वं स्वां श्रियं बद्धमूलां कर्त्तुमर्हसि । मुक्तहस्तेन मया राजानस्तु स्ववशेकृताः । पितामहोभीष्मः सदैव माध्यस्थभावमवलंबते । स द्रोणपुत्रोममाऽभिन्नहृदयः सुहृत् । तस्मात् कृपद्रोणौ करगतावेव । केवलमेकोविदुरएव सदा पाण्डवहितैषी ममशंकास्पदम् । राजन् ! कुरुलक्ष्मीरक्षामितिवचनमाकर्ण्य वृद्धोऽपि धृतराष्ट्रोमोहमुपागमत् । अहह ! भवितव्येन कस्य बुद्धिर्नाकृष्यते ? ततोऽन्येद्युस्तत्प्रयुक्ताजनाः सभामध्ये महोत्सवोदारं वारणावतनगरं प्रशशंसुः । अथ राजा तद्दर्शनोत्सुकान् पाण्डवान् समाहूय वत्साः ! तत्रावश्यमेवगम्यतामित्यादिदेश । ततः शंकिताः पाण्डवा गुरूनामंत्र्य लब्धाशीर्वादा वारणावतं प्रतस्थिरे । तस्मिन्नेवक्षणे दुर्योधनो महामात्रं पुरोचनं समाहूय हर्षस्नेहपुरस्सरं रहः प्रोवाच । भद्र ! सन्मित्रप्रणिधानेनविना प्रगल्भललनाकटाक्षचपलाः श्रियोभूभुजांसान्निधौचिरं न तिष्ठंति । मित्र ! त्वयासहायेनैवाऽहं व्यस्तकण्टकां पृथ्वीमुपायेन भोक्तुमिच्छामि । सखे ! त्वं हि मे प्रथमागतिरसि । अद्यैव वैचित्रवीर्योराजा

पाण्डवान् यात्रामहोत्सवं द्रष्टुं वारणावतं प्रेषयति । तत्रत्वमश्वतरवाहनस्तूर्णं गत्वा तेषां निवासाय सघृतं जतुशिलानिर्मितं च गूढगृहंकारय । ततस्तास्मिन् कुंत्यासमं शनैर्विस्रंभमाप्तेषु रात्रौ बहिर्द्वारकृतार्गलेऽग्निस्त्वया दातव्य इति दुर्योधनेनोक्ते जातहर्षः प्ररोचनस्तथेति प्रतिज्ञाय सत्वरं वारणावतं प्रययौ । ततः सविदुराः शंकितचेतसः पौरा वसुधाधिपं निन्दन्तः प्रस्थितान् पाण्डवाननुययुः । अथाऽजातशत्रुवचसा पौरमण्डले निवृत्ते प्रतीपंगन्तुमुद्यतोविदुरोऽपृष्टोऽपि प्राह । योऽलोहजंकायकर्तनंतीक्ष्णशस्त्रं शिशिरकत्तयोः प्रतिपक्षं च वेत्ति स परैर्न विहन्यते । नाऽसावधानोचिरंजीवति लोके ।

प्रवृद्धेऽपिशीतशत्रौ विलवासिनो न बिभ्यति । सचक्षुषोऽगम्यं धृतिशालिनां च क्वापि भयं नास्ति । धीमानपरिचितं देशं व्रजँस्तारकैर्दिशं जानाति । जितेन्द्रियपुरुषो न कदापि परैः परिभूयते । एवमाभाष्य वाष्पपूरितलोचनोविदुरोलोकैः सह न्यवर्तत । ततो विदुरः किमुक्तवानितिकुंत्यापृष्टो युधिष्ठिरः प्रोवाच । जननि ! अलोहजंशस्त्रंविषम् । शिशिरकत्तयोर्हन्ताबन्हिरितिज्ञात्वैवं व्यवहरेति महामतिनाविदुरेणाऽभिहितम् ।

अथालंकृताः पाण्डवाः फाल्गुनशुक्लाष्टम्यां वारणावतं विविशुः । ततस्ते पौरैः पूजिता द्विजान्पूजयन्तः पुरोचनकृतोत्सवाश्च दशरात्रं तु पटमण्डपेषुसुखंतस्थुः । अथ पुरोचनगिरा कुशलाशिल्पिरचितलाक्षागृहमवाप्य तत्रत्यगन्धेन सूचितो युधिष्ठिरो भीमं प्राह । वत्स ! वन्हिभोज्यद्रव्यैर्निर्मापितमेतदायतनम् । अतोऽत्र सावधानतया स्थातव्यम् । तच्छ्रुत्वा वृकोदरः प्रत्यवदत् । सत्यमभिहितंभवता । ततो मृगयाछद्मना सदा मार्गान् कलयन्तस्तत्राऽतिष्ठन् । अत्रान्तरे विदुरप्रेरितः खनको निशि तान् समभ्येत्य सर्वं छद्मवृत्तान्तं तेभ्यो निवेदयामास । ततोऽसौ सवक्रानुवक्रसोपानसुरंगादीर्घनिर्गमम् संसारमिवंदुर्लक्ष्यं सुपिहितं च विलंव्यधात् । अथैकदा भीमः प्ररोचनं दग्धुमुद्यतं ज्ञात्वा ततः प्रागेव तत्सहितं गृहं स्वयमादीपयामास । ततः प्रवृद्धसप्तार्चिज्वालावलयितेगृहे लाक्षाघृतशिलामोदशंकिते दुःखितेजने तारप्रलापप्रमुखैः पंचभिः पुत्रैः सहिता भोक्तुमायाता च निषादी विधिवशात्तत्र दग्धा । ततो दग्धपाण्डवदर्शिनः पौराः पुनः पुनः शुशुचुः । अहो ! येषां राजापापःसुयोधनस्तेषां कुतः सुखाशा ? अरे वयं किन्नदग्धाः । परमेश्वरो नूनं न्यायकारी । यः पुरोचनः पाण्डवार्थं कूपमखनत् तदर्थंगर्तः स्वयमुपस्थित इति कथयंतो गृहंनिवृत्तिरे नरनारीजना नागरिकाः ।

अथ गुप्तमार्गेण निष्क्रान्ताः पाण्डवा निरालोकेपथि नक्षत्रैर्दिशोगणयन्तोवनं प्रविश्य गंगातटेविशश्रमुः । ततः प्रभाते स्नात्वा कृतनित्यकृत्याश्चते दिनं क्वापि गुप्तस्थानेऽ-

तिवाह्य रात्रौ यात्रां कुर्वन्त आसन् । तत्रसदैवकुंतीतान् सदुपदेशैः सांत्वयामास ।

ततोऽधिगतसमाचारा भीष्मपुरोगमा उद्बाष्पाः शोचन्तो दग्धानांपाण्डुसुतानां सलिलक्रियां चक्रिरे । अथैकदा रात्रौ भीमः सपुत्रां मातरं न्यग्रोधतले प्रतिष्ठाप्य हंससूचितात्सरसो जलं समाहृत्य तानपाययत् । ततः सुखसुप्तान् विलोक्याचिन्तयत् । अहो ! लोकेऽस्मिन् वीतनिस्सारा: करिकर्णचपलाश्चाश्रियोनूनम् । यदेते बाहूपधाना विपिने शेरते । अस्मिन्नेवावसरे कल्पान्तजीमूतसदृशच्छविर्हिडिम्बोनामनिशाचरो भगिनीमाह । चिरेणाद्य धात्रा मर्त्यानामभीष्टभोजनं मे प्रेषितमिति प्रमोदोऽयं ममोदरं प्रीणाति । सांप्रतं त्वमेतेषां परिचयमवाप्य शीघ्रमागच्छेतिवचनमाकर्ण्य तत्र गतासा राक्षससुता सुप्तान् समातृकान् पाण्डवान् प्रबुद्धं च मन्मथाकारं भीमसेनमद्राक्षीत् । ततोऽभिलाषवती सा मनोहरं रूपं विधाय मधुरयागिरा मारुतसुतं प्रोवाच । महाभाग ! कस्त्वम् ? सुखसुप्ताश्चेते तव किं लगन्ति ? कान्तारमिदंघोरं । राक्षसाश्चात्रसर्वत्रविचरंति । मम भ्राता हिडिम्बो युष्मान् जिघांसति । तमहं पापं वंचयिष्यामि । कृपयामामभजस्व । महाशय ! त्वमिंगितज्ञोऽसि । मम भवद्गतं भावं ज्ञात्वाद्रुतमेतान् प्रबोधय । व्योम्नाऽहं सर्वान् वनान्तरं नीत्वा रक्षिष्यामीतिवचनमाकर्ण्य भीमसेनः प्राह । सुमुखि ! वयं क्षत्रियाः सिंहोपमा न कदापि भयायसावकाशं हृदयेदद्महे । कालपक्वोऽसौ राक्षसोऽत्रागत्य लोहशलाकानिर्मितपंजरपतितव्याघ्रइव मद्भुजयंत्रग्रस्तो विषमांदशामनुभविष्यतीतिसत्यमवगच्छ । एवं तयोः संभाषणं श्रुत्वा क्रोधाकुलोराक्षसो भगिनी माह । आःपापे ! मानुषस्नेहात्त्वं ममाज्ञामवमन्यसे । जानेऽहमेतैः सह त्वमप्यद्य यमालयं प्रयातेत्युक्त्वा हिडिम्बां कवलीकर्तुं कालइवोदितोऽभवत् । ततो भीमो लीलया प्रहसन्निव तं प्रोवाच । राक्षस ! सर्वभूतान्तरस्थेन भगवताकामेन कमलेक्षणेयं मह्यं प्रदत्ताऽतो मयिजीवति त्वमेनां हन्तुं नार्हसीत्युक्त्वा क्रोधाध्मातसमाकुलोमारुतिः कराभ्यासमाकृष्य गिरिगौरवं तं जग्राह । ततस्तयोः कम्पमानमहीतलेसमरे प्रवृत्ते सपुत्राकुंती प्राबुध्यत । अथ हिडिम्बावचनैः सर्वं वृत्तान्तं विज्ञाय तनयस्नेहात् किञ्चिदाकुलिताशया बभूव । ततः प्रबुद्धोऽर्जुनो भीमंप्राह । भ्रातर्यावत् संध्या न दृश्यते । तावत्त्वं नक्तंचरं जहि । अथवाऽहमेवमृत्युदंष्ट्राशितैः शरैरेनंराक्षसाधिपं राघवत्रासस्मरणं करोमीतिवादिनं पार्थं भीमसेनो मामैवमित्युच्चया गिरान्यवारयत् । ततः प्राप्तावसरो भीमो तज्जंघयोर्मध्ये हस्तं निक्षिप्य तमधोन्यपातयत् । ततोऽरत्निप्रहारैस्तमर्धमृतं कृत्वा जगर्ज । अथ बलिनापीड्यमानोऽसौ निशाचरो दुर्गयाक्रान्तोमहिषासुर इव रुराव । ततो महतारावेणपूर्यमाणेनभस्तले त्रिदिवौ

कसामकाण्डप्रलयारंभशंका बभूव । ततः क्षणं विलप्य शार्वरैस्तमोभिः सहैव तद्रक्षो निधनमयासीत् । अथ तदनुगास्तंशोचन्तः पलायांचक्रिरे । लोकाश्चनिष्कंटका बभूवुः ।

एवं तस्मिन्हते क्रोधताम्राक्षो वृकोदरो धिक्क्रूरात्राक्षसानितिब्रुवाणस् तत् स्वसारं नाभ्यनंदत् । ततः संकल्पभयभीता सा वरवर्णिनी भीमो मे भर्ता भूयादित्याशयेन कुंतीं शरणमभ्ययात् । अथ भीमो मात्रा युधिष्ठिरेण च प्रेरितो दिवा ते संगमः कार्य इति संविदा तामभजत् । अथाऽसौ तत्प्रभावोचितगतिरद्य तु रम्यासु दिव्यकाननभूमिषु विजहार । द्वितीयेऽह्नि कैलासकटकेषु चिक्रीड । प्रभाते प्रफुल्लपंकजेषु हिमवन्मानसेषु रेमे । सायं हरिचंदनहृद्येषु मलयाचलभूमिषु च चिखेल । स एवं प्रतिदिनं तां तरुणीं सेवमानो रतिसनाथस्य मन्मथस्य श्रियं भेजे । सा हिडिम्बाऽपि तं भीमं देववत्पर्युपासत ।

ततो हिडिम्बा विकटास्यं घटोत्कचं सुतं प्रासूत । अथैकदा हिडिम्बा प्रणिपत्य भीमसेनं प्राह । प्राणनाथ ! व्योमचारिणीनां संगमः सुतोत्पत्तिपर्यन्त इति निगद्य भीमा-दिष्टा स्वसदनं जगाम । घटोत्कचः स एव महासमरे कर्णेन सह युद्ध्वा वीरगतिमवाप अर्जुनप्राणरक्षायामयमेव सहायकोऽभवत् । युधिष्ठिरोऽस्यगुणं सदैव सस्मार ।

अथ जटावल्कलधारिणः पाण्डवा वननदीपर्वतनृपमण्डलान्यतिक्रम्य गच्छन्तो पथि कृष्णद्वैपायनं ददृशुः । ततः प्रणिपत्योपविष्टां कुंतीम् मुनिवरः प्राह । पुत्रि ! माशुचः कृथाः । मनुष्यदशा चक्रनेमिक्रमेण कदाचिन्नीचैर्गच्छति । कदाचिदुपरिचायाति । लोकेऽस्मिन् कोऽपि न सर्वदा सुखी न च दुःखितः क्वापि तिष्ठति । एष तव सुतो-युधिष्ठिरोऽजातशत्रुः । सत्यवसरे परिपूर्णांश्रियमवाप्स्यतीति ध्रुवमवगच्छ । निशम्यैवं व्यासवाक्यं कुंती प्रतिग्रहीतं ब्राह्मणवचइत्यभिधाय संतोषमवाप । ततो व्यासो युधिष्ठिरादी-नाह । वत्साः ! यूयमितोगत्वैकचक्रायां नगर्यां ब्राह्मणाऽवसथे तिष्ठत । मासेनाऽहंपुनरे-ष्यामीत्युक्त्वा वेदव्यासो जगाम । पाण्डवाअपि कृतज्ञतया मुहुर्मुहुर्मुनिराजं प्रशशंसुः ।

ततस्ते द्विजवेशास्तत्र गत्वा निर्दिष्टस्थाने तस्थुः । तत्र यत्किमपि लब्धमासीत् तत् सर्वं मात्रे समर्पयामासुः । अथ माताप्यर्धं भीमाय दत्वाऽवशिष्टेन च सर्वेषां कार्यमचा-लयत् । एवं ते तत्र निवसन्तो बहुतिथंकालं परमानंदेन गमयामासुः ।

अथैकदा सुखोषिता कुंती ब्राह्मणगृहे करुणाक्रन्दनं शुश्राव । ततस्सा भीमसमेता तत्र गत्वाऽलक्षितरीत्या तत्रत्यं वृत्तान्तं श्रोतुमारब्धा । तत्रादौ ब्राह्मणो भार्यामाह । ब्राह्मणि ! बताऽसारे संसारे कर्मतंत्रैः शरीरिणां प्रियसंयोगा वियोगे हृदयच्छिदो जायंते । राज्ञाऽद्य मद्गृहादेको रक्षसे परिकल्पितोऽत्र किमहं करवाणि ? यद्यहं स्वयं गच्छामि

तर्हि तु विपश्चिता सततमात्मारक्ष्य इतिश्रुतिभगवती मान्निरुणद्धि । अथ सतीवृत्तां त्वां देवनिर्मितं सहायं मत्वा कथमपि परित्यक्तुं न शक्नोमि । कन्यैषा परकीया ममदौहित्र- जननी च सर्वथैव परिरक्षणीया । अथाऽयमव्यक्तभाषी हृदयानंदनिर्झरोबालो रुदित्वा न्नंयाचतेऽसंशयं मद्विनाशे वृत्तिच्छेदाद् विनङ्क्ष्यतीति ब्रुवाणं धृतिशालिनीभार्या प्रोवाच प्रभो ! न्यायतो धात्रा ममाऽयं समयो विहितः । भर्तुरग्रे तु योषितांमरणमाशिषां बत गण्यते । तच्छ्रुत्वा पेशलस्वना कन्या प्रोवाच । पितरौ ! कन्याधनं तु परकीयं यस्मै कस्मैचित् प्रदेयमेव । तस्मादद्य मामेकां परित्यज्य सुखेन यूयं जीवत । किंबहुना । कन्या ऽस्मिन् लोके परत्र च पितृसंतारणी प्रोक्ता । निशम्यैतद् बालोऽपि नवदंतांशुमिषत पीतंक्षीरमुद्वमन्निव पाणिना यष्टिमुद्यम्याऽनयायष्ट्या तं राक्षसं हनिष्यामीत्यव्यक्तं शिशुवचन श्रुत्वा सर्वा गृहयोषितो रोदितुमारब्धाः । ततो हृदयविदारणं दृश्यं विलोक्य ब्राह्मण सर्वान् प्रबोधयन् प्रोवाच । गृहपतिरहं सत्यव्रतपालनं तु ममैव परमोधर्मः । साम्प्रतं न को ऽपिमान्निवारयतु । भूयः परलोके नः समागमोभवत्विति व्याहृत्य बाष्पाकुलं व्रजन्तं करुणाकुला कुंती सम्मुखीभूय तिष्ठतिष्ठेतिव्याहरन्ती दुःखकारणं पप्रच्छ । अथासौ द्विजः प्राह । देवि ! विधात्रा विहितं दुःखमेतदसाध्यम् । त्वं तत्र किं करिष्यसि ? इ विकटाकारो बकनामको राक्षसोऽस्ति । स सदा वारेणैकं पौरं भुंक्ते । नृपोऽत्रत्य वेत्रकीयग्रहस्तस्मै प्रतिदिनं महिषोपेतं पुरुषं धान्यशकटं च प्रेषयति । मातः ! द्रविण दाने तु बलवान् परित्राणे च दुर्बल एवं विधो दुष्कृती राजा प्रजानां मस्तकस्थं मरणम् । स्वस्त्यस्तुते । जन्मान्तरे नः पुनर्दर्शनं भवितेति निगद्य ब्राह्मणो विरराम ।

निशम्यैवं कुंती प्राह । विप्र ! मा भैषीः । तस्मै महाशनायाऽहं निजपुत्रं प्रहिणोमि तच्छ्रुत्वा कर्णौ पिधाय सहसा विप्रोऽभ्यधात् । मादृशामीदृशं वचः श्रुतावपि नोचि किम्पुनरनुष्ठानम् । अहोवत ! त्वं तु माम् नृशंसचक्रवर्तिनं कर्तुमुद्यताऽसि । न रोच मह्यमेकाक्षरमपि तव श्रोतुम् । अपरिचितं दूरदेश्यं गृहागतं ब्राह्मणं च श्वपचं विना निजजीवितरक्षायै हन्यात् ? एवमाकर्ण्य कुंती सस्मितं प्रोवाच । द्विज ! मंत्रसिद्धोऽस्ति मे पुत्रः । सः स्वविद्याबलादवश्यं तं राक्षसं क्षपयिष्यतीति ध्रुवमवगच्छ । त्वमज्ञात प्रभावोऽस्यतः कृपाकुलोऽवादीः । अथैवं परमास्थया प्रबोधितोविप्रस्संजातप्रत्ययस् देवतां मन्यमानस्तथेति प्रत्यपद्यत । ब्रह्महत्याजन्यं प्रायश्चित्तं च तदा नामन्यत ब्राह्मणः

ततः कुंती भीमं प्राह । वत्स ! गोब्राह्मणप्रजात्राणायैव क्षत्रियो जायते । ममा नुशासनात् त्वं ब्राह्मणं रक्षित्वाऽक्षयांकीर्त्तिमवाप्नुहीतिब्रुवाणमकीर्त्तिशंकितो युधिष्ठिर

प्रोवाच । जननि ! त्वम् भ्रान्तासि । यत् स्वपुत्रप्राणव्ययेन परपुत्रं रक्षसि ? तच्छ्रुत्वा पृथा प्राह । वत्स ! मा कुरु वृथा चिन्ताम् । वेद्म्यहं भीमपराक्रमं सर्वमितिवाक्यमाकर्ण्य महाकष्टसहनं विनाकीर्त्तिर्नमिलतीतिनिश्चित्यच युधिष्ठिरोयथाकथंचिदनुमतो बभूव ।

ततो मातृभक्तो भीमः स्वेष्टदेवं ध्यात्वा मातरं च प्रणिपत्य यदा गन्तुमुद्यतोऽभवत् । तदा कुन्त्युवाच । पुत्र ! भगवान् धर्मएवाऽधुना तवगतिरस्तु । गच्छ विजयी भव । द्विजकार्यं च संपादयेतिसमादिष्टो भीमो भक्ष्यपूरितशकटसहितः पलाशशतसंकुलं बकवनं प्रायात् । ततस्तत्र तं निशाचरं पश्यन्नेव तदन्नं चखाद । अथ राक्षसोऽपि तमशंकितभुंजानमवलोक्य च सकोपविस्मयाविष्टो मेघइवगर्जन् तमब्रवीत् । रेमूढ ! त्वं निर्भीकवन्ममाशनं कथमश्नासि ? प्रायो निश्चयीकृतमृत्यवो हि सर्पकरण्डे हस्तं प्रक्षिपन्तीत्युक्त्वा कालसन्निभः स तं भीमं पृष्ठे जघान । अथ भीमोऽपि तं प्रहारं मक्षिकापसारं मन्यमानो भुंजान एव कुलाचलइव निराकुलो यातुधानमुदैक्षत । ततः स राक्षसः कोपात् सहसा सालमुत्पाट्य भीममताडयत् । अथाऽसंभ्रान्तोभीमस्तदन्नं भुक्त्वा यथाविधि समाचम्याऽपरं तरुमुत्पाट्यच राक्षसं प्रत्यताडयत् । एवं तयोर्निःशेषितमहीरुहेसमरे प्रवृत्ते स्फुटतांगिरीणामिव चटचटरावोऽभवत् । ततो भीमस्तस्योरुविक्रमस्य ग्रीवां समादाय पृष्ठेजानुं निधाय च धनुर्वामनामयत् । अथ भीमेन भज्यमानस्य तस्य रक्षोवदनात् कल्लोलमालिनी कुल्या समुल्ललास । ततो विगतश्वासे तस्मिन् महीतले पतिते शब्दं श्रुत्वा भीतास्तदनुगास्तूर्णं समाययुः । तत्रस्ते तद्दशामवलोक्य विस्मिताश्च बभूवुः ।

ततो भीमेन समाश्वासिताः प्रबोधिताश्च ते लोककण्टकतां त्यक्त्वा स्वामिनं शोचन्तो ययुः । अथ पथि निशाचरं त्यक्त्वा भीमसेनेप्रयातेऽपरेन्हि संहताः पौरा निहत बकं दृष्ट्वा हर्षोत्फुल्ललोचना बभूवुः । ततो वारमन्विष्य ब्राह्मणं पप्रच्छुः । अथ विप्रोऽवदत् । मंत्रसिद्धेन केनचिद्राक्षसो हत इति समाकर्ण्य प्रजाभाग्यं प्रशंसन्तो जना गृहान् प्रययुः । ततो नागरा महोत्सवं कृत्वा स्व स्व हर्षं च प्रकटयामासुः ।

अथैकदा तस्यैव ब्राह्मणस्य गृहे कोऽपि द्विजोऽभ्यागतः समाययौ । तं भुक्त्वोत्तरमासीनं सकौतुकाः कथाश्च कथयंतं पृथया सह पाण्डवा अपि समभ्येत्य स्वैरं पप्रच्छुः । ततोऽसौ मनोरमं नानादेशचरितं कथयित्वा प्रसंगोपात्तं पांचालदेशाधिपद्रुपदचरित्रमपि यदा वर्णयितुमारब्धवान् । तदाऽन्येपि सोत्कंठाः श्रोतारस्तत्रागत्योपस्थिता बभूवुः ।

पुरा द्रोणशिष्यैर्निर्जितो राजा द्रोणाय राज्यार्धं दत्वाऽन्तः कोपादतप्यत । ततो बहुपुत्रोऽपि स द्रोणबधेच्छया सदृशं सुतं वाञ्छन् जान्हवीतीरं गत्वा मुनीन् सिषेवे ।

अथैकदा प्रहृष्टमुपयाजं राजाऽब्रवीत् । विप्रवर ! भवत्प्रसादाद् द्रोणहन्तारं सुतमभिल-षामि । किम्बहुना । तद्विजितोऽहं न रात्रौ सुखेन स्वपिमि । न च दिवाऽऽनन्देन भुंजे । यदि त्वमस्मिन् कर्मणि मम सहायको भविष्यसि । तर्हि कृतकृत्यस्तुभ्यं हेमालंकृतमर्बुदं गवां प्रदास्यामीति मे दृढसंकल्पः । तच्छ्रुत्वोपयाजोऽब्रवीत् । राजन् ! ब्राह्मणोऽहं नैवंविधेषु क्षुद्रकर्मसु युक्तोभवामि । अस्ति मे कनीयान् भ्राता । सोऽस्मिन्कर्मणि कदा-चित् प्रविशेत् ? पुराऽशुद्धभूमिपतितं फलं लौल्येन भक्षयन् लुब्धोऽयमिति मया निर्धारितः । निशम्यैवं राजा याजमुपेत्य प्रणतोऽब्रवीत् । ऋषिराज ! द्रोणान्तकं पुत्रं मे देहि । तुभ्यमहमसंख्यधनं प्रदास्यामीतिवाक्यमाकर्ण्य धनवांछया याजस्तत्प्रार्थना-मंगीचकार । ततोऽथर्ववेदविद् याजो विधिवद्धोमंचकार । अथाग्निमध्यात् साऽसिकार्मुकोऽ-र्चिषांसंघात इवधृष्टद्युम्नाभिधः सुतोजातः । राजन् ! तवाऽसौसूनुर्द्रोणान्तक इति गग-नवाणीं श्रुत्वा द्रुपदः शोकं तत्याज । ततो विज्ञाततत्कथो द्रोणोऽपि दैवमलंघ्यशासनं मत्वा चिन्तां जहौ । तस्यैवानुजैषा यागकुण्डाच्चनिर्गता राजीवलोचना कृष्णा भूभारशान्त्यै जातेतिगगनवाणी समुच्चचार । तस्या दृश्यः स्वयंवरमहोत्सवः पार्षतपुरे भवितेतिद्विज-मुखाच्छ्रुत्वा वृत्तं व्यथिताः पाण्डवाश्चित्रार्पिता इव क्षणमतिष्ठन् । ततः कुंत्युवाच । पुत्राः देशोऽयंनार्थिवत्सलः । कृशवेतनाश्चाऽत्र वयं सीदामोऽतः समृद्धान् पांचालान् गच्छामः निशम्यैतन्मातृवचनं गंतुमुद्यतेषु साक्षात् सत्यवतीसुतो भगवान् वेदव्यासस्तत्रसमागच्छत् अथ कुशलप्रश्नानन्तरं तैः पृष्टो ऋषिराजो द्रौपदीपूर्वजन्मवृत्तान्तं वर्णयितुमारब्धवान् ।

पुराऽऽसीत् तपोवने कापि मुनिकन्यका । साऽथमहत्तपसा देवाधिदेवं महादेवं प्रसादयामास । अथ प्रसन्नोभगवान् यदा वरं ब्रूहीत्यादिशत्तदा सा कौतुकात् पतिंदेहीति पंचकृत्वो वरं ययाचे । ततो गिरिजापतिस्तस्याः पंचगुणां वाचं निशम्य भद्रेऽन्य-जन्मनि ते पंचैवभर्तारोभाविष्यन्तीत्यभाषत । सैषा द्रोपदी पांचालनगरे जातास्ति । तत्र यातानां भवतामसौ भार्याभविष्यतीति कथयित्वाऽन्तर्हिते व्यासे ब्राह्मणानामंत्र्य च पाण्डवा गंगातटवर्तिसोमश्रव तीर्थं जग्मुः । तत्र प्रदोषारंभे जलकेलिकुतूहली गंधर्वपतिश्चित्ररथः पद्मानना।भिः प्रियाभिर्विहंगमवाचालां गंगां मुहुर्विलोडयन्नास्ते । तत्र तासां हारहास-दंतपत्रकर्पूरकर्णपूरैश्च तमो विसूत्रितामिवाऽभूत् । तस्मिन्नेवावसरे ज्वलदुल्मुकपा-णिना पार्थेन प्रकाशितााग्राः पाण्डवा विश्रामार्थमतिष्ठन् । ततस्तद्दर्शनाद् वस्त्रावृतकुच-स्थलाः स्वकान्ता विलोक्य क्रोधान्धश्चित्ररथोऽग्रस्थितमर्जुनं प्रोवाच । अहो नु देशकालज्ञान-शून्यायूयम् ! यदकाण्डे महीमिमामस्मत्केलिस्थलीं प्राप्ताः । मोहमेवाऽत्र कारणमव

गच्छामि । नृणां तु किल वासरे संचारः । तमः पिहितादिङ्मुखोऽयंक्षणस्तु खेचराणाम् । अहमंगारपर्णाख्यश्चित्ररथो गन्धर्वराजः । गंगाकूलवर्तिवनमिदं मम विनोदस्थानम् । एवमाकर्ण्यार्ऽर्जुनोऽब्रवीत् । अहोनु मदनोन्मादात् किंवा मोहात् प्रगल्भसे ? इयं त्रैलोक्यगामिनी गंगा समस्तजनपावनी निजोपवनकुल्येव कस्य क्रीडापरिग्रहोऽस्ति । सुरसिद्धद्विजातिप्रणामे गोतर्पणे पुण्यजलसंस्पर्शे च को वा परीक्षते कालमित्यर्जुनवचः श्रुत्वा त्वरितमेव रथमारुह्य दोर्दण्डमण्डलीकृतकार्मुकः सायकं विससर्ज । ततस्तेजोनिधिः फल्गुणोऽपि तन्मार्गणान् स्ववाणैराशु निवार्य पावकास्त्रं प्रादुश्चकार । अथ तत् प्रभाभिर्ज्वालाजटायुषि नभोमण्डले संजाते गन्धर्वराजरथः क्षणाद् भस्मसादभवत् । ततोऽर्जुनस्तं भूमिपतितं यावत् मंदरामोदशालिषु केशेष्वाकर्षति तावत्तस्य व्याकीर्णमाल्योत्था भ्रमरावली तत्परित्राणयांचातारप्रलापिनीकृपेव रुराव । अथैतस्मिन् गृहीते भीता तत्पत्नी कुंभीनसी धर्मराजं शरणमयासीत् । ततो युधिष्ठिरेण वारितो धनंजयो "नहिवीरा विषमस्थान् विक्रमं दर्शयंती"तिन्यायेन कृपया तममुंचत् । ततः प्रणतशेखरो गंधर्वः पार्थं प्रोवाच । वीर ! त्वया विनिर्जितचित्ररथस्य मेऽद्यांगारपर्णता निवृत्ता । त्वमसि मम प्राणदः सखाऽतो मत्सकाशाच्चाक्षुषीं विद्यां गृहाण । प्रभावादस्याः सर्वं विलोकयिष्यसि । विनिमयेन मह्यमेतदाग्नेयाऽस्त्रं प्रयच्छ । युद्धकाले भवद्भ्योऽक्षयं तुरंगशतपंचकं दास्यामीति प्रतिज्ञाय पावकास्त्रविनिमयेन पार्थाय चाक्षुषीं विद्यां प्रादात् । ततः किरीटी प्रीत्या गन्धर्वराजं पप्रच्छ । राजन् ! कथमस्मास्वपरिचितेष्वेवंविक्रियां गतवानासि ? तच्छ्रुत्वा चित्ररथोऽब्रवीत् । सखेऽपुरस्कृतविप्राणाम् अनग्नीनाम् अजापिनां च रात्रौ जाताधिकबलोत्कटा वयम् प्रभवामः । स्त्रीसमक्षं तदा मम विशेषेण रणोत्साहोऽभवत् । कांताकटाक्षहृष्टो जनो नहि मरणं वेत्ति । मित्र ! त्वयाऽहं परेण ब्रह्मचर्येण जितः । पुरोहितं विना कुतः क्षत्रियाणां शक्तिः ? तापत्य ! मंत्रज्ञपुरोहितसहितो यजमानास्त्रिलोकीं जयति । तच्छ्रुत्वाऽर्जुनोऽपृच्छत् । सखे ! कथमस्माकंतापत्यम् ? ततश्चित्ररथः प्रोवाच । शृणोतुभवान् सावधानः ।

पुरा भारतवंशे संबरणाख्यो नृपो बभूव । तद्यशोराशिमालोक्य मुग्धविद्याधरांगनाः स्फटिकाचलकूटेष्वपि विश्रांतिं न लेभिरे । अथैकदा मृगयासक्तो राजा वने विहरन् गिरिशिखरमारुह्य श्रान्ताश्वोऽतिष्ठत् । तत्र कुसुमेषोःकांतिसर्वस्वकोशमसामान्यलावण्यामृतवाहिनीं दिव्यकन्यामालोक्य च धीरोऽपि भूपतिर्विस्मयस्मेरकम्पानांक्रीडामण्डपतामियाय । ततस्तामुपसृत्य राजोवाच । चन्द्रानने ! का त्वम् ? कृपया देहि मे परिचयम् । कामेन तव दासतां नीतं माम् सेवस्व । एवमाकर्ण्य नृपवचनं नमद्वदनाम्बुजा सा बाला तत्र क्षणं-

स्थित्वा नभः समुत्पत्य चाऽदर्शनं प्रायात् । ततो नेत्रपद्मादिनाश्रियि गतायां तस्यां राज चक्रवाक इवाकुलो विरहसंतापं भेजे । उक्तं च समागमाभ्यासात् कस्य नाम प्रीति जायते । सातिशयो जनो दृष्टमात्र एव प्रीतिं पुष्णाति । ततः स तामपश्यन् विरह हितो वनं बभ्राम । अथाऽसौ तारप्रलापमुखरो मूर्छितो भुवि न्यपतत् । ततो गगनास्थि सा पतितं महीपालं विलोक्य समीपमुपसृत्य च लब्धसंज्ञं राजानं प्राह । भूपते ! अहमस्मि तपती नाम तपनतनया । यद्यपि त्वमद्यश्चत्रिषुलोकेषु सर्वगुणोदारो गीयसे । परम पित्राऽभ्यनुज्ञातैव विवाहमभिकामये । राजन् ! शैशवे पित्रायत्ता यौवने भर्त्रायत्ता वृद्ध च पुत्रायत्ता भवंति कुलस्त्रिय इति भाषित्वा दशनोद्योतैः शशिशतोज्वला दिशः कुर्वा तरलेक्षणा सा पुनरप्याकाशमुत्पपात । ततोऽभ्येत्य यातायां तस्यां पूर्वं श्रीखण्डसलिलै सिक्तः पश्चाद् विषैरुक्षित इव राजा पुनस्तापमगमत् । अथ ससैन्येषु मंत्रिषु समन्वि प्राप्तेष्वेको महामात्यस्तं चक्रवर्तिनं मूर्छाग्रस्तं विलोक्य विविधैः शीतोपचारैश्च सचेत विधाय कारणं पप्रच्छ । राजोवाच । सखे ! कामेनाऽहमिमांदशांनीतोऽस्मि । ततो ज्ञात वृत्तो मन्त्री तत्प्रतीकारार्थं राजपुरोहितं वशिष्ठमाजुहाव । अथागतो वशिष्ठो यजमानहिता द्वादशाहमुपोषितो भास्कराऽऽराधनं व्यधात् । ततः साक्षात्कारे सूर्यदेवे वशिष्ठस्तत्प ययाचे । अथ भगवान्दिनेशस्तुष्टस्तस्मै तां प्रायच्छत् । ततो मुनिस्तामवाप्य तस्मै भूपा प्रादात् । अथ मंदारकृतशेखरो राजा ताम् बालमृगीदृशं परिणीय निक्षिप्य च साचिवे राज्यभारं लताजालश्यामलाचलभूमिषु द्वादशसमा तया महाभागया सह विजहार ।

अथैकदाऽनावृष्टिवशाद् दुर्भिक्षनिपीडिता लुप्तमखश्रियश्च प्रजा महादुःखमन भवन् । ततोऽमात्या आवाहनार्थं नृपान्तिके दूतान् प्रेषयामासुः । अथ भोगासक्तोऽपि राज सचिवाभ्यर्थनया प्रजाहितार्थं सत्वरमेवाजगाम । ततस्तत्पुण्यप्रभावेण पर्जन्यो ववर्ष येन पृथ्वी सहसैव सस्यशालिनी बभूव । ततो राजा पूर्ववद्राजकार्यकमरोत् ।

तच्छ्रुत्वाऽर्जुनो यदा महामुनिवशिष्ठचरितं पप्रच्छ । तदा गन्धर्वराजोऽब्रवीत् । आसी दादियुगे महामुनिर्वसिष्ठः । यः क्रोधवन्हिना जगन्निर्दग्धुं शक्तोऽपि कालकृतं विप्रि सर्वं सेहे । लोकक्रीडाकारणपण्डितौ कामक्रोधावपि भयकंपितौ यस्य सदा पादसंबाह चक्राते । अथैकदा गाधिसुतो विश्वामित्रमहीपतिर्विपिने मृगानुसारी वशिष्ठाश्रमं प्रायात् ततस्तेन सबलवाहनो निमंत्रितो राजा तत् कामधेनुप्रभावाद् दिव्यभोगानवाप्य चकित बभूव । अथ प्रस्थानकाले लोभाकृष्टो भूपालो मनोनयननन्दिनीं नंदिनीं नाम तान्धे गवान्निचयैर्मुनिवरं ययाचे । तच्छ्रुत्वा मुनिः प्रोवाच । राजन् ! नाऽहं गोविक्रेता सर्वा

चनैर्गजाश्वैः किं माम् प्रलोभयसि ? किन्तुनाऽहं समग्रेण साम्राज्येनाऽपि दातुमेनां शक्नोमि । एवमाकर्ण्य लक्ष्मीबलोन्मत्तो राजा बलात्तामपाहरत् । अथ क्षमावता मुनीश्वरेण त्यक्ता सा विषण्णवदना धेनुः स्वशब्दात् पाल्हवान् शकृतःशकान् योनितो यवनतुरुष्कचीनम्लेच्छांश्चासृजत् । ततस्तैर्हन्यमानं विश्वामित्रसैन्यं क्षणाद् दुद्राव । ततो ब्रह्मतेजसा पराजितः कौशिको राजश्रियं परित्यज्य तत्प्राप्त्यै वनं गत्वा च तीव्रतपश्चचार । ब्रह्मर्षिपदं च लेभे ।

अत्रान्तरे सौदासनृपो मृगयारसाद् वने एकायने पथि व्रजन् वशिष्टतनयं शक्तिं दूरमपसर्पेत्यभाषत । तच्छ्रुत्वा कोपाकुलस्तत्सुतः प्रत्यवदत् । राजन् ! अहमग्रजन्मा त्वं च क्षत्रियोऽतोमामेवं वक्तुंनार्हसि । ततः कुपितः कल्मषपादो यातुधानवत्तमभिदुद्राव । अथाऽसहायोमुनिसुतस्तुच्छवार्तयाऽनया त्वं मनुष्यं हन्तुमिच्छस्यतो मनुष्यादोभवेत्यशपत् । ततो विषण्णो राजा स्वसदनं गत्वैकान्ते समुपाविशत् । अत्रान्तरे कश्चिन्मुनिर्नृपान्तिकमागत्य मांसभोजनमयाचत । तच्छ्रुत्वा राजाऽन्तः पुरं गत्वा सूदमाहूय च मुनये सत्वरं मांसभोजनं प्रयच्छेत्यादिदेश । अथ राज्ञादिष्टः पाचकः प्राह । महाराज ! कुतोऽर्धरात्रे मांसम् ? ततो राजोवाच । तर्हि द्विजायास्मै नरमांसं प्रयच्छ । निशम्यैवं वध्यवसुधां गतः सूदः शूलाग्रवर्तिनां मांसं क्षणेन संस्कृत्य विप्राय च भोजनं प्रादात् । अथ दिव्यदृष्टिर्ब्राह्मणस्तदभक्ष्यं ज्ञात्वा यो मदर्थंमनुजमांसमपाचयत् । स एव मनुजादो भवत्वित्यशपत् । ततः पुनरुक्तेन शापेन सद्य एव राक्षसत्वमापन्नं तत्रागतो विश्वामित्रोऽखिलान् वशिष्ठपुत्रान् भक्षयेति समादिशत् । अथ तेनादिष्टः स तपोवनं गत्वा शक्तिं प्रोवाच । रेमुनिपुत्र ! त्वद्दत्तः शापोऽयं त्वामुपस्थितः । अहं त्वत्तएव नृमांसभोजनमारभ इत्युक्त्वा तम् भक्षयांबभूव । ततोऽसौ घोराकृतीरुधिरसंप्लुतोऽन्यानपिवशिष्ठसुतान्निगीर्यापि तृप्तिं न जगाम । ततः पुत्रविरहितोमुनिर्निषकुटुंबं वनं दृष्ट्वा वज्रेण विदारित इव निश्चेष्टो बभूव । तस्य तां दशां विलोक्य सर्वेऽप्याश्रमस्था दुःखिनो बभूवुः ।

ततोऽसौ मुनिपत्न्या प्रबोधितोऽपि न शान्तिमवाप । अथैकदा स शोकसंतप्तो मेरुशृंगादपप्तत् । तथापि न पंचत्वं यातः । प्रोक्तं च । शोके बन्धुरिव स्निग्धोऽन्तको जीवितंनापकर्षति । ततः सोऽग्निं प्रविष्टः । तत्र पावकोऽपि तुषारतां दधार । मुखयाचितोमृत्युरपि न मिलतीतिसत्यैषा लोकोक्ति । अथाऽसौ पाशैरात्मानं बद्ध्वा नद्यां पपात । तत्राऽपि विपाशोऽभवत्तेन सा नदी विपाशेतिकथ्यते । अनंतरं सः कण्ठे विपुलां शिलां बद्ध्वा जलधिं विवेश । सोऽपि वीचिहस्तेन निवारितो जीवितं न तत्याज । ततःस मुनिर् "भगवता विधात्रायदेवविधीयत तेतदेव शुभाय" इति मत्वा मरणाद् विरराम ।

अथैकदा स तपोवने सुतवधूगर्भस्थस्य पौत्रस्य वेदाध्ययनध्वनिं श्रुत्वा पुत्रव
मुपसृत्य कारणं पप्रच्छ । ततः सा प्रोवाच । पितः ! तव सुतादहमस्याशावती
अथो ज्ञातवृत्तान्तो मुनिर्धैर्यं दधार । अथ गच्छता कालेन राक्षसावृतः पौष्योऽशनिमे
वद् गर्जन् स्नुषासहितं मुनिं हन्तुमभ्ययात् । ततो मन्त्रज्ञो महर्षिर्हुंकारेणैव तं विनष्टशा
विदधे । अथ मुक्तशापो राजा प्रणम्य तं व्यजिज्ञपत् । महर्षे ! पुरा राक्षसावृतचेतस
पापेन मया ऋतौ जायासमासक्तः कान्ताननन्यस्तनेत्रस्तरुणो ब्राह्मणो भक्षितः । त
शोकविह्वला तद्भार्या दयितासंगपर्यन्तमायुस्तेभवतादित्यशपत् । महामुने ! संप्र
मयि ब्रह्मचारिणि स्थिते वंशोऽयमिक्ष्वाकोर्नूनं खण्डितो भविष्यत्यतो मे क्षेत्रजं पुत्रं देहि । गुरो
त्वं हि नः कुले परायणमिति कल्माषपादेनाभ्यर्थितो मुनिर्विस्मृत्य महाविरोधं निः सं
मानसस्तां मदयन्तीं भेजे । ततः सा मुनेर्गर्भमासाद्य द्वादशवत्सरस्थितमश्मनातम
डयत् । तेनाऽश्मकः स सुतोऽभवत् । अत्रान्तरे शक्तिभार्या सुतमजीजनत् । यो गर्भस्थि
एव द्वादशसमाः सांगान् वेदान् जगौ । येन परासुः पिता धृत्या स्थापितस्तेनाऽ
पराशराऽभिधो लोके प्रसिद्धो बभूव । अस्यैव सुतो वेदव्यासो बभूव वेदान्तशास्त्रज्ञः ।

अथैकदा स मातृवचसा पितरं हतं ज्ञात्वा क्रोधात् त्रैलोक्यसंहाराभिमुखं मन
कार । ततः कालानलप्रभं पौत्रमालोक्य सर्वभूतहितबुद्ध्या कारुण्यस्निग्धलोचनोमुनि
प्रबोधयामास । वत्स ! मा क्रुधः । तव पिता पूर्णायुरेव दिवं गतः । लोकः स्वकर्मफल
भाक् । को हन्ता कश्च हन्यते ? पुरा कुबेरकल्पः कृतवीर्यो राजा वीतसंख्यैर्धनैर्भार्गवा
द्विजानपूरयत् । ततो दिनेषु गच्छत्सु तद्वंशजा दरिद्रा भूपा धनलोभेन दस्युगणा
भृगुकुलमलुंठयन् । यत्राऽन्यायेन धनसंग्रहः क्रियते । तत्र सत्यसंकोचाल् लुब्धसंप
स्वयमेव संकुचंति । ततो निर्धना नृपा धनतृष्णया गर्भस्थानपि बालकान् हंन्तुमारब्धाः । ए
हैहयैर्हन्यमानेषु भार्गवेषु भयादेका भृगुवधूश्च्युतं गर्भं दधार । अथाऽसौ शिशुरूरुं
त्वा न्यसरत् । तेन लोके और्व इति संज्ञां लेभे । ततस्तस्य दृशैव हैहयानां दृष्ट
विनष्टाः । ज्ञात्वैवं सर्वे हैहया यदा तं तुष्टुवुस्तदाऽयं कृपाकुलस्तेभ्यः शुभाशीर्वा
प्रादात् । ततो लब्धवरास्ते दृष्टिमंतो बभूवुः । अथ लोकेऽस्य मुनेर्ब्रह्मतेजोऽतिख्यातिमवाप

अथैकदा स बालको मातरं भृगुवंशसम्बन्धिनीं वार्तामपृच्छत् । तच्छ्रुत्वा सा प्र
वाच । वत्स ! किं कथयानि ? पुरा धनलुब्धा हैहया यदा भार्गववंशं विनाशयामासुस्त
दाऽहं महताकष्टेन त्वामरक्षम् । निशम्यैवं सबालकोऽखिललोकविनाशाय यदोद्यतो बभू
तदाजगत्प्लोषशंकितास्तत्पितरः स्वयं तं प्रबोध्य तस्मादुपद्रवाल्लोकान् ररक्षुः । ततः

स्वक्रोधाग्निं समुद्रे प्राक्षिपत् । तेन समुद्रस्थोऽग्निरौर्व इति कथ्यते । एवं यथा स मुनिः क्रोधं परित्यज्य सुखी बभूव । तथैव पुत्र ! त्वमपि क्रोधं त्यक्त्वा शांतिसुखं लभस्व । क्रोधः पूर्वं कर्तारं नाशयत्यनंतरं च शत्रुमित्युपदिश्यज्ञानवान् मुनिर्विरराम ।

एवं वशिष्ठवचसा त्रिजगत्क्षयाद्विरतः पराशरो रक्षःसत्रेणाग्नौ राक्षसान् जुहाव । ततो वंशप्रतिष्ठायै मुनिवृंदसमेतः पुलस्त्यस्तत्रागत्य तं प्रबोधयामास । ततो गुरुजनानुरोधात् पराशरो राक्षससत्रायासाद्विरक्तो बभूव। अनेनाज्ञापालनेन सर्वेमुनयस्तमभ्यनंदन् । ततोऽसौ रक्षोघ्नं यज्ञवह्निं हिमभूभृत उत्तरे वृक्षे तत्याज ।

एतदाकर्ण्याऽर्जुनोऽपृच्छत् । सखे ! ऽस्माकं कल्याणाय कः समुचितः पुरोहितः ? तच्छ्रुत्वा चित्ररथोऽब्रवीत् । मित्र ! उचकाभिधे तीर्थे महर्षिदेवलानुजो वेदवेदांगज्ञाता धौम्यो नाम महामुनिर्निवसति । सोऽस्ति भवद्योग्यः पुरोहितः । असाववश्यं युष्माकं सर्वार्थान् साधयिष्यतीति कथयित्वा गंधर्वराजश् चित्ररथो राजधानीं जगाम ।

अथाऽन्येद्युः प्रहृष्टाः पाण्डवास्तदुद्दिष्टवर्त्मना धौम्याश्रमं गत्वा प्रणतिपुरस्सरं तं पुरोहितं चक्रुः । ततो मात्रासहितास्ते तं श्रुतिपारगं पुरस्कृत्य पुरोधसं कृष्णास्वयंवरं द्रष्टुं पांचालनगरं प्रतस्थिरे । ततो मार्गे श्रेयोनिधिं पाराशर्यं विलोक्य समातृकाः पाण्डवा अतीव संतुष्टा बभूवुः । अथ व्यासानुमता ब्राह्मणवेशास् ते राजेन्द्रकुंजरघटातुरंगरथसंकुलां पुरीं प्रविश्य कुंभकारनिवेशने स्थितिं चक्रुः । ततोऽपरेऽन्हि ब्राह्ममुहूर्ते समुत्थाय स्नात्वा कृतनित्यकृत्याश्च श्रीगणेशमनुनीय रंगभूमिं प्रातिष्ठन्त । सपुरोहितास्ते पाण्डवाः ।

ततस्ते विविधरत्नमण्डपमण्डितां देवर्षिब्रह्मर्षिमहर्षिराजर्षिभिश्चोपसेवितां देवराजसभोपमां तां स्वयम्वरमहीं प्रापुः । अथ प्रबन्धकर्तृभिः संकेतितास्ते ब्राह्मणवृन्दमध्ये समुपविश्येतस्ततो रंगभूमिशोभानिरीक्षणे दत्तादरा बभूवुः । पंचापि भ्रातरः पाण्डवाः ।

तत्र चारुकटका रत्नभ्राजिष्णुशेखराश्चन्दनागुरुधूपिताश्च महीपाला महार्हरत्नेषु हेमसिंहासनेषु चोपविष्टा मेरुकूटेष्वमरा इव विरेजुः । तत्र राजा दुर्योधनो नक्षत्राणां मध्ये सुधांशुरिव शुशुभे । अथ पार्षतोऽब्रवीत् । महानुभावाः ! क्षत्रियाणां तु परीक्षा धनुर्वेदे हि भवति । इदमधृष्यं कार्मुकं राधायंत्रं च मम तनयावरणे शौर्यशुल्करूपेण तिष्ठति । भवद्विधानां शस्त्राऽस्त्रविद्याविशारदानां विनोदायाऽयं लक्ष्यवेध इति निवेद्य स्वासनमलंचकार । निशम्यैवं द्रुपदवचनं सर्वेस्वयंवरस्था नृपाः साधुसाध्वितिजगदुः ।

ततः स्वच्छकांतिदुकूलिनी त्रिजगद्विजयारंभे मनोभुवो वैजयंतीव कृष्णाऽदृश्यत । अथ पादनखश्रेणीप्रतिबिम्बिता राजमण्डली तस्या लज्जावनतमाननं द्रष्टुं प्रवृत्तेव रराज ।

ततो धृष्टद्युम्नो जयद्विपालानशोभिना दोष्णा वंदिनां गिरो निवार्याऽवदत् । नरेन्द्र
चन्द्राः ! कर्पूरपूरशुभ्रयशस्त्विषाम् भवतामयं समाजः कस्य न नयनोत्सवाय ? युष्माकं
गुणवर्णने च न प्रवर्तते नो वाणी । धनुरेतत् लक्ष्यमिदम् पणप्राप्यैषा च कृष्णेति
विज्ञाय यद्युक्तं तदनुष्ठीयताम् । ततो भगिनीं बभाषे । कृष्णे ! माननीयान् मुनीन्
प्रणम्य विस्रब्धा भूपालसमाजं पश्य । यो लक्ष्यघ्नः स एव तव पतिर्भूयात् । भगिनि
अयं राजेन्द्रशेखरो हस्तिनापुराधीशः श्रीमान् दुर्योधनः । यस्य राजलक्ष्मीं सुहृद
निजवद् मन्यंते । एते चास्य दुःशासनपुरस्सरा वीरभ्रातरः । येषां भुजपंजरे नृपश्री
केलिहंसीव विभाति । स्वसः ! इममर्थिसार्थसुधार्णवमंगपतिं कर्णं पश्य । यस्य नाम्ना
शात्रवो विकर्णो भवति । भद्रे ! यत्प्रतापाग्निः प्रोषितारातिनिःश्वासैरेव जागर्ति । सोऽ
गांधारपतेः सुबलस्योत्तराधिकारी शकुनिः । वत्से ! ऽयं षोडषस्त्रीसहस्राक्षिभृंगालीकमल
करः कमलनयनः केशिनिषूदनः कृष्णः । अयमरिवारणो मदश्रियैरावणोपमो बलभद्रः
यं रेवती चित्रा चन्द्रमसमिवोपसेवते । अयं कृतवर्मा । अयमनिरुद्धः । असौ सात्यकिः
एषोऽक्रूरः । अयमुद्धवः । मत्स्यराजोऽयम् । अयंवैराटिः । काम्बोजोऽयम् । अयंसु
क्षिणः । अयंचशंतनोर्भ्रातृजः सोमदत्तः । एते च भूरिश्रवः प्रभृतयः सोमदत्तसुताः
अयंमद्रेशः शल्यः । अयं च भगदत्तः । किम्बहुना बहवोभूपालाः कुलकान्तिसम्पन्ना
स्त्वदर्थमत्र समुपस्थिताः । परं यो राधाभेत्ता स एव तव वरो भवत्विति संभा
विशश्राम । एवमाकर्ण्ययाज्ञसेनी मनसा मुहुर्मुहुर् भगवन्तं सस्मार ।

इत्थं पांचाले ब्रुवति हेलाकलितधन्विनो नरेश्वराश्चापाभिमुखमुत्तस्थुः । त
दर्पजृंभाभिरामाणां भुजस्तंभावलोकिनां भूमिपालानां कोऽप्यपूर्वः संरंभः स मनोभ
बभूव । तस्मिन्नवसरे शौरिर्बलभद्रमभाषत । भ्रातः ! द्विजमण्डले स्थितान् प्रच्छन्न
पाण्डवानिमान् पश्य । जतुगृहान्मुक्ताः प्राप्तयौवना ध्रुवं स्वभुजदर्पात् सर्वराजकमन्तर्बर
कलयंतो राजंते । इति मधुरिपौ स्वैरं भाषमाणे सर्वे नराधिपा अहंपूर्विकया धनुषोऽभि
ससृपुः । ततस्तद्दर्शनाकृष्टैः सुरैः संपूरितेऽम्बरे लिखिता इव भूपालाः कृष्णान्य
दृशाश्चकाशिरे । ततो यदा कोऽपि गिरिगौरवं तत् कार्मुकमधिज्यं कर्तुं नाशकत्
तदा ते सर्वेऽपि भूपाः कृष्णालाभसर्वस्वे सद्यश् छिन्नमनोरथा बभूवुः । एवं विध्वस्त
येषु भग्नोत्साहेषु राजसु मानिनां तप्तनिःश्वासैर्ग्लानिप्राप्तेषु च हारेषु धनुर्भृतामधः प
मानं समुद्धरन्निव द्विजमध्यान्महाभुजोऽर्जुनः समुत्तस्थौ । ततस्तस्मिन् कार्मुकाभि
लज्जिता द्विजा परस्परं जगदुः । अहो नु ब्रह्मसदृशामेवप्रमादिनोऽस्य जाड्यम् । को

गत्वैनं न निवारयति ? अपि शल्यप्रभृतिभिर्महारथैर्येन्नधृतं मोहादयं वटुस् तदधिज्यं कर्तुं कथं समीहते ? संप्रति वयं भूभुजां विडम्बनीया द्वेष्या वा भविष्यामः । अहो ! एकस्यैवास्य निकारेण सर्वोऽयं सार्थोऽवश्यं नाशमेष्यति । अथवाऽयं कदाचित् कर्तुं शक्तः स्याद्यतोऽयं देवरूपो विलोक्यते । लोके प्रच्छन्नतेजसः सारं वा फल्गुतां वस्तुतः को ज्ञातुं शक्नोति ? एवं ब्रुवत्सु सर्वेषु रामाभिरामी सव्यसाची सहसा विद्ध्वा च लक्ष्यमपातयत् । यदैव किरीटिनो बाणस्तस्मिन् लक्ष्ये न्यपतत् । तदैव स्मरसायकाः कृष्णाहृदयं विविशुः । ततः सुरोत्सृष्टपुष्पवर्षैः पार्थस्तु शुभ्रोऽभवत् । तदुत्थैर्भृंगौघै रिव नृपा मलिनतां ययुः । ततः कृष्णा कटाक्षांशुनीलोत्पलविराजितां स्रजं धनंजयकण्ठे प्राक्षिपत् । अथानंदोत्फुल्लनयनो द्रुपदोऽपि सहात्मजैः सासूयं भूपालानवलोकयन् विजयमभ्यनंदत् । ततो महीपालाः क्षणमन्योऽन्यं विलोक्यावमानाग्निसंतापप्रोन्मिषत्स्वेदबिन्दव आरक्तनयनांभोजव्यंजितोऽर्जितमन्यवश्च प्रोचुः । अहो ! मिथ्याविनीतेन धूर्तता निधिना लम्बकूर्चेन द्रुपदेनाऽनेन मानिनो महीपालावयं संदेहदोलतुलामारोप्य विडम्बिताः । अहो ! सरलैरस्माभिः स्वयं स्फटिकनिर्मलं यशोऽसाधुजनसंपर्कपंकेन मलिनीकृतम् । अहह ! राजसभायां येन द्विजेनाऽति चापलंकृतम् । तेनैव सह योद्धव्यम् । अथवा द्रुपदोऽयं बध्यो योऽस्मै कन्यां दातुं समुद्यतः । अहो ! सदाचारविपर्ययं कथं नाम सहामहे । राजयोग्योऽयं स्वयम्वरो न ब्राह्मणार्हः इत्युक्त्वा भ्रुकुटीकुटिलाननाः सर्वे नृपाः पार्षतभूपालं हन्तुमुद्यताः । ततो द्रुपदः सर्वान् क्रुद्धान् विलोक्य ब्राह्मणान् शरणंगत्वाऽब्रवीत् । द्विजवराः ! रक्षतास्माद् घोरसंकटान्माम् । यतोभवन्तितद्द्विजा दयालवः ।

तच्छ्रुत्वा तेऽपि तत्सहायार्थं समन्ततसूसमुत्तस्थुः । ततो विहस्य विजयो रणाद् द्विजान् विनिवार्य तदेव धनुरादाय तान् पार्थिवान् समुपाद्रवत् । ततो गिरिगौरवो भीमसेनोऽपि सुसंरब्धो महीरुहमुन्मूल्य तत्प्रहारैस्तं राजमण्डलं छिन्नभिन्नमकरोत् । ततोऽतिमानी कर्णः किरीटिनः प्रभावसदृशमाकारं वीक्ष्य समभ्येत्य च तं शरैर्जटिलं चकार । ततोऽर्जुनभुजोत्सृष्टान् सरलायताँश्च सायकान् समरे कर्णः खलः साधुगुणानिव सोढुं नाशकत् । ततः शौर्यसंपच्छंकितकर्णः फाल्गुणमब्रवीत् । द्विज ! त्वं किं साक्षाद्धनुर्वेदोऽसि । आहोस्वित् परशुरामः शक्रो वा देवराजः ? निशम्यैतत् कर्णवचो धनंजयो हसन्नूचे । यो वा को वा भवामि । तवानेन किम् ? सांप्रतं तु मया सह युद्ध्यस्व । न मे जीवन् गृहमुखं द्रक्ष्यसीत्युक्त्वा मृणालकोमलभुजान् सुकुमारपराक्रमान् दुःशासनादीनतिक्रम्य चण्डकोदण्डमण्डलान्तरनिर्गतैः शरैस्तीक्ष्णांशुः करैरिव तं कर्णं क्षिप्रमपूरयत् । अत्रांतरे

संभ्रान्तो भीमसेनोऽपि शल्यदुर्योधनौ जित्वा तौ शौर्यभुजयोः केयूरतामिवानिनाय । तत
भीमेन बाहुयुद्धेन सराजके शल्ये जिते ब्रह्मतेजोविशंकिता राजानो युद्धं शमयामासुः
ततो यमाभ्यां सह महामतौ युधिष्ठिरे समायाते भीमफल्गुणौ कृष्णां समादाय कौंतेय
मनुसस्रतुः । अथ कुंभकारप्रातिवेश्मिकब्राह्मणगृहकर्मशालास्थिताम् मातरं दूरादेव भीमा
र्जुनावूचतुः । देवि ! अद्य काऽप्यपूर्वा भिक्षा समासादिता । तच्छ्रुत्वा निशि ज्ञाताकुंत
निशिसमं भुज्यतामिति प्रत्यवदत् । ततो भ्राजिष्णुभूषणां तां द्रोपदीं पुरो दृष्ट्वा हर्षविषाददोला
धिरूढेव स्थिरतां न लेभे । ततस्ते खिन्नां तां विलोक्य मिथो विहितसंविदः सर्वेषां न
कृष्णा भविष्यतीति समादधुः । अथ विक्रमसूचितान् पाण्डवान् विज्ञाय बलभद्रवासुदे
पाण्डवान् द्रष्टुं गुप्तरीत्या समाजग्मतुः । ततः पितृष्वसुश्चरणयोः प्रणिपत्य युधिष्ठिरादि
सहामिलताम् । ततः कुशलप्रश्नानन्तरं युधिष्ठिरमुखात् सर्ववृत्तमवगम्य वाष्पपूर्णेक्षण
कृष्णः प्रोवाच । धर्मनंदन ! गतानि दुःखदिनानि । शुक्लपक्षागम इव सम्प्रतिसुख
समयोऽयमुपस्थितः । पार्थेनाऽद्य राजसमाजे यशोधरा कृष्णा प्राप्ता । भारतजयश्रीरिव पूर्व
पुण्यप्रभावेण युष्माकं सर्वे मनोरथाः सिद्धिमेष्यंतीति समाश्वास्य रामकृष्णौ स्वमण्ड
न्यवर्तेताम् । ततः पाण्डवा अपि द्रोपदीमवाप्य भाग्योदयं मन्यमानाः शांतिमवापुः ।

अस्मिन्नेवावसरे शंकाग्रस्तो धृष्टद्युम्नोऽनुजावृत्तं विज्ञातुमितस्ततो भ्रमन् तत्राग
भार्गवगृहोपान्ते छन्नस्तेषां कथान्तरे कृष्णेत्याव्हानं क्षत्रियोचिताश्चसर्वाः कथाः शुश्राव
ततः प्रहृष्टो द्रुपदमभ्येत्य प्राह । तात ! सा मम भगिनी राजेन्द्रवंश्यसंगता रत्नकांचने
व व्यराजत । एवमाकर्ण्य पुत्रवचो द्रुपदोऽत्यानंदमनुभवन् स्वपुरोहितं विसृज्य च पाण्ड
सुतान्निजालये समाहूतवान् । ततश्चतुरैर्नृपसेवकैर्नृपवीक्षायै कल्पितं क्षमापयोग्यमुपाय
स्वीकृत्य ब्राह्मणसंबंधि द्रुपदसंदेहं पाण्डवा निवारयामासुः । अथ पार्षतो भुक्त्वोत्तरमास
नान् तान् पूजयित्वा पूर्वमाकारेणाऽपि वर्णितमभिजनं पुनः पप्रच्छ । महोदयाः ! के यूयम्

अथ मेघगंभीरया गिरा क्रीडाशिखण्डिनामाचार्यकं कुर्वन्निव युधिष्ठिरोऽवादीत्
राजन् ! अनन्यसदृशाः प्रतापानुगुणाः सत्वसंपन्नाश्चहीनाभिजने न संभवंति ।
साधारणपुरुषो राधाविभेदसदृशे परीक्षासागरे समुत्तीर्णोभवितुमर्हति ? अहम् युधिष्ठिर
अयंभीमसेनः । एषोऽर्जुनः । इमौ च नकुलसहदेवाविति पीयूषसंसिक्तमिव यौधिष्ठिरव
निशम्य सफलसंकल्पो द्रुपदः परमानंदमाससाद । अत्रान्तरे कृष्णां समादाय राजमा
कुन्ती नृपान्तः पुरमाविवेश । ततः पांचालराजः समाकर्ण्यामूलात्सर्ववृत्तान्तं धार्तराष्ट्
कुत्सयन् प्रोवाच । दिष्ट्या महाभयात्तस्माज्जतुगृहाद्यूयं मुक्ताः । दिष्ट्यैव सुकृतिना म

युष्मत् संबन्धः प्राप्तः । संप्रति श्वेतवाहनो मत्पुत्र्याः पाणिं गृह्णातु । तच्छ्रुत्वा मातृवाक्यं सत्यं कर्तुं कौंतेयः प्रोवाच । राजन् ! तव पुत्रीकरं वयं सर्वेऽपि ग्रहीष्यामः। अत्र मा विशंकस्व । यतो धर्मगतिः शास्त्रेषु सूक्ष्मतमा निगदितास्ति । त्वमपि च बहुश्रुतः ।

निशम्यैतदुत्कम्पिताशयो द्रुपदः प्राह । अहो ! धर्मज्ञोऽपि त्वमसत्सेव्यं निन्द्यमर्थं कथं मामाभिभाषसे ? कुलाचारमनपेक्ष्य लोकवेदाभ्याम् बहिष्कृतेऽस्मिन् कर्मणि कस्मात् प्रवर्तसे ? प्रवर्तयसि च ? एकपत्नीव्रतानारी बहुयोषिच्च पुरुषः श्रूयते । धर्म्यामिमांस्थितिं हेलया कथं हातुमर्हसीतिश्रुत्वा पार्थोऽपि तं प्रबोधयितुमारभत । राजन् ! वयं मातृभक्ताः । सर्वैः सह भुज्यतामितितयाज्ञप्ताः । अतः सत्यधना जना वयं कथं तद्वचनमन्यथा कर्त्तुं शक्ताः । शाखासहस्रिणो धर्मवृक्षस्य मूलं सत्यमिति धनंजयस्यापि वचः श्रुत्वा ससुतो नृपोऽवाङ्मुखस्तूष्णीमतिष्ठत् । ततः क्षणं ध्यात्वा राजा कुन्तीमपृच्छत् । साऽपि नृपं समभ्येत्य युधिष्ठिरवचनं परिपोषयामास । तच्छ्रुत्वा राजामूकमिवाऽतिष्ठत् ।

अत्रान्तरे समस्तसंशयच्छेत्ता भगवान् सत्यवतीसुतस्तत्र समागच्छत् । ततश्चूडाचुंबितभूतलैस्तैः समभ्यर्चितस् स तेषां विवाहधर्मसंशयं निवारयितुमाह । राजन् ! पुरा समग्रा जगती क्रतुक्रियाव्यग्रे यमे वीतमृत्युना प्रजाभारेण पीडिता बभूव । ततः पृथ्वीपरित्राणव्यापृतः पाकशासनश्चतुर्मुखदर्शनं कृत्वा यमयज्ञमहीं ययौ । तत्र मार्गे जान्हव्यां विषण्णवदनांबुजां दिव्यललनामालोक्य तां शोककारणं पप्रच्छ । तच्छ्रुत्वा सा गजगामिनी प्रोवाच । देवराज ! तूर्णमेव रहस्यं सर्वं ज्ञास्यसीत्युक्त्वाऽन्तर्दधे । अथ शक्रस्तामेवाऽनुव्रजन् गिरिशिखरमारुरोह । तत्र सिंहासनस्थमक्षैः क्रीडन्तं प्रणयिनीसखंच पुरुषं ददर्श । अथ दर्पाद् वृत्रहा प्रोवाच । अहो ! पुरःस्थितं जगन्नाथमपि मां विलोक्य न लज्जसे ? नूनं स्त्रीसन्निधौ विकलोऽपि जनः क्षणाच्छक्रायते। निशम्यैवं गिरिजापतिर्विहस्य दृग्विभागेन तं काष्ठमिवाऽचलं चक्रे । ततः समाप्तक्रीडो हासकिरणैः स्फाटिकं जगत् कुर्वाणो मद्गिरैनं दृप्तं मत्क्रोधबन्धनान्मुंचेति सबाष्पां स्त्रियं समादिदेश । ततस्तेनादिष्टा सा नाकनारी पाणिना तं शतक्रतुं पस्पर्श । सोऽथ स्पृष्टमात्रस्तया गतचेतनो भूत्वा भूमौ निपपात । लोके योऽभिमानी भवति पदे पदे तिरस्कारं स लभते ।

अथोमाकान्तस्तमब्रवीत् । अवलिप्त ! पुनर्मैवं दर्पं कृथाः । अधुनोत्थाय गिरिगुहामालोकयेति वचः श्रुत्वा कंदरांगतस्तत्र स तुल्याकृतिवयोवेशांश्चतुरोऽन्यानपि पुरंदरान् विलोकयामास । ततो विस्मितः शक्रश्चित्रार्पितइवाऽतिष्ठत् । अथ भगवानुवाच । इन्द्राः ! भूभारशान्तये पंचानामपि वो जन्म मानुषेलोके भवत्विति निशम्य कृतांजल-

यस्ते प्रार्थयामासुः । प्रभो ! क्षमस्वापराधम् । अपरंच नो जनका धर्मादयो देवा ए
भवन्त्विति प्रार्थयामासुः । ततः शतक्रतुरुवाच । नाथ ! एतेषांमध्ये मत् प्रतिनिधि
पंचमो मे सूनुरस्तु । देवाधिदेव ! महादेव ! मर्त्यलोकवासान्मां रक्ष । ततः प्रीतः सदा
शिवस्तथास्त्विति तस्मै वरं प्रादात् । उक्तं च । महात्मनां हि कोपा विनयावधयो भवंति
राजन् ! तेऽमीविश्वभुग्धृतिधामशिविशांतनवतेजस्विन इति पंचशक्राः पाण्डुसुता जाताः
या सुन्दरी च दृष्टपूर्वा सा देवांगना ऽत्र तव सुता समुद्भूता । पार्षत ! माऽन्यथ
मन्यस्व । सर्वमेतत् त्वं दिव्यचक्षुषा ऽवलोकयेति समादिश्य मुनिस्तस्मै ध्यानमयीं दृ
प्रादात् । ततस्तत्वं समालोक्य द्रुपदो धैर्यं दधार । अथो मुनिरपिराज्ञः परितोषं विधा
मुदितमनास् तपोवनमयासीत् । ततो नृपाः पाण्डवैर्लब्धां कृष्णां ज्ञात्वा विस्मयप्रकोपसंतापा
प्रपेदिरे । अथ दुःशासनप्रभृतयश्चाकर्ण्य पाण्डवाऽभ्युदयं हाः कष्टमिति भाषमाणा विधि
शासनं पुनः पुनर्निनिन्दुः । ततोऽकृतार्थेषु निवर्तमानेषु कौरवेषु पाण्डवेषु च सिद्धार्थे
क्षत्ता धृतराष्ट्रमुवाच । राजाधिराज ! दिष्ट्या त्वत्पुत्रैर्बलात् कृष्णा संप्राप्तेतिवचनमाकर्ण्योऽ
संतुष्टो राजा लक्ष्म्या सह कृष्णां दुर्योधनोऽध्यगच्छदिति मत्वाऽतिसंतुष्टोऽभवत् ।

अथ पुष्येन्दुपूजिते योगे धौम्येन मंत्रपुरस्कृते पावके विधिवद्धुते भूरिरत्नांबरप्र
पांचालैः पूजिताः पाण्डवाः क्रमेण कृष्णापाणिं जगृहुः । ततस्तस्मिन् विश्रुते महोत्स
भगवान्वासुदेवोऽपि बहुहयद्विपन् धनं प्राहिणोत् । तत्समवाप्य धनाढ्या बभूवुः पाण्डवाः

अथ विदुरः पुनरुवाच । देव ! जतुगृहान्मुक्तैस्तवभ्रातृजैर्दैवाज्जितमिति श्रुत्वा सं
ताकारो बहिर्हर्षप्रदर्शयन्निव प्रोवाच । भद्र ! ते मम पुत्राधिका दिष्ट्या जीवन्ति
अथाऽन्येद्युर्मन्युमूर्छितो दुर्योधनो विजने पितरमभ्येत्य प्रोवाच । तात ! कृतवैरान् पाण्ड
सुतान् कथं विस्मरसि ? मोहात् कृतमार्जवं परिणामे विषमं फलं जनयति । अविश्वासम
राज्ये शशांकधवलच्छत्रचामरविभ्रमैः श्रिया ध्रुवं समुपहस्यते । यश् चोरं द्विषं त्यक्तगृह
भार्यां वित्रासितं शत्रुं च पुनः संगृह्य शेते । स तैरेव पुनः प्रबोध्यते । राजन् ! सरल
शयस्त्वं शंकितशत्रौ विश्वासं मा कृथाः । बहुच्छलं राज्यं किलाऽऽहवै न भुज्यते ।
नरेश्वरा उपायैर्जीयन्ते । ते ऽप्युपेक्षिता दुर्जया भवंति । श्रूयते यत्तेषा मेकैव द्रौपदी महि
जाता । स्त्रियो हि कलेर्जीवितम् । अतो नूनमेकस्मिन् दिने ते ऽवश्यंमिथो योत्स्यन्त इत्य
भवसिद्धम् । अहमद्यैव तीक्ष्णैः कुशलैश्च प्रयोगैस्तान् विनाशयामि । यतः कालही
मनोरथः पश्चात्तापं हि पुष्णाति । एतदाकर्ण्य कर्णः प्रोवाच । राजन् ! मतिमद्भिर्यश
वद्विहिता अप्युपाया दैवावलोकनं विना न फलं प्रयच्छंति । मानी कृतवैरो वि

दृष्टसारश्च शत्रुः कदापि नोपेक्ष्यः । उपायमायायुक्तयस्तु कालयापनमुच्यते । निरुपायोजयस्त्वेकः पराक्रमएव । नरनाथ ! अद्यैव युद्धे पाण्डवाञ्जहि । कृष्णादिभिः पराधृत्तास्तेऽवश्यं दुर्जया भविष्यंति । पश्य । मुष्टिमेयशिखस्तुशिखी जलेन शममायाति । परं प्रवृद्धोऽधः स्थितैः संतप्तैरेवदृश्यते । निशम्यैतत् तनयस्नेहमोहितोऽम्बिकासुतोऽति संदेहाकुलितोऽभवत् । अथ नैकाकी निर्णयं कुर्यादितिविचिन्त्य धैर्यं दधार ।

ततो राजा भीष्मप्रमुखान्नयकोविदान् वृद्धानाहूय सुतसंकल्पे युक्ताऽयुक्तविनिश्चयं पप्रच्छ । तच्छ्रुत्वा समदर्शी पितामहो जगाद । राजन् ! नाऽद्यापि विकारं त्यक्तवानसि त्वम् ? परैरविज्ञातान्तरस्तेभ्यो राज्यार्धं वितीर्य परीवादविरहितं विभवं भुङ्धि । सुभटाश्चानृशंस्येन कुलीना बन्धुप्रीत्या प्रभविष्णवश्च विनयेन शोभंते । एवमुक्तवति गांगेये भारद्वाजोऽभ्यभाषत । नरपाल ! यत् सत्यव्रतेनोक्तं । तत् सर्वथैव स्वकुलभूतये श्रेयस्करम् । यः प्रमादी प्राप्तकालं पथ्यं हितं च वचोऽनुभविनां न शृणोति । सोऽचिरेणैव कालेन नष्टश्रीको भूत्वा ऽनुशोचति । संप्रत्युपस्थितं बंधुवैरं युक्त्या संक्रियताम् अन्यथा विवृते हि कुलभेदे विभूतयो नूनं प्रयास्यंति । निशम्यैतत् किंचिदाकूणितानन: कर्णः प्रोवाच । क्षितीश्वरा निजैः पुण्यैरेव जीवन्ति । अहो ! दानमानाभ्यां संपूजिता असामान्या अपि सचिवा यत् प्रभुंनेच्छंति ततोऽद्भुतं किम् ? पुराऽम्बरीषो राजा करणैर्हीनोऽतिविकलो निःश्वासालक्ष्यजीवितश्चाभवत् । तस्य लोभग्रस्तो महाकर्णिर्मंत्री सर्वमण्डलमावृत्य राज्यहरणे मनश्चकार । ततो नृपतिपुण्योत्थैरदृष्ट पुरुषैर्बलात् सचिवोऽसौ हतः । तस्माद्राज्ञां भाग्यानुगाः श्रियइत्यहं जाने । तच्छ्रुत्वा द्रोणोऽब्रवीत् । सूतपुत्र ! यद्येवं तर्हितु ध्रुवं दर्पान्धाः कौरवा हताः । त्वमेवाऽत्र सर्वज्ञोऽसि । ततो महामतिर्विदुरो धृतराष्ट्रं प्राह । राजन् ! अहो नु ते व्यसनामये भेषजं नास्ति । यद् भीष्मद्रोणयोः सुनयोचितं वचनपथ्यं पीयूषवत्सुखप्रदमपि तुभ्यं न रोचते ? दुर्योधनादय यथा तव सुतास्तथा पाण्डवा अपि धर्मेण तनया एव । तेषां दायाद्यं त्वं हृत्वा कियन्तं कालं जीविष्यसि ? बलिनो भीमसेनस्य धान्विनोऽर्जुनस्य च सर्वस्वमादाय को वीतशंको जीवितुं शक्तः ? अरोचनकृतोमन्युः सरलचेतसो युधिष्ठिरस्य हृदयादपकृष्य यशो लभस्व । संप्रति कुलश्रियै तान् प्रसाद्यानय । अद्यैव पौराणामानन्दोत्सवो भवतु । दुर्योधनोऽयं नवैश्वर्यमूढो हिताऽहिते न वेत्ति । शकुनिर्नृशंसाग्रणीः प्रधान स्तस्मान्न्यायाशा मृगतृष्णासदृशी । कर्णश्चाऽभिमानमूर्तिरन्तरङ्गसुहृत् । अहोऽनर्थपरंपरा । भगवानेवाऽत्र रक्षां विदधात्वितिनिवेद्य क्षत्ता स्वासने समुपाविशत् । सभासदश्चान्येऽपिमौनमभजन् तत्र सभायाम् ।

एवं विदुरेण विबोधितो धृतराष्ट्रोऽवदत् । भ्रातः ! साधूक्तं त्वया । सानुगस्
शीघ्रमितो गत्वा कौंतेयानत्रानय । मम मनस्तत्संगमसुधारसाय समुत्कण्ठते । निशम्यै
शीघ्रवाहनो विदुरस्तत्रगत्वा सर्वं वृत्तान्तं तेभ्यो निवेदयामास । तच्छ्रुत्वा महानुभावास्ते प
एडवा विस्मृत्य वैरभावं केशवद्रुपदयोर्वचसा नागपुरं समाययुः । ततस्ते बद्धरत्नमुकु
चारुकेयूरकुंडला जंगमा रोहणाचला इव विरेजिरे । तस्मिन्समये तद्दर्शनानंदसुधानि
न्दचेतसां पौराणां कोऽप्यपूर्वस्तत्कीर्त्तिगणनादरो बभूव । ततस्ते राजभवनंप्रविश्य प
पितामहं नत्वा द्रोणकृपौ च प्रणेमुः । अनंतरं धृतराष्ट्रं वंदित्वा यशस्विनीं गान्धारीं
प्राणमन् । ततो विदुरादीनभिवाद्य निर्दिष्टस्थानं गत्वाऽतिष्ठन् । अथाऽन्येद्युः कुरुरा
शासनात् खाण्डवप्रस्थं प्रययुः । तत्र व्यवसायिनस्ते विभक्तंदायाद्यं समवाप्य विचित्रगे
पुरान्वितं महाधनं पुरमावासयामासुः । ततो लोकपालोपमास्ते नंदनोद्यानसुंदरेपुरे विरा
माना न्यायेन चिरं प्रजाः पर्यपालयन् । अथैकदा सहानुजमास्थानस्थितं युधिष्ठिरंद्रष्टुंदे
र्षिर्नारदः समाययौ । ततस्ते समुत्थाय प्रभापूरितदिङ्मुखं तं मुनिराजं विधिवत्पाद्या
चमनादिभिः संपूजयामासुः । अथ महर्षिर्धर्मसूनुमनामयं पृष्ट्वा प्रणामार्थमागतां द्रोप
स्वस्तिवचनैरभ्यनंदत् । ततोविसृष्टायांतस्यां विजने मुनिः पाण्डवान्प्रोवाच । दिष्ट्याभि
पुनरालिंगिता यूयंकुशलिनः ? तच्छ्रुत्वा ते प्रत्यवदन् । महामुने ! भवद्विधानां गुरुजना
मनुग्रहेण वयं कृतकृत्याः स्मः । निशम्यैवं नारदोऽब्रवीत् । महाशयाः ! एकपत्नीसमास
र्भवद्भिरप्रमत्तैर्मिथः स्थातव्यम् । अन्यथाभेदमूलाद्योषितोऽवश्यमेवसंभावनास्तिमहाभयस्य

पुरा प्रजापतिवरोद्धतौ सुन्दोपसुन्दौदैत्यौदेवान्निर्जित्य निर्भयावभूताम् । ततः पर
जितादेवा मिथः संमन्त्र्य प्रजापतिमुपजग्मुः । अथ विरंचिर्भेदो हि नाशकोऽनयोरिति म
सर्वरत्नेभ्यस्तिलंतिलमनिंदितमंशमादायतिलोत्तमांनामसुरसुंदरीन्निर्ममे । ततस्सागजगा
नीधर्मकार्यार्थंदेवान्प्रदक्षिणीकृत्यदैत्याँल्लोभयितुं जगाम । अथ तां विलोक्य ब्रह्मा च
मुखो महादेव स्त्रिलोचनः शक्रः सहस्रनेत्रो मुनयश्चशताननाबभूवुः । ततः सा सुमध्य
तावसुरौविन्ध्योपवनासीनौ मत्वा तत्रैव गत्वा च पुष्पावचयं कर्त्तुमारब्धा । ततस्तस्
क्वचिद् बालानिलालोलदुकूलचलनाकुलम् क्वचिन्मधुकरापातकृतसीत्कारविभ्रमम्, क्व
चिल्लतांचलविसंस्थुलम् मनोभवाभोगाविभागसुभगं च वपुर्विलोक्य मधुसंमत्तौ तौ मम
कुरंगलोचना ममेयं मदिरेक्षणेतिवदंतौमिथोभेदमवापतुः । ततो रणे समुद्यतगदौ
दुर्मदौ परस्पर प्रहारैः स्फुटितौ गतजीवितौ च भूतलेन्यपप्तताम् । राजन् ! असिधारा
मिवदुराराध्यमेकपत्नीव्रतम् । एवं प्रोषितो भेदव्यसनपराभवाणामाश्रयस्थानम् लोके

अथ च पतिमनुसरन्ती माद्री निक्षेपरूपेण कुंत्यै नकुलसहदेवौ समर्प्य दिवं गता । अतो-मातृभेदोऽपि त्वया यत्नतो रक्षणीय इत्युपदिश्य मौनमाश्रिते महामुनौ युधिष्ठिरः प्राह । ऋषिराज ! अनुग्रहीता वयमनेन वचनामृतेन । ततो मिथोभेदाद्विशंकिताः पार्थादे-वर्षेः समक्षमेव व्यवस्थां चक्रुः । यः कोऽपि भ्राता कृष्णासंगतं भ्रातरं पश्येत् । स द्वादशवर्षाणि वने विचरन् तीर्थसेवी भवेदित्याकर्ण्य शोभनोऽयं विचार इति कथयित्वा महामुनिर्यथाभिमतं देशं गतः । ततः पाण्डवा अपि सदैव नियमं पालयन्त आसन् ।

अथैकदा कस्यचिद् ब्राह्मणस्य गा दस्यवोऽपाहरन् । ततस् तद्दुःखदुःखितो विप्रोऽ-र्जुनमभ्युपेत्य सगद्गदं प्राह । धर्मरक्षक ! त्वमेव गोब्राह्मणानां कष्टनिवारको ऽसि । अतो दुष्टान् निगृह्यार्तपरित्राणं कुरु । अथ धनंजयो न भेतव्यं नभेतव्यमित्यभिधाय ब्राह्मणं समाश्वासयामास । ततोऽर्जुनः शस्त्रागारं व्रजन् तत्र द्रौपदीसहितं युधिष्ठिरं दृष्ट्वा चिन्त-यामास । इतो मे समयभंगस्ततो मे पराधर्महानिरिति सत्यधर्मयोः संदेहाद् दोलायमान-चित्तो बभूव । ततो वनवासाद् गोब्राह्मणरक्षां गरीयसीं मत्वा शस्त्रागारं प्रविश्य निजा-युधं जग्राह । अथ यशोधनोऽर्जुनः सायकैर्दस्युमण्डलं दलशो विधाय समानीता गा ब्राह्मणाय समर्पयामास । ततः प्रभातेऽर्जुनो युधिष्ठिरं प्रणम्य प्रोवाच । राजन् ! स्वस्त्यस्तु ते । गतेऽन्हि प्रतिज्ञातश्च्युतोऽस्मि । तस्माद् भ्रष्टप्रतिज्ञं मान्तीर्थसेवायै समनु-ज्ञातुमर्हसि । धर्मसूनोरनुजस्यमेऽसत्यानुसरणं नोचितमित्यप्रियवचनं श्रुत्वा सबाष्पो राजा तमभाषत । वत्स ! नाऽत्र तव दोषलेशोऽस्ति । पूर्वं तु त्वयाऽहं दृष्टः । परमहं त्वां न-दृष्टवान् । अपरंच तवागमनं तत्र गोब्राह्मणहितायासीत् । तत्तु प्रतिज्ञाभंगाद्बहुगुण पुण्यफलदमतोऽस्मान् निष्किल्विषस्त्वं संत्यक्तुन्नार्हसि । एतन्निशम्य पार्थः प्राह । राजन् ! व्याजपूर्वकं धर्मसेवनं मह्यं न रोचत इत्याकर्ण्य राजा यथाकथंचित् तद्विरहे सहमतो बभूव । ततो ब्रह्मवादिभिरितिहासविशारदैश्चाद्विजैः सह पुण्यतीर्थानि सेव-मानोऽर्जुनो गंगाद्वारमगात् । तत्रैकदा स्नातुमवतीर्णं तं दृष्ट्वा नागकन्योलूपी मन्मथ-शराकृष्टा बभूव । ततो विजने तं समुपसृत्य पावकपूजक ! मां भजेत्यभाषत । अथ पृथु-लोचनस्स राजीवलोचनायास्तस्यास्तद्वचनमाकर्ण्य प्राह । सुभ्रु ! कांतिकल्लोलवलितां नयनामृतवाहिनीं स्वयमुपस्थितां च त्वां को न बहुमन्यते ? किन्त्वहं गुरुगिरा द्वाद-शसमा ब्रह्मचर्यव्रतदीक्षितः पुण्यतीर्थानि विचरिष्यामीति संभाष्य तूष्णीमतिष्ठत् । एत-दाकर्ण्य लज्जाविनमन्नेत्रांशुशबलस्तनी सा प्रोवाच । कमललोचन ! सर्वमहं तव व्रतरहस्यं जाने । परं योषिद्वधे सत्ये च गुरुलाघवं विचिन्त्य यथोचितमनुतिष्ठ । समयं

दत्त्व वा जीवितं संप्रयच्छ । प्रगल्भललनायोग्योऽयंक्रमः कन्यका विरुद्धःश्च सर्वथ त्वयाक्षन्तव्य इति निगद्य मौनमभजत् । निशम्यैवं प्रणयिवत्सलः पार्थस्ततसंगममहो त्सवं विलासमरसं भेजे । ततो ऽपरेऽह्नि विनताननां तामामंत्र्य सलिलादुन्मज्य च कृत भवितव्यमेव बलवत्तरंमन्यमानस् तीर्थान्तरं जगाम । ब्राह्मणाश्रपि तमनुसस्नुः ।

अथाऽसौ हिमवत्पार्श्वंगत्वाऽगस्त्य तटं प्राप । ततः पुण्यं बशिष्ठपर्वतमारुह्य ऽतिष्ठत् । ततो ऽसौ पुण्यात्मा नानातीर्थेषु स्नात्वा ब्राह्मणेभ्यो गोभूमिहिरण्यमंदिरारि च प्रादात् । तत उत्पलमालिनीं नदीमवगाह्य नैमिषारण्यमाययौ । ततो नंदाकौशिकं गयादितीर्थेषु स्नात्वांऽगवंगाश्चातीत्य जलधितटमयासीत् । ततो महेन्द्रपर्वतं दृष्ट्वा मणिपूरपुरं गतवान् । तत्र चित्रवाहनमहीभुजा सत्कृतोऽतिष्ठत् । अथैकदा तस लावण्यशालिनीं कन्यां दृष्ट्वाऽशिक्षितोऽप्यर्थनां स चित्रवाहनं तां ययाचे । ततस्तेनाऽर्थित सः कृतांजलिःप्राह । पार्थ ! धन्योऽहं यस्य त्वं संबन्धं समीहसे । किन्त्वस्माकं कु श्रीशंभुवरादेकपुत्रक्रमेणैव संततिरक्षयावर्तते । द्विः प्रसूति र्न विद्यते । सेयमेकैव कन्या जाता । तामहं पुत्रवत् परिपालयामि । अस्यास्सुतो मे राज्ये वंशविवर्धनो भवतु एवं पुत्रप्रदानशुल्केनेमांकन्यां ग्रहाणेत्यभिधाय स राजा तां तस्मैप्रादात् । ततस्तत्रबाल केलिनिकुंजेषु त्रस्तसारंगनेत्रया तया चित्रांगदया सह रममाणो वसंत सुभगास्तिस्र समा निनाय । तत्र स नानोपाख्यानानि च मुनिभ्यः शृण्वन् कालमनैषीत् । तत्रैका नदीमवतीर्णो बलाज्जानुलग्नं कुंजरोपमं ग्राहमुज्जहार । ततस्तेनोद्धृतः सः क्षणे ललनाऽभवत् । अथ पार्थेन पृष्टा साऽवदत् । वयं पंचसुरांगनास्तपस्विनस्तपांसि वि कृत्वा तच्छापान्मकरतांगताः । ततोऽनुनयैः प्रार्थितः सोऽब्रवीत् । यदाऽत्र कश्चिद्वीर समागत्य त्वामुद्धरिष्यति । तदा मे शापान्ते मुक्तिर्भविष्यति । कृपानिधे ! यथाऽहं त्व संतारिता तथा चतस्रोऽन्यामद्भगिनीरपि समुद्धर्तुमर्हसीति तयाऽर्थितः सः पुनस्ता श्च समुद्दधार । प्रभो ! ऽद्यासत्पुण्यनिवहै र्महीमिमां संप्राप्तोऽसि । अथ पार्थः सम मघवा जयंतमिव तस्यां बभ्रुवाहननामानं सुतमजीजनत् । ततो मातामहाय तं द ऽवधिंस्मरन् तामामंत्र्य च दक्षिणे सागरानूपे पंचतीर्थान्यवाप्तवान् ।

ततोऽर्जुनः पश्चिमां दिशमगात् । तत्र प्रभासतीर्थमासाद्य यतव्रतो ऽतिष्ठत् । अ कदा लब्धसमाचारो ऽच्युत स्तं प्रियसुहृदं समभ्येत्य परांप्रीतिमभजत् । ततो दि गच्छत्सु तौ सखायौ रैवतकं दृष्ट्वा रथमारुह्य च महोत्सवाकुलां द्वारकापुरीमगाताम् तत स्तत्र बलभद्रप्रभृतिभि र्यादवैः पूजितः प्रद्युम्न पुरस्सरैः सह नानावनेषूपवनेषु

विजहार । ततः कदाचिद् यात्रामहोत्सवविभूषितं रैवतकं द्रष्टुम् सप्रिया वृष्णयो ययुः । तेषां मध्ये तत्रगतः स स्रग्वी धनंजयो द्वितीयो मन्मथ इव रराज । तस्मिन्नेवाऽवसरे ललनावृन्दे समायाता कृष्णानुजा सुभद्रा छविगणमध्ये महाछविरिव शुशुभे । ततो निजकान्तिवितानेन संदेहितविभूषणां सुधागर्भसमुद्भूतां शीतांशुदेवतामिव तां विलोक्य पार्थः पुष्पायुधशरासारलक्ष्यतामयासीत् । अथ महोत्सवव्यग्रसमग्रजनमण्डले श्रीकृष्णानुमत्या जिष्णुस्तां सहसा जहार । तत स्तां हृतां विज्ञाय संहता वृष्णयो दिधक्षवो ऽग्नय-इव युद्धाय चुक्षुभुः । तत आमुक्तहेमकवचे, पर्याणिततुरंगमे, समारोपितमहाचापे च तेषां रणोद्यमे जाते वीभत्सुं निंदति, कोपकंपितेलांगलध्वजे, उग्रसेनेनिःश्वसिति, अम्ब रावलोकिनि सांबे, रणे वीरान्हन्तुमुत्कण्ठिते सारणे, संन्नद्धेऽनिरुद्धे, कृतवर्मणि विकृते, क्रूरतांयाते ऽक्रूरे, गदे समुद्यतगदे, निर्विकाराननोहरिर्मुहूर्तमौनमवलम्ब्य प्रोवाच । महानुभावाः ! हर्षक्षणे कोऽयं युष्माकं कोपविप्लवः ? कन्याधनं तु परकीयम् । अवश्यं कस्मैचिद् गुणशालिने प्रदेयैव । कथ्यताम् । पार्थाधिकोऽस्मिन् जगति को गुणवान् ? पृथ्वीरक्षामरण्येस्याग्रे नरेन्द्रताऽल्पमूल्यम् । यो धन्वी क्षिप्रहस्तः समरे च बहुबाहुस् तर्हि कस्तेन सह वृथा वैरं बध्नाति । तस्मै सुभद्रापतये दासीहयरथद्विपैःसमेतं द्रविणं प्रेष्यतामिति तु मे मतिः । तच्छ्रुत्वा सर्वे यादवा एवमस्त्विति ब्रुवाणा नागा विषमिव युद्धविचारं क्षणात्तत्यजुः । तस्मिन्दिने द्वारकायां परमोत्सवोऽभवत् ।

ततः कृतोद्वाहोऽर्जुनो युधिष्ठिरान्तिकं प्रायात् । अथ राजा सम्पूर्णसमयव्रतं पत्नीद्वितीयं च तं दृष्ट्वा ऽपरिमितं हर्षं समवाप । ततः कुंतीधर्मसुतवृकोदरान् प्रणम्य यमाभ्यां च नमस्कृतः पार्थः प्रच्छन्नेर्ष्याविषोल्बणां कृष्णां च प्रसादयामास । तत स्तेनाभ्यर्थिता सा प्रौढाधिकांप्रीतिमध्यगात् । उक्तंच । प्रणयकोपांते हि मानिनीनां प्रेम विवर्द्धते । अथ सुभद्राऽपि पूर्वं पृथापादवंदनं कृत्वा द्रोपदीं प्रणनाम । ततो रतिमिव तां चन्द्रमुखीं सुभद्रां दृष्ट्वा ऽन्यस्त्रियो निर्निमेषनेत्राभ्यां पश्यन्त्यो न तृप्तिमवापुः ।

ततः पार्थानामंत्र्य सानुगे हलधरे याते ऽर्जुनसौहार्दात् केशवस्तत्रैव व्यराजत । अथ स्मरवती सुभद्राऽपि किरीटिना सह रममाणा समये कमललोचनं तनयं सुषुवे । बालोऽप्ययं मन्युमानभूत्तेन लोके ऽभिमन्युरिति विश्रुतो ऽभवत् । सोऽथ पितुर्मातुलस्य च प्रसंगात् स्वल्पेनैव कालेन शस्त्राऽस्त्र विद्यायां निष्णातो बभूव । ततः कृष्णाऽपि कालेन क्रमशो युधिष्ठिरात् प्रतिबंध्यम्, मारुतेःसोमसुतं, धनंजयाच्छ्रुतकर्माणं, नकुलाच्छतानीकं, सहदेवाच्च श्रुतसेनं, सुतमजीजनत् । एवमासीच्छ्रीमती द्रोपदी पंच पुत्रा ।

अथ धर्मनिष्ठे युधिष्ठिरे क्षितिं संरक्षति लोको रामराज्येऽपि शिथिलादरो बभूव लुब्धा दानमानजिताः, प्रजाः परित्राणहृता, मान्याश्च विनयाकृष्टास्तस्ययशसे बभूवुः गुणैः संपत्, तया त्यागस्तेन च सुधासिता कीर्तिस्तया च जनानुरागः सदा व्यवर्धत

अथैकदा जलकेलिकुतूहलिनौ कृष्णार्जुनौ यमुनातीरमगच्छताम् । तत्र तौ बाल निलालोलवानीरतरुपल्लवे तीरे हारीकृताम्बुधाराभिर्विजह्रतुः । ततो मुरारिणा सहोत्ती क्रीडोद्यानमंदिरंप्रविश्य च मृगीदृशां गीतं शुश्राव । तस्मिन्नेवावसरे कश्चित्तेजोनि ब्राह्मणः समाययौ । ततस्तौ साकारं माहात्म्यमिव तं दृष्ट्वा रत्नपीठादुदतिष्ठताम् । सोऽ प्रणाममंगीकृत्य स्वस्तियुवाभ्यामित्याशीर्वादं वितीर्य च प्रोवाच । महाभागौ ! बहुभु विप्रोऽहमल्पाशनादतृप्तो युवां वदान्यौ मत्वा ऽत्रायातोऽस्मि । तच्छ्रुत्वा कृष्णार्जुना भाषताम् । भूदेव ! कृपया प्रियभोजनं वद । ततः प्रत्यक्षीकृतविग्रहो ऽग्निदेवो ऽब्रवीत्

महावीरौ ! वन्हिरहं क्षुधितः खाण्डवं वनम् ।
दग्धुमिच्छामि तत्राशु साहाय्यं कर्तुमर्हथः ॥

महाभागौ ! यदा यदाहं भोक्तुं प्रयते । तदा तदा हि तद्रक्षकरक्षार्थं महेन्द्रः स पैति । तेन मम प्रवेशो न भवति । संप्रति भवद्भुजोत्सृष्टशरजालनिवारितैः शक्रप्रयुक्त घोघैर्निर्मुक्तं वनमभ्यर्थय इति पावकेन याचितौ नरनारायणावोमित्युक्त्वा तत्समी साधने सन्नद्धावभूताम् । अथाग्निदेवोऽप्यजीर्णताकारणं ताभ्यां पृष्टो वक्तुमारभत ।

पुरा सूर्यवंशे श्वेतकिर्नाम राजा बभूव । तस्य द्वादशवार्षिके सत्रे सर्वदैवाग्नि प्रजज्वाल । ततस्तस्य याजका बहुभिः कर्मविस्तरैः खिन्ना घनाज्यधूमेन नष्टलोच बभूवुः । अथाऽविच्छिन्नाज्यनिवहैर्हुताशनो जाड्यमवाप । सोऽहं मंददीधितिः क्षी जाड्यादरुचिमाश्रितः । महानुभावौ ! ब्रह्मणादिष्टं सत्वाढ्यं खाण्डवं दग्धुं समाया ऽस्मि । घृतेनोत्पन्नं जाड्यं जांगलेनैवोपशाम्यतीत्याशया यदा यदाऽहं दग्धु मारब्धवान् तदा तदाहि मामसकृत् करकामेघैः पाकशासनः शांतं निनाय । तेनाहमत्यातु भवन्तौ धर्मसहायकौमत्वाऽत्रायातः । एतच्छ्रुत्वा पार्थो ऽब्रवीत् । भगवन् ! सन्ति दिव्यास्त्राणि । परंतु समरोचितं कर्मक्षमं कार्मुकं न विद्यते । भवत्कार्येसामान्यर क्षयिभिः सायकैश्च कार्यं न चलति । अपरंच मुरारेरपि पार्श्वे दृढदोर्दण्डखण्डप्रता सदृशं त्वत् कार्यक्षमं चायुधं नास्तीत्यर्जुनाभिप्रायं ज्ञात्वा ऽग्निर्वरुणं सस्मार । सच तमात्रः समाययौ । ततः सोऽग्निप्रेरितोऽर्जुनाय गाण्डीवं धनुरक्षय्या विषुधी चन्द्रधव श्वयुतं दिव्यरथं च प्रादात् । अथ कृतकृत्योऽर्जुनोऽग्निदेवं भूयोभूयः प्राणमत् ।

ततो देवकीनंदनाय सुदर्शनं चक्रं कौमोदकीं गदाञ्च दत्वाऽग्निनाऽदिष्टो ऽपांपतिः स्वलोकं जगाम । अथ भगवान्यदुपतिरपि पावकं संपूज्याऽतिसंतुष्टो बभूव ।

पुरा सोमराजो येन धनुषा त्रिलोकीञ्जितवान् । तद्धनुरवाप्तोऽर्जुनस्त्रिपुरारिरिवशुशुभे । ततो घोरवानरध्वजं दिव्यरथमारुह्य धनंजयो बन्हिमवदत् । देव ! विगतशंकस्त्वं विश खाण्डवमितिब्रुवाणे सजनार्दनेऽर्जुने ताभ्यां सहैव सप्तार्चिस्तत्रगत्वा तन्महावनं दग्धुमारब्धवान् । अथ ज्वालाविलोलजिव्हाभिर्जगद्वित्रासयन्निव बन्हिशिखाकुलं धूमान्धकारितं च व्योम बभूव । एवं चित्रभानुना गृहीते तस्मिन् कानने तिरश्चीनाभिर्ज्वालाभिर्दिशो विभासिता बभूवुः । तत्रत्या द्रुमाः क्षणेन विकोशकिंशुकाशोकतुलां च ययुः । ततो ब्रह्माण्डस्फुटनारंभग्रंथिभेद इवोत्कटाश्चटचटा शब्दा भवितुमारब्धाः । अथाग्नौ पतिताः कृमिकीटपतंगाश्चटचटेतिध्वनिंकुर्वन्तस्तिलाहुतिसमतां ययुः । ततो गगनांगनसंगिनो ऽग्निशिखाग्रविच्छेदा व्योमचारिणां हेमविमानवलनाभ्रमं चक्रुः । अथ हविर्भुजो घोरकहकहानिनादः शिखाभिर्लिह्यमानानाम् ककुभामाक्रंदइव बभूव । ततस्तत्रतरलात्विषो बन्हेर्ये ये स्फुलिंगनिचया विचेरुस्ते ते दग्धसत्वानां गगनगामिनो जीवा इव विरेजिरे । ततः काननौकसो भूतसंघा स्तत्रत्याः प्रलयानलशंकिनः क्रन्दन्तश्च पलायितुमारब्धाः । परं प्रचण्डाग्निमध्ये पतिताः क्षणात् प्रनष्टाः । एवं कृष्णार्जुनयोः शरमण्डलैः खण्डितानिरुद्धगतयश्च वनेचराः सिंहव्याघ्रगजगण्डकशूकरादयोऽसंख्या बन्हौ पतित्वा दग्धाः । अथ शक्रो देवेभ्यः खाण्डवं दह्यमानमाकर्ण्य मेघमालायुतः स्वयं तद् दृष्यं विलोकयितुं तत्रागत्य चकितो बभूव । तस्मिन्नेवावसरे किरीटिना गांडीवेन दह्यमानेषु सत्वेषु तक्षको भयात् कुरुक्षेत्रमगात् । ततो नागपत्नी सुतमश्वसेनं निगीर्य भीता पलायांचक्रे । ज्ञात्वैवं तन्माययान्तः कुपितः पार्थः पृथुधारेण भिल्लेन तत्पुच्छं छित्वा ऽद्य प्रभृतित्वमप्रतिष्ठोभवेत्यशपत् । एवं वासुदेवधनंजयौ चिरकांक्षितं पावकमनोरथं पूरयामासतुः ।

अथ मरुत्पतिर्बाहुप्रमाणाभिर्धाराभिर्येदावर्षितुमारब्धवाँस्तदा सव्यसाची तत्प्रतिरोधकैः शरजालैस्तां महावृष्टिं निवारयामास । ततः प्रचण्डपावकोऽप्यत्युष्ण ज्वालाभिः शैत्यं शमयित्वा ऽर्जुनार्थं च समर्थयामास । अथसमुद्यतायुधैर्देवगणैः सह शतमन्यु र्दिव्यास्त्रैः पार्थमपूरयत् । ततो ऽर्जुनोऽपि प्रत्यस्त्रैस्तदस्त्राण्याशु निवार्य सायकैराकाशमाच्छादयामास । अथ कुपिता देवा गिरिशिखरमपातयन् । पार्थो बाणैस्तमपि तिलशश्चकार । एवं धनंजयेन विजिते ऽमरवृन्दे देवराजश्चित्रित इवा ऽतिष्ठत् । ततो नभोवाणी तमुवाच । शक्र ! ते सखा तक्षको ऽत्रनास्ति । त्वं वृथा मा युद्ध्यस्व । इमौ नरनारायणौ कृष्णौ

शक्रशतैरपि जेतुं न शक्यौ ! निशम्यैवं देवराजो जयं सर्वतो वांछेत् परं पुत्रात् पराजय मिच्छेदिति विचिन्त्य स्वपराजयं विसस्मार । ततोऽर्जुनशरासारशकलीकृतविग्रहान् भूतप्रेत दैत्यराक्षसपन्नगान् वनेचरान् कवलीकृत्य निर्विकाराभिर्ज्वालाभि र्हर्षमावेदयन्निव भगवा पावकः स्वास्थ्यमगमत् । तस्मिन्नेवावसरे तक्षकभवनान्निर्गत्य मयासुरोऽधावत् वह्निस्तमनु ससार । सोऽथ कृतान्तमिव पावकमनुसर्तारं वीक्ष्य धनंजयाद्रक्षां ययाचे किरीटी तस्मै प्रादादभयदानम् । महात्मनांचरित्रमापन्नत्राणविमुखं कदापि न भवति एवं मयाश्वसेनौ तस्मान्महाभयान्मुक्तावभूताम् । चतुरः सारंगकांश्च स्वयमग्निर्देवो ररक्ष

पुरा मंदपालो नाम ब्रह्मचारी बभूव । चतस्रो ऽपि विद्याः स्वयमागत्य तस्याश विविशुः । सोऽथ कालेन देहं सन्यस्य त्रिदशालयं प्रयातो ऽपुत्रत्वात् तपोऽर्जितॉंल्लोका न्नलेभे । ततो देवादेशात् पुत्रार्थं पुनर्वसुधातलमवतीर्य विहंगबध्वा सह संगम्य च पुत्र चतुष्टयं प्राप । अथ स महामुनिः खाण्डवे वर्तमानेषु सुतेषु बन्हिभयं ज्ञात्वा पावक तुष्टाव । ततस्तत्स्तोत्रतुष्टो भगवानग्निर्मातृविहीनांस्तान्नददाह । धन्योऽयमग्निमहिमा ।

अथ मंदपालसुतान् सुरक्षितान् ज्ञात्वा संतुष्टिमापन्नो देवराजो ऽर्जुनं प्राह । वत्स रुद्रदर्शिनस्ते संप्राप्ते ऽवसरे ऽस्त्राणि दास्यामि । ततः श्रीकृष्णचन्द्रं प्राह । यदुनाथ ! पाण्डु सुतेन ते ऽक्षयाप्रीतिरस्त्विति वरं दत्वा ऽमरावतीं जगाम । ततोदेवाः पुष्पाण्यवर्षन् ।

ततः परमसंतुष्टोऽग्निः कृतसाहाय्यौ कृष्णपार्थिवौ समामंत्र्य स्वलोकं ययौ । अथ वासुदेवधनंजयावपि नदीतटे रथादवतीर्य बालकदलीपल्लवानिलैर्विश्रान्तिसुखमल भताम् । राजन् ! एवं वहुवत्सरयाजिनः श्वेतकेतो र्यज्ञे जाड्यमापन्नोऽग्निर्जिष्णो र्विष्णोश्च पराक्रमेण खाण्डववनं दग्ध्वा पुनर्हव्यग्रहणे समर्थो बभूव ॥

गणेशशारदाव्यासप्रसादाद् गद्यभारते ।
संपूर्णमादिपर्वैतद् भवतु कृष्णप्रीतये ॥
श्रीक्षेमेन्द्रप्रणीता या पद्यभारतमंजरी ।
तामनुसृत्यरचितं मयैतद्गद्यभारतम् ॥
श्रीरस्तु । श्रीरस्तु । ॐ शांतिः शांतिः शांतिः ।

इति श्रीगद्यभारते आदिपर्व समाप्तम् ।



॥ ओं नमः शिवाय ॥

# ❁ अथ सभापर्व प्रारभ्यते ❁

## तत्र लोकपाल-सभा-वर्णनम् ।

अथ तस्मान्महाभयान्मुक्तोदैत्यराजो मयः करौ संयोज्य किं ते प्रियंकरोमीति पार्थमब्रवीत् । तच्छ्रुत्वाऽर्जुनः प्रोवाच । त्वया वास्तु संदृश्यताम् । मद्विधोजनः प्राण-संरक्षणे कथं मूल्यं स्पृशेत् । एवं पार्थेन निषिद्धो दैत्यशिल्पिराजः कृष्णवाक्याद् धर्मे-नंदनसभां कर्तुमुद्ययौ । ततः सुखोषितः शौरिः पितृदर्शनकांक्षया कुंतीं नत्वा कृष्णां संभा-ष्यानुजां च समाश्वासयामास । अथाजातशत्रुमामंत्र्य शैव्यसुग्रीववाहनः सत्वरं विनिवर्त्य द्वारकां ययौ । ततः पुण्येऽहनि मयः कैलासोत्तरवर्तिनोविन्दुसरसो वृषपर्वसभामणीनादाय भीमाय गदां किरीटिने च देवदत्तंशंखं दत्वा मणिमयस्तंभभास्वत्प्रभां सभां चक्रे । यत्र मणिजटितरम्यासु भूमिषु प्रतिविम्बितो नाकलोको भूमण्डलमवतीर्ण इव व्यराजत । ततो महोत्सवारंभे पृथुरत्नासनवतीं सर्वर्तुकुसुमोज्वलां च तां सभां ब्रह्मघोषपुरस्सरो राजमण्डलेन सह युधिष्ठिरः प्रविवेश । अथ दीप्ततेजसो नमत्समस्तभूपालाः किरीटमणिकुंडलामुनिवराश्च तां सभां द्रष्टुं समाययुः । तत्र गन्धर्वपतिश्चित्ररथोऽपि सहानुगः सर्वराजमण्डलमण्डनं धर्मराजं सिषेवे । तस्मिन्नेवावसरे देहप्रभापिंजरिताम्बरो देवर्षिर्नारदस्तत्र समागच्छत् । ततस्तं विलो-क्य समुत्थाय पाण्डवाः संपूज्य रत्नासने च प्रतिष्ठापयामासुः । सोऽथ दंतांशुकर्पूरै स्तां सभां पूरयन्निव कृतांजलिं राजानमूचे । पार्थ ! कच्चित् त्वामर्थनैपुण्यं निषेवते ? लोके सर्वविद्यावतामप्यग्रे धनवानासनं लभते । कच्चित्तेधर्मफलोऽर्थः ? राजन् ! लुब्धस्य हि धनागमोऽगारिकस्यतनुरिव फलाय न भवेत् । कच्चिद् बालानिलालोलनीलोत्पलविलोचना रामा अविस्मृतात्मनस्तव मनो रमयंति ? कच्चित् स्तुतिप्रिया ते मूर्तिश्चित्तज्ञैर्न विलुंठ्यते ? कच्चिद् विबुधैस्त्यक्तमूर्खस्य ते मतीरक्ष्यते ? कच्चिन्न् निगूढमंत्रस्य प्रजाकार्याणि पश्यतो-जितनिद्रस्य च ते दृष्टिर्मनोरमैरविलुप्तेत्यादिभिर्मुनिवाक्यैः प्रहृष्टो राजा चन्द्रकिरणैश्चन्द्र-कान्तइवोज्वलो बभूव । ततः सर्वेऽपि भ्रातरो मुनिकृपयाऽतीव संतुष्टा बभूवुः ।

ततो राजाऽपृच्छत् । महामुने ! किमीदृशी सभान्याभवताद्दृष्टपूर्वेति वाक्यमाक
मुनिवरः प्रोवाच । पार्थ ! अस्ति मनोरमापुण्या च देवराजसभा । यत्र शचीसखः श
क्रतुर्देवपूजितः स्वयं विराजते । तत्र हरिश्चन्द्रादयः पुण्यात्मानो राजर्षयो मरुद्गणा
वारिवाहमंडले स्थित्वा तां सभां समुद्भासयंति । द्वितीया विश्वकर्मकृता तैजसी रमणी
यमसभा । यत्र दिलीपरामशर्यातिभरतादयो नरेश्वरा विराजंते । तृतीया शुभ्रा वरुणसभा
यत्र सभासदो नागाः । दशग्रीवसुग्रीववालिमुख्या वीराश्च शोभन्ते । चतुर्थी स्वयमुनि
द्रहेमाम्बुरुहदीर्घिका कुवेरसभा । यत्र साक्षात् सगणः सदाशिवो विराजते । राजन्
पुराऽहं सूर्येण नीतो विरंचिसभामप्यपश्यम् । परं मनुष्यलोके यथेयं भवतः सभा त
मया नान्यस्य दृष्टपूर्वा । तच्छ्रुत्वा राजामुनिवरं पप्रच्छ । ऋषिराज ! यदा सर्वएव म
पाला वैवस्वतसभासदस्तदैकएव हरिश्चन्द्रः कथमिन्द्रसभां श्रितवानिति राज्ञापृष्टो देव
रब्रवीत् । महीप ! सोऽत्र जगज्जयी पूर्वं राजसूयमखे साम्राज्यमवाप्य स्वर्गलोकंगतः
अतस्तत् पुण्यप्रभावेणैव देवराजसभायां प्रकाशते सर्वान्नृपानतीत्य । राजन् ! तव यश
पिता पाण्डू राजसूयमखे यष्टा भवेति त्वां समादिशत् । त्वं तस्मिन्यज्ञे योग्योऽसीत्य
धाय मुनिः प्रययौ । अथ राजा कृष्णमुनिना धौम्येन च पर्यालोच्येन्द्रसेनं च विसृ
जनार्दनमानिनाय । ततः कैटभारिः सैन्यसुग्रीवयुक्तरथेन समभ्येत्य धर्मसूनुं ववंदे ।
कंसारी राजसूये धृतमतिं तं ज्ञात्वा लाभाऽलाभौ विवेचयन् प्रोवाच । पार्थ ! नाहुष
जातस्य तव मतिः सत्यमेव समुचिता । परंतु दुराधर्षे जरासंधमहीभुजि जीवति स
सर्वैर्देवैरपि क्रतुप्राप्तिर्नशक्यते । मुरभौमहयग्रीवशिशुपालदंतवक्त्रादयो नृपा यमेकं प
पासते । यस्य निरंतराक्रमणैः समस्तनृपसंक्षयं ज्ञात्वा विद्युत्पातभयाद् गृहत्यागमिव म
परित्यक्ताऽस्माभिः । समरे मया हतं जामातरं कंसंश्रुत्वा तु सः सर्वदाशार्हसंहारैक
सर्वदा तिष्ठति । पुरा स हंसहिडिकाभ्यामधिको दृप्त आसीत् । परं पृथ्वीमहापुर
यमुनांभसि हंसं च निमग्नं श्रुत्वा हिडिकोऽपि निधनं गतः । तदाप्रभृति जरास
किंचिद्धीनबलोऽभवत् । अपरंच शिरः कमलमण्डलैश्चण्डीशं यष्टुकामेन तेन गिरि
षडशीतिर्नृपतयो रुद्धाः । सम्प्रति तस्य शेषाश्चतुर्दश विजेयाः । ततः पशूना
भूभुजां पूर्ण शतं स वांछति । यः कोऽपि तं जगच्छत्रुं जित्वा तान्नरेश्वरान्मुंचा
स एव सर्वैश्वर्यपदं प्राप्य साम्राज्यश्रियामिह समश्नुते । एवमाकर्ण्य युधिष्ठिरः श्रा
इव भूत्वा भ्रातॄनाहूय मंत्रयामास । ततो भीमार्जुनाववदताम् । राजन् ! जरासंधनिपात
यमेव पराक्रमकालः । एवमाकर्ण्य नृपः केशवं बभाषे । यदुपते ! त्वया कंसमुरचा

प्रभृतयो बहवो राक्षसा हताः । पुनर्मागधः किंप्रभावोऽसौ यस्त्वयाऽपि न निर्जितः ? नरेन्द्रेणेतिपृष्टो हरिर्व्याजहार । पुरा मगधेषु बृहद्रथो नाम राजा बभूव । महर्षिश्चण्ड-कौशिकस्तुष्टस्तस्मै पुत्रार्थिने आम्रवृक्षान्निपतितं फलमभिमंत्र्य प्रादात् । ततस्तद्भार्ये तद् भक्षयित्वा काले तेजोवृते भयंकरे एकाक्षिबाहुचरणे च गर्भार्द्धे पृथक् पृथक् सुषुवाते । अथ ताभ्यां तच्छरीरार्धयुगलं चतुष्पथे त्यक्तम् । ततस्तत्र यदृच्छयागता जरा नाम राक्षसी करुणाबुद्ध्या तद्विग्रहार्धे संयोजयामास । तेन सः क्षणादर्भकोऽभवत् । ततस्तद्र-वाघट्टितेलोके मगधाधिपस्तत्र समाययौ । कृपावती सा तस्मै तमुत्कटं जरासंधसुतं प्रादात् । राजन् ! संख्ये नृपद्विपाः पंचास्यमिव यं न सहन्ते । प्राप्तावसरो धाता तद्भु-जाविव हंसहिडिकौ छिन्नवान् । महाभाग ! तद्वहितमेनञ्जहि । सानुकूलोऽयं समयः समुपस्थितः । निशम्यैवं श्रीकृष्णवचनस्थितोऽजातशत्रुर्जरासंधबधे भीमार्जुनावादिदेश । ततो द्विजैः कृतस्वस्त्ययनौ भुजायुधौ तौ वीरौ श्रीकृष्णं पुरस्कृत्य समराय मागधं प्रय-यतुः । ततस्ते विपुलौजसो व्रजन्तो वनपर्वतसरितः समुत्तीर्य गिरिदुर्गान्तमवाप्य च स्वर्गं भुवमागतमिव मागधपुरं ददृशुः । अथ ते राजमाल्यविलेपने बलादाहृत्य ताभ्या-मात्मानमलंकृत्य च नगरान्तरं विविशुः । ततो द्विजराजन्यवंशांस्तानवलोक्य पौरकान्ताः कौतुकवत्यो बभूवुः । अथ राजधानीं प्रविष्टास्ते राजसेवकाँस् तेजसा निर्जित्य शुशुभिरे । ततः कक्षात्रयमतिक्रम्यगच्छन्तस्तेजोराशिंमूर्तिमन्तं सत्वामिव स्थितं जरासंधं विलोक-यामासुः । ततस्ते क्रोधारुणेक्षणैर्निर्भर्त्सयन्त इव तं तत्राऽतिष्ठन् । एवमालोक्य मगधः सर्वनरेन्द्रविजयपीतं यशो दशनांशुभिः प्रकटयन्निव तानूचे भद्रपुरुषाः !

यूयमर्थिनो मे गृहमायाताः । अतो मे चेतो भृशं प्रसीदति । परं भवतामयमाकल्पो माम् भ्रामयति । माल्यवत्वमनुलिप्तत्वं च स्नातकव्रतं दर्शयति । शस्त्रराहित्यंभुजस्तंभत्वं च महावीरत्वं प्रकटयति । द्विजराजन्यवेशाः संकरकारिणः के यूयम् ? अपद्वारेण पुरं प्रविश्य शासनातिक्रमणे को हेतुर्युष्माकम् ? गुप्तगोपुरे मद्गृहे विप्राणां तु निषेधो नास्ति । अर्थिषु च मे कोशोऽर्धरात्रेऽपि विवृत इति व्याहृत्य मगधेशो विरराम ।

तच्छ्रुत्वा पुष्पितामिव कपोलफलकश्रियं बिभ्राणः कंसारिः क्षिप्रकोपस्मितत्विषा उवाच । न वयं पुष्पवन्तः स्नातकव्रताः । अयं विक्रमलांछनोऽस्माकं वेशोऽपि समुचितः । बुद्धिमन्तो रिपुगृहमद्वारेणैव विशंति । यतः पूर्वं धर्षणामकृत्वा युद्धं कथं प्रवर्तते ? अपरंच स्वेच्छावेशविहारा वयं दातारो न च याचका इति कृष्णवचः श्रुत्वा विस्मयान्मा-गधः प्रत्युवाच । अहोनु युष्माभिरज्ञातैः सह वैरं न स्मरामि । जरासंधशात्रवो नह्यप्र-

सिद्धचरिता वर्तन्ते । तथाऽकिल्विषे च मयि युष्माकं वैरिसंभावनाऽपि नोपपद्यते । यत सन्तो निर्वैरवैरिणो नहि भवंति । निशम्यैतद् हसन् हलधरानुजः प्रोवाच । अहोनु ज च्छन्नुरपि त्वमात्मानं निर्वैरं मन्यसे ? अयमैश्वर्यदर्पः किं वा मोहः ? स्पष्टमाचक्ष्व । मही पते ! भूपालमुण्डखण्डैः कपर्दिनं यष्टु मिच्छन्नपि निष्पाप इव भाषसे । पशुवधादनपे कथमन्यान् जिघांसति । यो विप्रियलेशेनापि क्षिप्रं विक्रियां याति । सोऽन्यस्य हेलया प्राणसंदेहं कुर्यात् ? यद्याचारविभ्रंशो न स्यात्तथागमविप्लवो न भवेत्तर्हि राज्ञे पुरुषप्रो कथं रोचेत ? वयं तु धर्मस्थितिविपर्ययं न कदापि सहामहे । राजन् ! कृष्णोऽहम् । भीमः । एष च धनंजयः । संप्रति यत् कर्तुमिच्छसि तत् कुरु । राजन् ! भुजदर्पावले पराम् मावमंस्थाः । गजेन्द्रदमनाः सिंहास्तेषां च नियंतारः शरभा लोके लभ्यंते । स नृपान् मुंच । जीवितेन सह कीर्तिं रक्ष । स्वयं युधिष्ठिरो राजा एषामर्थे समुद्युक्त अथवा भुजदर्पान्धस्त्वमेकतमेन युद्ध्यस्व । युद्धात् किंवा राजमोक्षात् तृतीया मतिर्नास्ति । एतदाकर्ण्य जरासंधः स्वभुजे दृष्टिम् निधाय विगतभ्रमोऽवादीत् हरे ! बत तेऽपूर्वां प्रतिभां पश्यामि । जरासंधः स एवाऽहम् । त्वं किमन्यो थवा स एव । पुरा ज्ञातिघातिना त्वया छद्मना कंसे निहते मत्तस्त्वया युद्धं प्राप्तम तत्र वृष्णयः प्रमाणम् । त्वमेव वद । अनिर्जितस्तान् कथम्मुंचामि । अहमात्मसम जेतारं नान्यं पश्यामि । कृष्ण ! त्वं तु मया जितः । बभित्सुः पेशलाशयः । भुजशा नाऽनेन भीमेन प्रथमं युद्धं प्रार्थय इत्युक्त्वा रत्नमुकुटच्छायाशबलितत्विषा वाससा केश संयम्य समरोन्मुखः समुत्तस्थौ । अथाहतभुजाघातघोरघोषभयंकरो भीमजरासंध क्षिप्रं निरायुधो युद्धारंभोऽभवत् । ततो विषमनिष्पेषभुजयंत्रनिपीडनैर्निबिडै र्जानुबंधै तौ दुर्लक्ष्यौ बभूवतुः । ततो मुहुश्चरणाघातकम्पमाने महीतले पुरवासिनामकाण्डप्रल घातशंका बभूव । अथ तयोर्मर्मविस्फोटटंकारिमुष्टिपातोत्थितः शब्दो दह्यमानानां वेण मिव दारुणरवोऽभवत् । एवं कार्तिकमासे तयो र्दश निशाः समं युद्धमभूत् । ततो जरासं किंचित् क्रमविसंस्थुलोऽभवत् । अथाऽपरेह्नि कृष्णो मागधं श्लथमालोक्य भीममभाष वीर ! निविडमेनमापीडय । यतोऽयं पुनर्बलमवाप्नोति । पूर्वमस्य त्वं संधिं विघट विश्लिष्टोऽयमवश्यं विनश्यतीति कृष्णवचसा भीमस्तं वेगेन शतकृत्वस्तरुमिव भ्रामयाम अथ गिरिगौरवोभीमस्तं रुधिरोद्गारिणं भूमौ पातयित्वा पृष्ठे जानुं निधाय च निष्पि ततश्चरणोपरि चरणं धृत्वा कराभ्यां तच्चरणमाचकर्ष । येन विच्छिन्नसंधि स्स ज्जीवितं तत्याज । ततो मारुतेर्गर्जितघोषेण महाभूतानामपि भयमाविर्बभूव । अथ कृत्यः शौरि र्भीमार्जुनसमेतस्तस्य दिव्यहयोदारं रथमारुह्य गिरिव्रजं जगाम । ततः

गारस्थान् भूपान् विमुच्य जरासंधराज्ये सहदेवं प्रतिष्ठापयामास । ततः सामन्तान् एकत्रीकृत्य महाशयाः! युधिष्ठिरस्य राजसूये भवद्भिः साहाय्यं कार्यमिति समादिश्य सानन्दं राजधानीं न्यवर्तत । ततो विमुक्तापदो नृपा मुहुर्मुहुः श्रीकृष्णोपकारं प्रकाशयामासुः ।

अथ माधवो राजवृन्दसहितं हृष्टं युधिष्ठिरं दृष्ट्वा यज्ञे पुनः समेष्यामीति संविदा द्वारकां जगाम । ततः स्वं स्वं देशं प्रयातेषु भूमिपालेषु युधिष्ठिराज्ञया दिग्विजयार्थमर्जुन उदीचीं भीमः प्राचीं नकुलः प्रतीचीं सहदेवश्चावाचीं दिशं प्रययौ । अथ पार्थः कुविन्दविषयं जित्वा कालकूटीञ्जिगाय । ततः प्राग्ज्योतिषपुरं प्रविश्याष्टदिवसान् भगदत्तेन सह संगरञ्चकार । तत्रार्जुनपराक्रमेण संतुष्टो राजा तस्मै भूरिद्रविणं प्रादात् । ततः कुलूतपतिं वशीकृत्य दशभिर्मण्डलैः सह काश्मीरानप्यजैषीत् । अथ बाल्हीकैः पूजितः काम्बोजांश्च जितवान् । विजितोऽस्यावस्मै शुकोदरच्छायान् वातरंहसोऽष्टावश्वान् समर्पयामास । ततोऽसौ निष्कुटं हिमगिरिं जित्वा श्वेतपर्वतमारुरोह । तत्र गुह्यकरक्षितं हाटकदेशं प्रविश्य तत्रत्यान् नृपान्तित्तिरिच्छायानश्वानधिगच्छति स्मा । अथ किन्नरपुरं जित्वोत्तरान् कुरून् प्रययौ । पार्थ ! मनुष्यागम्योऽयं देशः । शीघ्रमितो निवर्तस्वेत्युदीर्य तत्रत्या लोकास्तस्मै मणिकांचनराशीन् वितेरुः । अयि महाशयाः ! धर्मराजराजसूये भवद्भिः समागमो विधेय इत्यभिधाय वाहिनीसमेतोऽर्जुनोऽपररत्नाकर इव राजधानीमागत्य राजानं रत्नैरपूरयत् । अस्मिन्नेवावसरे भीमो रणे पांचालसृंजयदशार्णपुलिन्दान्विजित्य शिशुपालं च करदं विधाय कुमारविषये श्रेणिमन्तं नरेश्वरमप्यजैषीत् । ततो दीर्घप्रज्ञबृहद्बलमत्स्यकाशिराजनिषधेशत्राह्मकाथकिरातेन्द्रकर्णांश्च सेनानुयायिनः कृत्वा विपुलधनमादाय च युधिष्ठिरमुपाययौ । अत्रान्तरे सहदेवोऽपि शूरसेनान् पटच्चरांश्च जित्वा पौंड्रजृंभकदंतवक्त्रकुंतिभोजभोजराजानजैषीत् । ततो माहिष्मतीं पुरीमगमत् । तत्रास्य नीलमहीपालेन सह गजबाजिरथोद्भूतरजःपिहितदिङ्मुखं युद्धं बभूव । अथैकदा सहदेवसैनिकम् कृशानुरदहत् । यतः स हि वरदो देवः सदैव तद्राज्यं रक्षति । ततोऽपरेन्हि प्रयतवाक्चित्तो माद्रीसुतोऽग्निं संपूज्य त्वदर्थमयमारंभ इति प्रणयादभाषत । ततो हुतभुजाऽभ्येत्य रक्षितः सहदेवस्त्रिदशैरप्यजय्योऽभूत् । अथ नीलेन द्रविणसंचयैः प्रसादितोऽग्रे गत्वा चाऽसौ ससुतं भीष्मकं च जिगाय। ततोऽवन्त्यां विन्दानुविन्दौ विजित्य पांड्यद्रविडकेरलतिमिङ्गिलसौदारककर्णप्रावरकांश्च वशवर्तिनश्चकार । अथैकपादकालमुखयवनरक्षोगणान् करदीकृत्य तरुकच्छस्थितो लंकां दूतं प्राहिणोत् । अथ तत्रत्यो राजा दिव्यमालामिव यौधिष्ठिरीमाज्ञां शिरोधार्य यज्ञसंभारसिद्धये विपुलवित्तं प्रेषयामास । ततो

धनजनसमेतः सहदेवोऽजातशत्रवे सर्वमानीतं धनराशिं निवेद्य कृतार्थो बभूव । अ
नकुलोऽपि रोहितकाधिपं जित्वा त्रिगर्तशिविशैरीषवाटधारांश्च पार्थिवानजयत् । ततो द
हूणाम्बष्ठमालवान् पराजितान् कृत्वा मातुलं शल्यं च साम्ना वशमानिनाय । अथ कुंज
नीकैः क्ष्मां विलोलाचलामिव कुर्वाणो भूमिगुणं करमवाप्य युधिष्ठिरमुपागमत् ।

अथैकदा सात्यकिपुरस्सरो वासुदेवः स्वयमभ्येत्य तोषाद् बहुगुणधनं कौंतेय
प्रादात् । ततो नृपो हेमकूटविशालमनन्तकं हेमराशिं च विलोक्य कृष्णाज्ञया यज्ञसंभ
चक्रे । अथ दीक्षाव्रतक्षामा नृपतनुः शशिकलेव कृशा रम्या च बभूव । तत्र सर्ववि
वेदव्यासो मुनिचक्रसमेतः स्वयमभ्येत्य ब्रह्मासनमलंचकार । महामुनिर्याज्ञवल्क्योऽध्वर्युप
विभूषयामास । सुसामा सामगो होतृपदमराजयत् । धौम्यपौष्ययोः प्राधान्येऽन्ये
मुनयो होत्रगाः शुशुभिरे । अथ पुण्ये मुहूर्ते विधिवत्प्रवृत्ते मंगलार्चिते रत्नवर्षिणि
राजसूयसमारंभे माद्रीपुत्रेण निमंत्रितो हरिखुरोट्टंकिताखिलमण्डलः सानुगो दुर्योधन
समभ्यायात् । ततो भीष्मद्रोणकृपविदुरधृतराष्ट्राः प्रथमं राजपूजिता रत्नासनजुषोऽभवन्
अथ यज्ञसंसदि यदा सर्वे भूपालाः समागत्योपविविशुस्तदा सर्वं जगद्राजमयमिव व्यराजत
तस्मिन् पुण्यप्रदेऽवसरे नृपवृंदकुण्डलांगदशिरोरत्नरश्मिच्छटा यज्ञतुष्टपावकस्य हर्षप्ररो
इव विरेजिरे । तत्र भोजाऽभोज्यपरिद्रष्टा दुःशासनोऽभवत् । द्रोणिर्द्विजपूजासु संजयश्चरा
जसत्कृतौ नियुक्तोऽभूत् । कृताकृतपरीक्षाभारं भीष्मद्रोणावूहतुः । धनव्ययेषु विदु
ग्रहणे च सुयोधनोऽधिकारी बभूव । तत्र युधिष्ठिरेण नियुक्ता अन्येचाऽपि कौरवा निज
कार्यवत् विजह्रुः । ततो महाधने तस्मिन् यज्ञे भूमिदेवसहिता देवाः प्रमदश्रियं भेजिरे
ततो वेदशास्त्रविपश्चितां विप्राणां कर्मान्तरेषु विविधै र्वादैः सा सभा विरंचिपरिषत् स
प्रत्यभात् । अथास्मिञ्छुभावसरे नारदप्रमुखा महामुनयो राजलक्ष्म्यै विधियुतमभिषेच
निकं समादायान्तर्वेदीषु वेदध्वनिपूर्वकं विविशुः ।

अथ संवत्सरे यातेऽर्घ्यैर्चिताऽर्हणे च संप्राप्ते कृताऽकृतपरिद्रष्टा भीष्मो नृपमभ्यधात
राजन् ! अयमर्घ्यार्हणसमयः समुपस्थितः । यत्र महापुरुषपूजा भवति । तत्रैव
महायज्ञः संपूर्णतामेति । ऋत्विक्प्रियनृपाचार्यसंयुक्तस्नातकाश्चैते षडर्घ्या भवंतीतिवे
विदोव्याहरंति । निशम्यैवं पितामहवचो युधिष्ठिरः प्रोवाच । महाभाग ! पूर्वं य
महार्हाय दातुं मन्यसे । तस्मै प्रदीयताम् । ततः शांतनवः क्षणं ध्यात्वा राजानमाह
दीक्षित ! स्वयं हृषीकेशेऽत्रस्थिते कोऽपरः पूजामर्हति ? न हि नाम जगत्कोशप्रकाश
विशारदे सहस्रांशौ समुदितेऽन्ये चन्द्रगुरुशुक्रशनैश्चरादयो ग्रहा विभासन्त इत्युक्तवति गां

युधिष्ठिरप्रेरितसहदेवो यथाविधि वासुदेवाय पूजां प्रददौ । एवमालोक्य शिशुपालोमन्यु-संतप्तमात्मानं शुभ्रदंतमरीचिव्यजनेन वीजयन्निव वन्दिवृन्दगिरां सौन्दर्यं कंकणराविणा भुजेन विनिवार्य च मौनावलम्बिनो भूपान् दृशैव परिभर्त्सयन् घनगंभीरगर्जिताडम्बरां गिरमादधे । अहह ! मोहाद्बालानामियमुपहासैकजनन्याविशेषज्ञता नो हृदयानि दुनोति । अहो ! लोको विशृंखलधियां वचासि वर्त्ततेऽन्यथा स्वच्छन्दवादिनां जिह्वा केन कृतिना छिन्ना ? भीष्मोऽयं षडर्घ्यान् गणयित्वा कृष्णमेवार्हं ब्रवीतीति चित्रमेतत् ? व्यासदेवऋत्विग् द्रोणोगुरुः प्रियामान्याश्चराजानोऽन्येचमुनयः संयुक्ताःस्नातकास्तेषु जनार्दनोऽयं कः ? एतेऽरिमर्दना मान्याश्च नृपा पार्थिवेष्ववस्तुबुद्ध्या निरुत्तरा जाता इति मन्ये । पूज्या भारद्वाजादयो वृद्धद्रुपदादयश्च निर्णयन्तु । सर्वसामान्यां न्यक्कृतिं को न प्रमार्ष्टि ? अहो ! गोपमर्चयतोऽस्य दीक्षितस्य प्रियं धिक् । यदिन्दुकुंदांङ्कुराकारं यशो दंभोलिना हतम् । अत्रागता मानिनो नृपाः पूज्यपूजाव्यतिक्रमं न सहन्ते । वयं यज्ञे वात्सल्यात् समायाता अन्यथा तु कौंतेयशासनं तृणाय मन्यामहे । नाऽस्त्यत्र कश्चित्संदेहः ।

देवपुत्राः पाण्डवा दृष्टाः । भीष्मोऽपि लक्षित स्तथाऽत्र यो धृष्टो गोपोऽर्हवदर्घ्यं गृह्णाति । सोऽप्यवलोकितः । एवमाभाष्य संरंभशिथिलोष्णीषो राजभिः सह कांचनासनादुत्थाय निर्ययौ । ततो रचितांजलिः कौंतेयस्तमभिद्रुत्य प्रोवाच । महीपाल ! कोपान्निमथ्यैव विक्रियां मा गमः । त्वं तत्वेन मधुसूदनं जानासीति सत्यमहं जाने । किन्तु कर्म वशादेषस्ते मतिविप्लवो जातः । भूपाल ! त्वं महाकुलजातः शूरो गुणशाली मानी च वर्तसे । अतस्तवेदृशं मात्सर्यं सभायां नैव शोभते । एवमजातशत्रौ संरंभादिति वादिनि भीष्मः संसदि प्रोवाच । राजन् ! माऽस्मिन् त्वं वृथा विनतो भव । एष नीचतरो राजा प्रार्थनाप्रणतेर्योग्यो नाऽस्ति । श्मशानाग्निः क्वचिन्मंत्राहुतिं नहि नामार्हति । यदि चेदिपः पुण्डरीकाक्षमनर्हं मन्यते । तर्हि एष एव गोविन्दादधिकं नः प्रब्रवीतु । लोककण्टकौ मधुबाणौ रथांगेन निहत्य कोऽन्योराक्षसेभ्यो देववेदगोब्राह्मणधर्मरक्षां चकारेति ब्रुवाणे गांगेये सहदेवोऽभ्यभाषत । भोभोनृपतिगणाः ! ममेदंवचः शृणुत यूयम् । योऽत्र मया पूजितं केशवं न सहते । तन्मूर्ध्निन्यस्तोऽयं पादः । एवं सहदेवेन चरणे पुरो दर्शिते भूमिपालानां कोऽप्यपूर्वः समरारंभविभ्रमोऽभवत् । ततः किंचिदावृत्तकंधरश्चेदिपतिरुवाच । भीष्म ! नृपमण्डलमध्येऽयं सहदेवस्तु बालः । परं त्वं तु वृद्धो भ्रांतिं त्यज । प्रभुं कंसं पूतनां स्त्रियं च हत्वा केशवेन किं महत्वं लब्धम् ? अहो नु त्वद्विधै धूर्तैरेव गोविन्दो गुणवान् कृतः । प्रायशो जन उक्तिवैचित्र्यमात्रेण ह्रियते । प्रच्छन्नकिल्विषस्त्वं

वाक्चातुर्यं जानासि । स्वयमक्षमो राजभिः सह कथं वैरं सृजसि ? गांगेय ! पुरा ह
नाम वृथाचारो महादांभिकोऽभूत् । वराक ! विश्वस्ताश्च खगास्तस्मिन्नण्डानि नि
ष्याऽन्यत्र प्रययुः । यथा स धूर्तो गुप्तरीत्या तानि संभक्ष्याऽतिष्ठत् । तथाऽत्र त्वम
बन्धूनां मित्रमुखो रिपुरसि ? त्वं सन्मार्गाच्च्युतोऽसि । वृथेदं तव ब्रह्मचर्या
शाठ्यव्रतम् । अहं तु त्वां वंशविच्छेदपापिष्ठं मन्ये । त्वं वचसा तु ब्रवीषि । परं तत
न जानासि । इक्षुभारवाहीव तत्त्ववर्णे विभुर्नाऽसि ? त्वल्लिङ्गो विहगस्सदा मा साहसं कु
र्वेति विरौति । परं स्वयं सिंहदंष्ट्राग्रान्मांसं खादति । जिह्वाचेष्टितरूवं धर्मवादीति कथ्य
किन्तु वृथा परस्तुतौ निन्दासदृशं फलं न जानासि ? यद्द्विजव्यंजनैस्त्रिभिर्जरा
व्याजाद्धतस्तदेव किं केशवस्तुतेस्ते सत्यं न पर्याप्तम् । एवं शिशुपालवचः श्रुत्वा भी
सेनः कल्पान्तदहनोपमं कोपं कृत्वा तज्जिघांसया चचाल भीष्मस्तं वेगेन भुजाभ्यां जग्रा
ततश्चेदिराजस्तमालोक्य हसन् प्रोवाच । भीष्म ! मुंचैनम् । एष मत्कोपाग्निपतंग
यातु । तच्छ्रुत्वाऽतिक्रुद्धं भीमं स्मितच्छायानिर्झरैस् स्नपयन्निव भीष्मः प्रोवाच । भी
मदान्धेऽस्मिन् चेदिपांसने मा क्रुधः । अस्य मृत्युस्तु राक्षसान्तकः । पुरा दमघोषा
धश्चेदिराजोऽभूत् । स वसुदेवस्वसारं सात्वतीं पर्यणयत् । सा चेदिराजवल्लभा यदैनं
चतुर्भुजं चाऽजीजनत् । तदाऽऽकाशचारिणामिदं वचः शुश्राव । बालस्याऽस्य यस्यांके
काङ्गत्वं हीयते । सोऽस्य मृत्युरिति श्रुत्वा साऽभ्युपेतानां भूभुजामङ्के लालनार्थं न्यस्तव
सीत् । अथैकदा सा बन्धुलोके प्राप्ते यावत् कृष्णाङ्के निक्षिपति तावच्छिशुप
विगताधिकदृग्भुजत्वं लभते । ततस्तद्दर्शनत्रासात् सात्वती तनयस्नेहान्मधुसूदनम
दीयतामिति ययाचे । अथ केशवोऽस्यापराधशतं सहिष्य इति तस्यै वरं प्रादात् । त
ऽयं महीपतिर्निर्भयो भाषत इति गांगेये वादिनि पृथुसंरंभशिथिलांशुकशेखरश्चेदिर
जनार्दनमाह । हरे ! अखिलराजसु स्थितेषु मूढार्पितां पूजां निर्लज्जोऽनर्हश्च त्वां
कोऽनुगृह्णाति ? अरे ! पाण्डवैस्त्वं हासाय विडम्बितः । तवेयं पूजा नग्नकण्ठेऽर्पिता
इव हास्याय । कृष्ण ! त्वं भूमिपालानां विशेषतश्च मम बध्यः । मानिनः सर्वावमा
नीचं त्वां कथं सहन्ते । एतदाकर्ण्य भगवान् कृष्णः स्मयमानोऽभ्यभाषत । राजस
ऽस्मिन् दिष्ट्या निकारगणनाऽस्य संपूर्णा । लोकान् पृथक् प्रत्यापयितुं कः क्षमः ?
मयि प्राग्ज्योतिषपुरं याते स्फटिकस्तंभशुभ्रां द्वारवतीमात्मनः कीर्तिमिव ददाह ।
पितुरश्वमेधे समुत्सृष्टमश्वमप्ययमपाहरत् । पापचेतसोऽस्यान्यैर्निकारैः कथितैश्च किमि
क्त्वा चक्रेण तस्य हारविभूषितं कण्ठं पीतस्रुतामृतं राहुशिर इवाशु चिच्छेद ।

विलूनशिरसि तस्मिन् भूपाले पतिते पश्यतां राज्ञामतिसूर्यानलद्युतिस्तत्तेजः शौरिवदनं विवेश । ततो लोलसागरमेखला वसुधा चचाल । अनभ्रे द्यौर्महाशनिपुरस्सरं प्रववर्ष । एतदालोक्य चकिता राजसभा निःशब्दाऽभवत् । अथ युधिष्ठिरः शिशुपालसुतं तूर्णमभिषिच्य मुनिशासनात् सभार्योऽवभृथस्नानं चकार । ततो विपुलदाक्षिणे विधिवद् यज्ञे समाप्ते साम्राज्यविजयोष्णीषबद्धमौलिनृपोऽतिशयेन दिदीपे । अथो यथार्हैः सत्कारैः प्रीता नृपाः पाण्डवान् प्रणम्यामंत्र्य च स्वसदनानि प्रतिययुः । ततस्तेषु यातेषु दाशार्हः सानुजं दमापमामंत्र्य संगमातृप्तै स्तैः कथंचिद् व्यक्तो ययौ । ततः सत्कारमवाप्य सहर्षिभिः कुरुवृद्धेषु गतेषु मातुलशकुनिना सहैको दुर्योधन एव नृपाज्ञया नृत्यगीतादिविविधसुखान्यनुभवँस्तत्राऽतिष्ठत् । उक्तं च । विभूतयो ज्ञातिभोगेनैव विभूष्यन्ते । ततः श्रीसम्पन्नो राजाऽनुजैः सह राजधानीं विवेश । अथैकदा सुयोधनो दिव्याभिप्रायरुचिरां तप्तकांचनजालकां शशिमणिप्राकारकृतचन्द्रिकाम् मयनिर्मितां च सभां वीक्षमाणः स्फाटिकं कुट्टिममवाप्य जलाशंकया न्यवर्तत । सोऽथ व्रजन्नुत्क्षिप्तवस्त्रो विमलं सरो दृष्ट्वा स्फटिकाशंकया तत्र सहांशुको ममज्ज । एवं विप्रलब्धं तं विलोक्य किंकराः हर्म्यस्था राजललना वृकोदराद्याः पाण्डवाश्च सर्वे जहसुः । ततः सुयोधनस्तेनाऽवमानाग्निना दह्यमानः पार्श्वालोकनहेलालज्जाभ्यांस्वाकारसंवृतिं चक्रे । अथ युधिष्ठिरमामंत्र्य गजसाह्वयं च गच्छन् चिन्ताविवर्णवदनो भूतग्रस्त इवाभवत् । एवमालोक्य शकुनिरपृच्छत् । युवराज ! कोऽयं तव धृतिविप्लवः ? सर्वेश्वरस्य ते किमपि शोककारणं नहि पश्यामि । तच्छ्रुत्वा दीर्घनिःश्वाससंशुष्काधरपल्लवो दुर्योधनोऽब्रवीत् । मातुल ! दुःखज्वरेण कथितेन किम् ? आत्मानमपचितं वैरिषु च पूर्णां श्रियं दृष्ट्वा मद्विधोऽमर्षणो जनः कथं जीवति ? पाण्डववेश्मनि द्वाःस्थै रुद्धप्रवेशान् भूपालानालोक्य म्लानमानस्य मे निधनं महोत्सवः । स यज्ञः सा सभा सा श्री स्तेभोगाः स परिच्छदो मनोरथश्च यदा मातुमपि न शक्यस्तदा कुतो मे महोत्सवः ? अहोबत ! तत्र मुरारिणा चैद्ये हते पार्थभीत्या न कस्याचिज्जीवोऽभवत् । सभायां तमवहासं शात्रवं विभवं च प्रतीकारं विनाऽऽहितसंकल्पोऽहं न सेहे । किं करोमि ? तच्छ्रुत्वा सौबलः प्रोवाच । भागिनेय ! पार्थाः स्वभुजवीर्येण विभवशालिनो जाताः । न तैस्तवशक्तिर्हृता । न च भूम्यनंतरो रुद्धः । पृथ्वी भगवती पृथ्वी । त्वमपि दिग्विजयी भव । पाण्डवानाजित्वा यदि जयं वांछसि । तदा तु तेजसां पुरस्तेजांसि नहि नाम प्रकाशंते। अपरं च । जेतुमिच्छसि। तर्हि सपांचालान् कृष्णार्जुनवृकोदरान् जंभारिरपि जेतुमसमर्थ इत्यहंजाने । राजन् ! विसंशयो निरपायश्चात्रैक एवो-

पायो विद्यते । सोऽयमहमदक्षोऽनक्षज्ञं धर्मसुतं जेतुं क्षमः । द्यूतेन तच्छ्रियं सर्वां जित्वा तव दास्यामि । राजसूयव्रतस्थोऽसौ समाहूतो न निवर्तते । परमहं धृतराष्ट्राज्ञया त्वत्समीहितं कर्तुं प्रयतिष्य इत्युक्त्वा तस्मिन्विरते हृष्टः सुयोधनः प्राह । मातुल ! विपत्सु परित्राणं संपत्सु च विभूषणं बहुचूडामणिः सत्यं भवानेव । किमुच्यते । माम ! त्वमेव ताताय दुःखितं मान्निवेदय । सुतवत्सलस्स द्यूतमवश्यमनुज्ञास्यतीति ब्रुवाणे सुयोधने शकुनिस्तूर्णं धृतराष्ट्रं समभ्येत्य प्रणयाद् व्यजिज्ञपत् । राजन् ! तव सुतो दुर्योधनो विनैव व्याधिं विवर्णवदनो भृशमातुरो वर्तते । एवमाकर्ण्य प्रज्ञाचक्षुर्निर्जने सर्वसंभोगसुभगं सुतमानाय्य दुःखकारणं पप्रच्छ । पुत्र ! कीर्तिस्ते दिक्ष्वंकुरिता । श्रीः सुहृद्गृहे पुष्पिता रणे च तव विक्रमो वैरिमुण्डेषु फलितः । नित्यं वीणारवानुविद्धं हरिणीदृशां गीतं शृणोषि । कंकणैः सह विपुलाभांसि वासांसि दधासि । जंगमाद्रिनिभैर्नागैर्मनोजवैस्तुरगैश्च प्रयासि । पुनः केन कष्टेन कृशोऽसि ? निशम्यैवं पितृवचः शनैर्दुर्योधनोऽब्रवीत् । तात ! अभेषजेन दुःखेन पीडितोऽस्मि । तेन कथितेन किम् ? यो मानी शत्रूणामधिकां लक्ष्मीं तथात्मनो न्यूनां च श्रियं दृष्ट्वाऽपि वनं न याति । स कैः प्रमाणी क्रियते ? येन शक्तिहीनेन तथान्तर्दह्यमानेन च संततिः क्रियते । तस्य निन्द्यं जीवितं धिक् । यो देशकालाभ्यां यंत्रितः पराभवं सहते । तस्यालकावली रशना च विभूषणं मन्ये । भूपाल ! युधिष्ठिरस्य रत्नोपायनसंग्रहे क्रतौ राजपूज्येन मयापि कोषाध्यक्षायितम् । दुःखेऽप्य दुःखितेनैव मया रिपुगेहे नटवत् सर्वं गृहीतम् । तत् किं मम मरणं नास्ति । तत्र पूर्ववैरिणा यत् कृतकसम्मानं तन्मेऽधुनापि मर्माणि कृन्तति । मानिनो मम मूर्ध्नि दैन्यध्वजमिदं छत्रं वृथा । योऽहमपचितः समृद्धान् पार्थान् पश्यामि । या युधिष्ठिरश्रीर्मया राजसूये दृष्टा । नरेश्वरास्तां मनोरथेनाऽपि बोढुं न शक्ताः । पार्थो यत्र यत्र जगतीभुजां दृशं प्रददौ तत्र तत्रांजलिवनैः पद्माकरा इव बभुः । तस्मिन् राजघटामर्थे दिक्चक्रं चामरमयं महीगजवाजिमयी नभश्छत्रमयं च शुशुभे । राजाधिराज ! किं बहुना कथितेन ।

तत्र बहवो नराधिपाः प्रवेशमनवाप्य ग्राम्याः करप्रदा इव चिरं द्वारि व्यलम्बन्त । तस्मिन् यज्ञे द्विजन्मनां लक्षे लक्षेऽखिलं भोगं भुक्तवत्सु शंखशब्देन संज्ञाऽभूत् । तत्र सर्वाशा पूरणक्षमैस्तै रसकृत् शंखनादैर्भूभुजां सततं श्रवणौ बाधिरीकृतौ । ततस्तस्याभिषेकसमये छत्रव्यंजनपाणयो नरेश्वरा अहंपूर्विकया तत्र तस्थुः । पितः ! कनकवर्षिणो युधिष्ठिरस्य या श्रीर्यज्ञेऽभूत् । तां शक्रः कथमाप्नोति । वैश्रवणस्याऽपि सा दूरे । किंबहुना । तस्य रत्नविचित्रायां सभायां स्फटिकाशंकाविप्रलब्धोऽहमप्यंभस्यनभिज्ञवन्निपतितः ।

तत्र साक्षिसंकोचं यन्मां वृकोदरो जहास । स एव शोक आयसः शंकुरिव मे हृदि मग्नः । तात ! सोऽहं त्वदाज्ञया शकुनिं समुपाश्रितो द्यूतेनैव तां धर्मजन्मनःश्रियं हर्तुमिच्छामीति कथयित्वा दुर्योधनो विरराम ।

एवमाकर्ण्य पुत्रवचः स्वकुलक्षयशंकितो धृतराष्ट्रोऽवदत् । वत्स ! कोऽयंते व्यसनागमः ? भ्रातुर्विभवमालोक्य कथं परितप्यसे ? तवाऽपि भूपस्पृहणीयाः संपदःसंति । पुत्र ! स्वाधीनभुजाविक्रमस्त्वमपि पाण्डवैः सहायैर् भूपान् विजित्य बहुभिर्मखैर् यजस्व । लब्धचेतसां तेषां द्रविणादानार्थं यत्नं मा कुरु । लोके कश्छलेन परस्वं हृत्वा सुखं शेते । एवं पुनः पुनः प्रबोधितोऽपि दैवविमोहितो दुर्योधनो यदा द्यूतनिर्बंधं नाऽत्यजत् तदा सुतवत्सलः कुरुपतिर्यथाकथंचित् तथेत्युक्त्वा क्षिप्रं सभामकारयत् । मनुष्यः सदा भवितव्यतया मुद्रितो भवतीति सत्यमुक्तं मुनिभिः । यद्वृद्धोप्याम्बिकेयः कपटमपोषयत् ।

ततोऽसौ कुशलशिल्पिनिर्मितां रम्यां रत्नमयीं सभां कृत्वा विदुरमाहूय च प्रोवाच । क्षत्तः ! मद्गिरा त्वं गत्वा युधिष्ठिरमिहानय । त्वत्सभासदृशी मच्छिल्पिभिरपि चित्रा सभा कृता । तत्र द्यूतक्रीडाविहारिणां पाण्डवानां मम सुतैः प्रीतिसंभोगसुभगः समागमो भवतु । तच्छ्रुत्वा विदुरः कलहदोहदम् द्यूतं निन्दन् विधातृचोदितेन भूभुजा प्रेरितः खाण्डवपुरमगात् । तत्र विषण्णवदनो युधिष्ठिरमवाप्य पूजितः शनैरवदत् । धर्मराज ! महाराजो धृतराष्ट्रः सहानुजं त्वां विहारसुभगांमत्सभामेहीति वक्ति । तत्र शकुनिप्रमुखैः सुहृद्द्यूतं प्रवर्तते । सुहृत्समागमं विभूतिसारं मन्ये । महाभाग ! प्रयोजनायास्मै भवदंतिकन्धृतराष्ट्रेण प्रेषितः । तत्रभयंकराः कितवाः प्रागेव समुपस्थिताः संति । राजन् ! विपन्मूलं कलहोदयं च द्यूतं मत्वा सर्वफलमफलं च विचार्य साम्प्रतं कर्तुमर्हसि । तच्छ्रुत्वा पृष्टकुशलोऽजातशत्रुस्तमवदत् । तात ! श्रियउन्मूलनं कलहमूलं च द्यूतं जानामि । क्षुद्रदेविनः शकुनिप्रमुखानपि जाने । किन्तु मे क्रतुसमयोऽयमत आहूतोऽहं न निवर्ते । नीतिसागर ! यथेष्टकारिणं दैवं को हि नामातिवर्तत इत्युक्त्वा सानुजो युधिष्ठिरः कुरून् प्रतस्थे । ततः पाण्डवो राजघटाबन्धैर्वाजिवृन्दैश्चव्रजन्नुच्छूतधूलिपटलैरकालरजनीं व्यधात् । अथ साम्राज्यविजयश्रीविभूषितो द्रौपदीसहितो राजाऽनुजान् पुरस्कृत्य हास्तिनापुरं विवेश । ततस्ससचिवै दुर्योधनादिभिः प्रत्युद्गतो राजभवनं प्रविश्य कुरुपतिवृद्धांश्च प्रणनाम । अथ धृतराष्ट्रसमादिष्टं मणिमन्दिरमासाद्य पाण्डवो राजोद्यानेषु निजवद् विजहार । ततस्तत्र हरिणलोचना श्रीयुता कृष्णा कुरुपत्नीमध्येस्थिता त्रिदशललनागणे पौलोमीव रराज । अथ भुक्तोत्तरमासीनान् कौरवैः सह पाण्डवान्

वीक्ष्य प्रमुदितनार्यो नृत्यगीतैस्तान् सिषेविरे। ततो रजन्यां व्यतीतायां दिनमणौ च समुदिते शकुनिप्रमुखा धूर्ताः संभूय पुरं प्राविशन्। विलोक्यैवं पौरा विषण्णा बभूवुः।

अथ पार्थोऽनुजैः सह कुरुपुंगवस्य रत्नोज्वलां सभां प्रविश्य तत्र राधेयसौबल सुयोधनसिंधुराजदुःशासनादि कितवान् ददर्श। ततो यथावस्थितेषु सर्वेषु सुहृत् प्रणयनाटकसूत्रधारैर्द्यूतरंगःप्रवर्त्यतामिति ब्रुवाणे शकुनौ धर्मराजः कैलासश्रियं दन्तभाभिः प्रतिहसन्निव प्रोवाच। गांधारराज! कुरुराजसुतचित्ते कोऽयं मोहस्त्वया संप्रदिष्टः। यद् द्यूतप्रतारणमिषेण नरेशलक्ष्मींच्छादयितुं बालक्षपाकरकलां नववारिवाह इव प्रयतसे। कितवपते! द्यूतस्य लाभाऽलाभौ विचार्य विरम। पापप्रयासादस्मात्। व्यसनावटे कुरून्मापातयेति शकुनिं प्रबोध्य भवितव्यं बलवत्तरं मत्वाऽऽकाशाभिमुखः प्रोवाच। दुर्ललितैकनिधिविधे! सदयो भव। पूर्वजपुण्य! त्रायस्वाऽस्मान्। ततोऽक्षक्रीडोद्यतं सौबलं प्राह प्रक्षिपाक्षान्। क्षपय क्षित्यैश्वर्यम्! दिश विपद्दीक्षाम्। दर्शय पाणिदाक्ष्यम्। राजसूययज्वा पाण्डवः समाहूतोऽहं रणद्यूताभ्यां कदापि विमुखो न भविष्यामीति सत्यमवगच्छ। निशम्यैतन्मायावी सुबलात्मजो दुर्योधनहर्षं जनयन् प्रोवाच। राजन्! गोष्ठी सुधारसबर्द्धनचूर्णम्, मित्रतामुद्रिकारत्नम्, बुद्धि प्रसादन ज्योतिः स्मरकेलिमण्डनम्, नागरकलाशिक्षणं च द्यूतं को न सेवते? तच्छ्रुत्वा भवितव्यं नमस्कृत्य पार्थः परैः पणं पृष्टः संसदि प्रोवाच। भीष्मद्रोणकृपादीनामग्रे राजसूयव्रतस्य मम पणान् निवर्तनं न युक्तमिति मत्वा ब्रवीमि। गान्धारराज! साम्राज्य सिन्धुफेनमहाट्टहासो रुचिरांशुवरश्चायं हाराग्रजोमणिर्मे पणोऽस्तु। निशम्यैवं कपटपटुः शकुनिर्मायया पुरोऽक्षान् प्रक्षिप्य जितोऽसीति पार्थमभ्यधात्। ततोऽजातशत्रु र्नानामणिमण्डितो हयाष्टकसंनिविष्टोऽयं दिव्यस्यंदनो मे पणो भवतु अथ गांधारस्तमपिजित्वा पुनः पाण्डवं पप्रच्छ। ततः सरलाशयो राजा तन्मायामविदित्वैवाऽभ्यभाषत। सुबलसूनो! यात्रासु यस्य विषमांचितकर्णतालैर्दिश उद्घाटिताः पिहिताश्चभवंति। सोऽयं घण्टाटंकारबधिरीकृतनाकलोको करिगणो पणस्थाने तिष्ठत्विति कौंतेये व्याहरति शकुनिस्तमपि हेलया जित्वा पणमपृच्छत् ततो राजोवाच। निजरूपसंपदा जितसप्तद्वीपललनावृन्दः स दासीगणो ममपण आस्ते अथ सौबलो दासीसहस्रं जित्वाऽन्यं पणमप्राक्षीत्। ततो युधिष्ठिरो जगाद सौबल! सुरद्विजधनं हित्वा मणिरत्नस्वर्णरौप्यनिधानसमेता सकल पृथ्वी

पणोऽस्तु। तच्छ्रुत्वा विदुरः सभास्थितं धृतराष्ट्रं प्रोवाच। राजन्! अयमनयस्तव कुलान्ताय ध्रुवमुपस्थितः। अस्मिन्नायातमात्रे दुःखान्ते च हर्षे मा मनः कृथाः। परस्व संग्रहं निदाघहिमसन्निभं मत्वा शीघ्रं परिहर। नूनं सुतवात्सल्यात् तव सन्मति र्विस्मृता। सांप्रतं बुध्यस्व। पाण्डवत्यागात् सुतत्यागस्तवोचितःपक्षः। राजन्! द्यूतं सर्वविपदां मूल मवगाच्छ। कुलस्यार्थे दुर्योधने त्यक्ते सर्वे कुरवः सुखं जीवंति। शेषैः सुतैःसह पाण्डवानव। गजानीकं परित्यज्य जंबुके वृथास्थां मा कृथाः। इति ब्रुवाणे विदुरे कोपाद् दुर्योधनोऽब्रवीत्। पितृव्य! त्वं वृथैव प्राज्ञमन्योऽसि। योऽपृष्टो बहुभाषसे। स्वजनव्यंजनो रिपुर्गृहे गृहे भवत्येव। मूढस्तु तस्मिन् विश्वसिति परं प्राज्ञस्तद्वचो न गृह्णाति। त्वं गणितज्ञो नाऽसि। यो भाविनमनर्थं सूचयसि। अथवा जनः ख्यातये प्रागल्भ्यं प्रकटयति। विदुर! तं गत्वा ब्रूहि। यस्तववाक्यं समादराच्छृणोति। नेयं वृद्धशून्या सभा। यत्र त्वं पाण्डित्यं दर्शयसीति दुर्योधनेनोक्ते सौबलः पाण्डवमब्रवीत्। महीपाल! विजितोऽसि। पणोऽन्यः कथ्यताम्। ततो युधिष्ठिरः प्राह। मन्मथकल्पो नकुलोऽयं मम पणः। एतदाकर्ण्य न कुलाचारं गणयन् नकुलं शकुनिः क्षणादजयत्। ततः पृष्टः पार्थोऽवदत्। यो लोकवेदविधिज्ञः सहदेवः स मम पणः। ततः सोऽक्षवित्तमपि जित्वा ऽपृच्छत्। अथ राजोवाच। दिग्विजयी धनंजयोऽयं मम पणः। तच्छ्रुत्वा सौबलो विजितोऽसीति प्रत्यब्रवदत्। अथ राजोवाच। जरासंधविजेता वृकोदरो मम पणः। ततो नृपस् तमपि भ्रातरं जितं श्रुत्वापश्चादात्मानंपणं विदधे। ततः सौबलस्तं विजितोऽसीत्यभिधाय तवैका कृष्णैवाऽविजितः शेषपणोऽस्तीत्युवाच। तच्छ्रुत्वा कौंतेयो द्रुपदात्मजा मे पणोऽस्तीत्यवदत्। ततोऽक्षज्ञः शकुनिरनक्षज्ञं युधिष्ठिरं क्षणाज्जितोऽसीति बभाषे। अथ प्रहृष्टो दुर्योधनो विदुरं प्राह। त्वमितो गत्वा मम द्यूतजितां दासीं द्रौपदीं शीघ्रमिहानय। तच्छ्रुत्वा सहसा कोपकम्पितो विदुरो जगाद। अहोनु! कालपक्वस्त्वं बलिनोऽपि यन्न बिभेषि? इयममृतगर्भोत्थिता लक्ष्मीः क्रकचतुल्य मर्मविच्छेदवादिनां गृहे न तिष्ठति। अहह! त्वयाऽऽत्मविनाशाय पाण्डवै र्वैरं विहितम्। वृक्षशाखां समारुह्य मोहात्तामेव छेत्तुमुद्यतः। हा! मदान्धस्त्वं ध्रुवं व्यसनावटेपतितोऽसि। यस्यच त्वमग्रणीस्तत् कौरवकुलमपि विनष्टप्रायमेव- विद्धीति विदुरेण भाषितो दुर्योधनः परावृत्य निजसूतं प्रातिकामिनं सावलेपमब्रवीत्। सारथे! पार्थेभ्योऽत्रभयं नास्ति। त्वं सदा ममाज्ञापालकोऽसि। एष विदुरस्तु द्वेषपरोऽ- स्मासु नित्यमतस्त्वं गत्वाशु कृष्णामत्रानय। तच्छ्रुत्वा सूतोऽन्तः पुरं गत्वा पाण्डव

बल्लभामिदमब्रवीत् । पांचालि ! एह्येहि । अद्यप्रभृति ते सुयोधनः पतिः । द्रौपदि ! भीमार्जुन नकुलसहदेवेषु हारितेषु पश्चाद् धर्मजेनाद्यैरात्मापि हारितः । ततो भूपेन त्वमपि पणिता परैर्निर्जिता । तदागच्छ । राजा सुयोधनो जितां त्वां द्रष्टुमीहते । तच्छ्रुत्वा दुःखिता पार्षती सूतं प्रोवाच । सारथे ! गच्छ । नाऽहं कुरुपतिना धर्मेण जिताऽस्मि । यः स्वच्छंदचेताः पूर्वमात्मानमेव हारितवान् । स राजा युधिष्ठिरो मां पणी कर्तुं कथं शक्तः ? ततः सूतजो गत्वा तत् कृष्णावचो धार्तराष्ट्राय न्यवेदयत् । तच्छ्रुत्वा कुटिल दुर्योधनोऽब्रवीत् । स्वयं पांचाली इहैवाऽभ्येत्य नो न्यायं ब्रवीतु । नह्यर्थिनः सभ्यैर्निर्णीतं स्वार्थं लभन्त इति कुरुपति शासनात् सूतः पुनस्तत्र गत्वा रजस्वलामेकवस्त्रां द्रौपदीं च तदभाषत । निशम्यैवं कृष्णा प्रोवाच । तत्रस्थाः सभ्या धर्मसुतोऽपि वा वदतु । किमहं पूर्वं वा पश्चात् परैर्जिताऽस्मीति तद्वचसा क्षिप्रं निवृत्तं सूतजं विलोक्य कुपितकौरव स्तदा ह्वाने दुःशासनं समादिशत् । सोऽथक्रुद्धोवन्यद्विपइव श्वसन् राजकदलीमिव तां हर्तुं विनिश्चयं चक्रे । अथ कृष्णाऽपि भ्रुकुटीकुटिलाननं तं वीक्ष्य व्याघ्रत्रस्ता हरिणीव चकम्पे । ततो दुःशासनो रुदतीं रजस्वलां च तामवादीत् । द्रौपदि ! त्वमधुना धार्तराष्ट्रस्य द्यूतजिता दासी जाताऽस्यतो पुरन्ध्रीव्रतमुत्सृज्य निर्लज्जा कौरवान् भजेति दुःशासन वचो निशम्य शरणार्थिनी कृष्णा कुरुस्त्रीणामन्तःपुरे दुद्राव । ततः कौरवौ विद्रुता यास्तस्याः स्वकुलदावाग्ने धूमलेखामिवाऽसिताम् वेणीं जग्राह । ततस्तेनैकवसनाऽऽकृष्य माणा सा सती बाष्पगद् गदभाषिणी रजस्वलाऽस्मीत्यूचे । अथाऽसौ तद्वाक्यमनादृत्यैव जवात्तां सभामानीय कृष्णे ! गोविन्दं पार्थवा विक्रोशेति मुहुर्वदंस् तस्थौ । ततो राजसूय जलार्द्रेषु केशेषु तामाकृष्टां पुरो विलोक्य वृद्धाः शल्यविद्धा इवाऽभवन् । ततः करतलन्यस्तललाटेध्याननिश्चले द्रोणे, मनसा मुहुर्मुहुश्चिरजीवितां निन्दति गांगेये, दुःखनिस्पंदे निर्जीवित इवस्थिते विदुरे, म्लानीकृताधरदलं तप्तं श्वसतिबाल्हीके पुत्रजयमाकर्ण्य श्रोत्रसंजातचक्षुषि विभक्तास्येधृतराष्ट्रे मुदा लीलास्मितचलत्कपोलफलके, कर्णे, शिंजानकंकणे मुहुर्मुहुरक्षानुत्क्षिपतिशकुनौ, द्रौपदीं लीलालसं वीक्षमाणे च सुयोधने, यदा कृष्णया पृष्टास्ते सभ्या धर्मसंशयं नोचिरे । तदा शान्तनवो ध्यात्वा याज्ञसेनीमभाषत । पुत्रि ! धर्मगतिरतिसूक्ष्मा । वाचा तां को विवृणोति ? हारितात्मा नृपः स्त्रीस्वामीशोनास्ति । परमस्मिन्धर्मसंदेहे न्यायं को वक्तु मर्हति ? अहन्त्विदमेव हि जानामि यदक्षानभिज्ञो युधिष्ठिरो बहुभि रक्षवेदिभिः कितवै र्वंचितोऽस्ती त्युक्तवति गांगेये दुःशासनः क्रुधा तीक्ष्णवचोभि र्न्यायवादिनीं द्रौपदीं भर्त्सयामास । ततः

कृष्णाकटाक्षनिर्दग्धो भीमो ज्वलन्निव कनकासनादुत्थाय ज्येष्ठभ्रातरं प्रोवाच । अहो ! निर्मानता नाम बुधैः क्षान्तिरित्युच्यते । पराभवेऽपि को नु दाराणामुपेक्षां क्षमते ? विधात्रा किमर्थं निर्वैरो युधिष्ठिरो ज्येष्ठः कृतः । त्वं यस्यार्होऽसि तत् सभायां मया नैव वाच्यमिति ब्रुवाणं त्रैलोक्यसंहारसज्जपावकवर्चसं मारुतिं फल्गुनः शमयामास । ततो विकर्णः संसदि विक्रोशन्तीं द्रौपदीं वीक्ष्य न्यायोऽस्या विविच्यतामिति सर्वान् भूपती नुवाच । ततः सकलराजकं मूकं समालोक्य धार्तराष्ट्रो विकर्णः पुनर्जगाद । धर्मशास्त्रकाराः स्त्रियोऽक्षा मृगया वेतिभूभुजां व्यसनं कथयंति । व्यसनस्थाश्च पार्थिवा धर्माऽधर्मौ न जानंति । पार्थेनाऽत्र व्यसनस्थेन प्रथमं हारितात्मना च पंचानामपि स्वाधीनेयं याज्ञसेनी पणीकृता । स्वयं शकुनिना चैषा प्रार्थिता । नूनं पणोऽयं विस्मृतः । तस्मात् कृष्णा विजिता नास्ति । सर्वे सभ्या नो वदन्त्विति विकर्णेन गदिते साधुसाध्विति वदतां भूभुजां संपूरितसभागर्भो महाशब्दः समुत्तस्थौ । तच्छ्रुत्वा संरंभशिथिलांशुकः कर्णः परावृत्य प्रोवाच । यदऽत्र महदनौचित्यं दुर्निमित्तं च लक्ष्यते । अद्याऽत्र वृद्धेषु तिष्ठत्सु बालो वृद्धवदनुशास्ति । भर्ता विभुःस्वदाराणां नास्तीति हास्यकारके वचने कः प्रत्येति ? विगतप्रज्ञविकर्ण ! त्वदन्यः को नु भाषते ? अपरं च लोकेषु विश्रुतं शृणु । दृष्टपंचनराः स्वच्छन्दा नार्यो न भवंति स्त्रियः पदम् । अत्रेयं बन्धकी यदि सभां समानीता। तत्रास्याः का धर्महानिः ? दुःशासन ! अस्यास्त्वं वासो हर । निर्लज्जामेनां गामिव कौरवाः पश्यंतु । वृथा सतीगौरवैः किमिति सूतपुत्रेणोक्ते कालपाशवशीकृतः कौरवोऽस्याः केशपाशं विकृष्य च वस्त्रं जग्राह । ततोऽसौ यथा यथा तस्या रुचिरांबरमाशु जहार । तथा तथा तत् तनौ नवं नवं प्रादुरासीत् । ततो निवृत्ते शनकैर्दुर्योधनानुजे श्रान्तेचाऽधोदृशाम् भूमिपालानां धिक्कार शब्द उदतिष्ठत् । अथ तलाहतकेसरीव निःश्वसन् भीमः कोपात् समुत्थाय बभाषे । पश्यतां राज्ञां नृपशोरस्य वक्षःस्थलं भित्वा तदुद्गतं फेनिलं रुधिरं पास्यामीति वचःस्मर्यताम् । एवं दुःशासनबधाबद्धनिश्चयेन भीमे नेतिभाषितेदुःखात् समुत्क्षिप्तभुजो विदुरोऽब्रवीत् । अहोवत ! सभ्यैरियं सभा मौनादधः कृता। पूर्वन्तु सभा वा न प्रवेष्टव्या। गत्वा च तत्र न्याय्यमेव वक्तव्यम् । अब्रुवन् किं वा विब्रुवन्नरः किल्विषभाग् भवति । विचारसमये पक्षपातं विहाय स्वसुतेऽप्यप्रियं ब्रूते शत्रावपि च प्रियं वक्ति । सोऽवश्यं पुण्यफलं लभते । पुरा कन्यार्थे शरीरयोः पणं कृत्वा वादिनौ सुधन्वविरोचनौ प्रह्लादमगच्छताम् । तत्र सर्वमाकर्ण्य निर्णेता प्रह्लादः स्वसुतं जगाद । वत्स ! कुलद्वयसमुन्नतोऽयं मुनिसूनुस्त्वत्तोऽधिकः । निशम्यैवं

दैत्यपतिवाक्यमांगिरसोऽब्रवीत् । सत्यव्रतेनभवतायद् धर्मकर्कशं भाषितं । तेनाऽयं तव पुत्रो मया पणकृतात् प्राणसंदेहान्मुक्तः । धन्योऽसौ प्रह्लादो यः स्वपुत्रेऽपि निष्पक्षोऽभवत् । सम्प्रत्यत्राऽपि सर्वे सभ्याः कृष्णाधर्मनिर्णयं कृत्वोभयोः पक्षयोः समाधानं कुर्वन्त्विति विदुरेणोक्ते सभातले मूकीभूते च भीष्मः प्रोवाच । धर्मज्ञयुधिष्ठिरः सर्वमेतज्जानाति । ततो विरावमाकर्ण्य हसन् दुर्योधनोऽभ्यधात् । पाण्डवा युधिष्ठिरं निन्दन्त्वथवा कौंतेयः स्वमात्मानमप्रमाणंभाषताम् । द्रुपदात्मजे ! तदाऽहं त्वांदास्यान्मुंचामीति कुरुराजेनोक्ते किन्नु पाण्डवा वदयंतीति सर्वे सभासदः कौतुकाकुलास्तस्थुः । अथोत्कंधरेषु सर्वेषु निश्चलेष्विवस्थितेषु नरेन्द्रेषु च भीमसेनोऽभ्यभाषत । अयं राजा युधिष्ठिरोऽस्माकं प्रभुः । न्याययंत्रिता वयं परिभवमेनं सहामहे । यदि क्षमाधनो नायं नरेश्वरः प्रमाणम् । तर्हि मद्भुजायंत्रात्को नु कौरवः स्वस्तिमान् व्रजेदिति संदष्टरदनच्छदं ब्रुवाणमव्यग्रा भीष्ममुखाः स्वयं क्षमयामासुः । ततो दर्पधनो दुर्योधनो गजकराकारमुरुं पांचाल्याः समदर्शयत् । ततः क्रूरक्रोधारुणेक्षणो भीमः संरंभात् सत्यं तवोरू समरे भेत्स्यामीतियदा प्रतिजज्ञे । तदैवं ब्रुवाणस्य स्रोतोमुखैः सधूमाः पावकार्चिषो निर्ययुः । ततो धृतराष्ट्रवन्हिशालाग्रे जम्बुका घोरतरं रुरुवुः । अत्रान्तरे विदुरो कालमोहितं धृतराष्ट्रं पृष्ट्वा गृहं जगाम । अथ सानुगो युधिष्ठिरोऽपि कुरुवृद्धैः प्रसादितः स्वसदनं प्रायात् । ततः सौबलराधेयदुःशासनसुयोधना विषण्णमनसो धृतराष्ट्रमभ्येत्य प्रोचुः । राजन् ! अर्थशास्त्रविदा वृद्धेन च त्वया महोरगैर्बद्धा जलनिधौ वयं क्षिप्ताः । त्वमस्माकमशान्तवैरान् रिपून् वर्द्धितवानसि । प्रमादोऽयं श्वभ्रान्ते लंबमानानां पाशच्छेदोऽभिधीयते । संप्रति हस्तगतां लक्ष्मीं परित्यज्य महोरगः कंठे कृतः । अहो ! नीतिज्ञेन त्वया विचार्य यत् कृतं तदेव समीचीनम् । बज्रपंजरबद्धकेसरिणः शेखरमुत्पाटय पश्चात् कः कालचोदितस्तं मुंचति ? भ्रुकुटीमुखाः पाण्डवा रथारूढा याताः । वैरतितीर्षां विना ते निद्रां नैवलभन्ते । निशम्यैवं दैवविमोहितो धृतराष्ट्रो भीष्मद्रोणकृपविदुरादिभिर्वार्यमाणोऽपि पुनर्द्यूतं प्रवर्ततामित्युवाच । ततः प्रातिकामिनं संप्रेष्य व्रजन्तं पार्थं पुनराजुहाव ।

अथ सौबलमुखाः कितवाः समेत्य आहूतो न निवर्तेऽहमिति संकल्पयंत्रितं सभां समानीय पुनः प्रोचुः । वारेऽस्मिन् द्यूतनिर्जिता वयं चर्मवसनानि धृत्वा विपिने द्वादशवर्षाणि विचरामो वा भवन्तो विचरन्तु । त्रयोदशं च वत्सरं स्वजनेऽप्यनभिज्ञाता वसेयुः । ज्ञातानां पुनरेवैव वनवासकृतास्थितिर्भवेत् । अधुनैकएवाऽस्माकं विपुलः पणोऽस्तु । श्रुत्वैतद् विषण्णधीर्युधिष्ठिरस्तथेत्यूचे । ततः सौबलोऽक्षान् क्षिप्त्वा जितोऽसीतिनृपमभ्यधात् ।

भक्तास्तस्य हृदयाभीप्सितं सदैव हि चरन्ति । अथ सानुजो राजा भूपार्हंभूषणं वासोभिः सहावमुच्याशु रौरवाजिनानि जग्राह । ततो राजा वृद्धान् समामंत्र्य विस्रस्तवेणीवस्त्रा चलोलया द्रौपद्या सह प्रतस्थे । अथ विहसन्तः कर्णदुःशासनादयः प्रस्थितान् पाण्डवान् दृष्ट्वा सुलोचने ! त्वं तु निवर्तस्वेतिकृष्णामूचिरे । षण्ढतुलैर्नष्टश्रीकैश्चपार्थैरलम् । ये चर्मनद्धा निर्विषाणा वृषा इव दृश्यन्ते । एवं विधा दुरात्मनां सुपरुषा वाचो निशम्य क्रुद्धो भीमः प्रोवाच । अहं पुनरुक्तं वदामि। यत् समरे कौरवयोषितां सांजनास्रुभिः स्तन स्थलेकृष्णानिकारगणनालेखपट्टं करिष्यामि । ततोऽस्य व्याकीर्णमूर्धजं शिरः पादेनालोड-यिष्यामि । अर्जुनः सूततनयं सहदेवः सौबलं हनिष्यतीत्यभिधाय वृकोदरो विनिर्ययौ । अथोद्वाष्पलोचनां कुंतीं विदुरगृहे निक्षिप्य पुरस्कृत्य च धौम्यं सकृष्णाः पाण्डवा वनं प्रतस्थिरे । ततो निर्गतेषु पार्थेषु धृतराष्ट्रो व्रजतां तेषां गतिचेष्टितं विदुरमप्राक्षीत् । तच्छ्रुत्वा विदुरोऽब्रवीत् । धर्मसूनुर्वस्त्रावृतमुखांभोजोऽगमदन्यथा तचूचक्षुः कोपविप्लवैर् लोकं निर्दहेत् । किरीटी निजमुष्टिभ्यां सिकताः क्षिपन् गतवान् । समायातेऽवसरे मयैवं क्षिप्तान् शरान् लोका द्रक्ष्यंति । अथ भीमो व्रजन् प्रकटौ परिघाविव भुजौ चक्रे । इमावेवकोरवबधेसहायौ भविष्यत इत्यदर्शयत् । नकुलः पांसुन्याप्तः सहदेवश्च-लिप्तवक्त्रोऽगच्छत् । ततो द्रौपदी विप्रकीर्णशिरोरुहैर्मुखमाच्छाद्य यथा मम दशा तथा शत्रुस्त्रीदशाऽचिरादेव भवत्वितिवदंती गता । राजन् ! आथर्वणेन धौम्येन कृतरक्षा परि-ग्रहाः सत्यधनाः पाण्डुदायादा इत्थं वनं याताः । तच्छ्रुत्वा तत्पराक्रमशंकितहृदयो धृत-राष्ट्रो मुहुर्मुहुः पश्चात्तापं प्रादर्शयत् । अथैवं सानुशयं राजानं दृष्ट्वा संजयः प्राह । महाराज ! पूर्वपीतं विषं पश्चात्तापेन नहि शाम्यति । विषधरद्वेष्टाऽमंत्रज्ञो महाशानो दुर्बलाग्निः प्रमादीचासंशयो विपदां विनोदस्थानम् । राजन् ! पूर्वंतु बलवत्तरैः पाण्डवैर्निष्-पारं वैरं विधाय पश्चादनुतापपदवीं प्राप्तः कथं खिद्यसे ? भगवान्नारदः स्वयं सभायां समागत्य प्रोवाच । इतश्चतुर्दशेवर्षे कौरवा न भविष्यंति । कुरुपते ! घोराणि दुर्निमित्तानि लक्ष्यंते । येषामल्पतरं फलं त्रैलोक्य संक्षयं मन्ये । अथाऽनेके गुणज्ञाः पौरास्तपोनिष्ठा ब्राह्मणाश्च पाण्डवानुसस्रुः । केचिच् च विवोधिता बाष्पपूरितदृशो यथाकथंचिन्निवृत्य समाश्वस्ताः विचित्रं विधिचेष्टितमिति ब्रुवाणाः पुरीम् प्राविशन् ।

इति श्री गद्यभारते द्वितीयं सभापर्व समाप्तम् ।

॥ ओं नमः शिवाय ॥

# अथ गद्यभारते वनपर्व समारभ्यते ।

एवं धूर्तचेष्टितः सानुजो धर्मसुतो कृष्णां नीत्वा वनं प्रययौ । ततः प्रियंवदोऽसौ सान्त्वैरनुगतपौरान् विनिर्जित्य केवलमिन्द्रसेनप्रभृतिसेवकानेव जग्राह । अथ तद् दुःखादंभसैव ब्राह्मणैः सह वृत्तिं विधाय गंगाकूलन्तिके रजनीं निनाय । ततो दिनादावध्वखिन्नान् विप्रान् विलोक्य करुणापूर्णमानसो मुमोह । एवमालोक्य समवाप्तसंज्ञं तं शनकैः शौनकोऽब्रवीत् । राजन् ! पण्डिता हर्षशोकाभ्यां न विलोड्यन्ते । लोके स्मेरचामरहासिनीं राजलक्ष्मीं को न वांछति ? परंत्वेषा पवनालोलकदलीदलचंचलाऽस्ति । तरंगतरलैरथैर्भ्रूभंगभंगुरैर्भोगैर्मुहूर्तमात्रतारुण्यैश्च सतां मनो न स्निह्यति । यदि भोगवियोगविषोद्भूतः संतापोमन्यते । तदा तु पर्यंतरोगेषु भोगेषु नृणां प्रणयो भवतु । अयं तृष्णाव्याधिरभेषजोऽदृश्यश्च वर्तते । योऽस्मिन् शरीरेसंत्यक्तेऽपि देहिनां न शाम्यति । संतोषधनशालिनां सतां जगंति मित्राणि संति । किन्तु नम्रमामेंऽशुकीव धनी सर्वेषामेव द्वेष्यो भवति । महाशयो वृष्टनष्टाभिर्भूतिभि र्न कदापि नृत्यते । यथा गताभि रागताभिश्च नदीभिः समुद्रो न चिन्त्यते । एतन्निशम्य शौनकवचो युधिष्ठिरोऽब्रवीत् । मुनिराज ! नाऽहं केवललोभेन दुःखवशंगतोऽस्मि । अत्र मदर्थे दुःखितान् कृशान् ब्राह्मणान् दृष्ट्वा तद्भरणवांछया चिन्तानलपरीतोऽहमनुशोचामि । योऽनुपजीवेत्स काकभोज्यः शवोऽपि श्रेयान् । परं विमुखार्थिमुखद्रष्टा निर्धनः सोछ्वासोऽपि न वरम् । यःपुमान् भृत्यशेषं विघसं द्विजशेषममृतं च नाश्नाति । श्वगृहसदृशंतद्गृहं धिक् । पण्डिताः सर्वाश्रमेषु गृहमेधिनं प्रशंसंति । पर्जन्यस्येव यस्यसंपदा भूतानि जीवंति । सोऽहमर्थविवर्जितः कण्टकी भूतसुषिरः श्वभ्रजातद्रुमइव कथं गृहाश्रमे वर्ते । निशम्यैवं युधिष्ठिरवचनं शौनको विहसन् प्रोवाच । अहोवत ! लोकस्यायं मिथ्यामानपरिग्रहोऽस्ति । सदाचारा महात्मानस्तु जलफलमूलतृणप्रियभाषणसुविलोकनै र्विभवाऽभावेऽप्यार्थिनः पूजयंति । अपरंच । धैर्यमुद्रितचेतसां महतांवृत्तिः समाना । ते काल प्राप्तानिधाने जीर्णफलकेनाऽपि बाऽतिथिं सत्कुर्वंति । राजन् ! किं त्वं न जानासि । यथा

साध्या विभूतयः संति । एवमाकर्ण्य शौनकवचनं बाढमित्युक्त्वा राजा कल्याणाय तमेवार्थं धौम्यं पप्रच्छ । अथ नरेन्द्रेण ब्राह्मणार्थं पृष्टो धौम्योऽभ्यभाषत सूर्यस्तवम् ।

राजन् ! क्षुत्परीतानां भूतानां प्रथमामृतं रविरस्ति । पुरा भगवान् क्षमामाविश्य महौषधीः ससर्ज । तत्र दक्षिणायनमासाद्य स एव चांद्रीं शक्तिं दधानो रसान् पुष्णाति । संप्राप्ते चोत्तरायणे तानेव संगृह्णाति । प्राणमयान्नानां हेतुस्सूर्यदेवोऽस्ति । तस्मात् संयममास्थाय तमेवाराधयेतिपुरोहितवचः श्रुत्वा युधिष्ठिरस्तद्दत्तश्रुतिजपपरायणो * बभूव ।

नमः सूर्याय देवाय संसारतिमिरच्छिदे ।
अर्थिभ्योऽन्नप्रदात्रे च भवायाऽभयकारिणे ॥
नमस्त्वष्ट्रे समाकृष्टदुष्टायारिष्टशालिने ।
अर्कायामृतसंपर्करससंवर्धितान्धसे ॥

इत्यादिधौम्यप्रोक्तैस्स्तुतिपदैर्युधिष्ठिरो भास्करं तुष्टाव । ततस्तुष्टो दिनमणिस्तस्मै प्रत्यक्षदर्शनं दत्वा वरं ब्रूहीत्यादिदेश । ततो राजा महानसेऽक्षयाणामन्नानां सन्निधिं दिव्यभोगांश्च दिवाकरप्रसादादवाप्य नित्यं द्विजशेषाशनो भूत्वा च ननंद । अथाऽनिवारितं द्विजातीनां भुक्तवत्सु सानुगेषु पार्थेषु तृप्तेषु च शेषं पार्षती भुंक्ते स्म । अथ गच्छता कालेन पाण्डवा जंगमस्वर्गसन्निभामतुला समृद्धिमवाप्य विप्रसंघयुता एकदा काम्यकवनं जग्मुः । अत्रान्तरे नागपुरस्थोऽपि धृतराष्ट्रो वनस्थपार्थानां विक्रमं ध्यायन्न कदापि धृतिं लेभे । अथैकदा स्वपराभवशंकितो राजा विदुरमाहूय पप्रच्छ । कुशाग्रमते ! दिनेष्वेतेषु श्रेयस्करं मार्गं प्रदर्शयेति वैचित्रवीर्येण पृष्टो विदुरः सादरमभाषत । राजन् ! अद्याऽपि सुनीत्या वर्तित्वा स्वसंपदं रक्ष । किम्बहुना पूर्वं स्नेहादेष ते दुर्णयविप्लवोजातस्तस्यैव ते सूनोर्जीवनपर्यन्तं विघ्नोऽयं न विनङ्क्ष्यतीति मन्ये । नरनाथ ! सुयोधनं त्यक्त्वा वीरपाण्डवान् प्रसादय । यावद्वैरं न विवर्द्धते तावद्यशःशुभ्रां श्रियं रक्ष । स्वामिन् ! प्रतिबिम्बाननं विना चण्डवैरिणो भीमस्याभिमुखं कस्तिष्ठेत् ? योऽर्जुनमाहवे जेतुं शक्तः । सोऽद्यावधि न मया श्रुतो न चावलोकितः । निशम्यैवं विदुरवचनमन्तःकोपो जनाधिपः स्विद्यल्ललाटघटितभृकुटीकुटिलोऽवदत् । मया हितवादीति सततं त्वं प्रमाणीक्रियते । किन्तु साम्प्रतं

* यदद्य कच्चवृत्रहन्नुदगा अभि सूर्यः । सर्वं तदिन्द्र ते वशे । यजु० ।

ज्ञातं यत् त्वमस्मत् पराङ्मुखोऽसि । संसारेऽस्मिन् कठिनाशयस्त्वामृते कोऽस्ति । यो पुत्रं त्यजेति निष्ठुरवाक्यं ब्रूते । विरक्तचेतसा पण्डितेनापि कोऽर्थः ? या सततं पराङ्मुखी तया सुरूपयाऽपि भार्यया किं क्रियते ? त्वद्बुद्धिविभवेन मे नेदानीमुपयोगोऽस्ति । येषु तव चेतःप्रसीदति । तान् पाण्डवान् व्रजेति धृतराष्ट्रेणोक्तो मन्युमूर्छितो विदुरो रथेन तूर्णं काम्यकवनं प्रययौ । तत्र जटावल्कलधारिभिस्तैः संपूज्यमानो निजवृत्तान्तं निवेद्य परिवृतः सुखं तस्थौ । ततोऽनुशयसंतप्तो धृतराष्ट्रो विदुराह्वाने संजयं समादिदेश । सोऽथ काननं गत्वा पार्थानुपासरत् । तत्र तान् प्रणम्य प्रसाद्य च रुष्टं विदुरं नृपांतिकमानिनाय । अथ सास्रुलोचनः प्रज्ञाचक्षुस्तं प्राप्तं परिष्वज्य प्रियप्रवचनैस्तस्य दुरुक्तमन्युविमुखत्वं चामयामास ।

अथ दुर्योधनः पार्थकाननाद्विदुरं प्रत्यागतं ज्ञात्वा रहः कर्णसौबलप्रमुखानाहूय प्रोवाच । सुहृदः ! अयं मम पितुर्दयितोमंत्री पुनरपि प्राप्तः । यदि सत्यं पृच्छयते तर्हि तु विदुरोऽस्माकं दैवनिर्मितोऽन्तरंगो रिपुरस्ति । ध्रुवमसौधूर्तोऽभिजातस्य तातस्य चित्तं प्रविश्य वनात् पाण्डवान् प्रत्यानयिष्यति । ततोऽहं कृतवैरां स्तानरीन् पुनः श्रीयुतान् दृष्ट्वा राजलक्ष्मीरहित इव शरीरेऽस्मिन् निरपेक्षो भविष्यामि । तच्छ्रुत्वा सुबलात्मजोऽब्रवीत् । नृप ! माभैषीः । अनिस्तीर्णप्रतिज्ञास्ते काननाद् व्यक्तं नायांति । अथवा त्यक्तमर्यादास्ते पाण्डवा लोभात् पुनरेष्यंति । तदा स एवाऽहं त एवाक्षास्तत् कैतवं च मे पुनः क्व गतम् ? एवमाकर्ण्य मित्रहृदयज्ञः कर्णः प्रोवाच । यदि मद्वचः प्रमाणीकुरुषे तदा तु श्रीहीना निष्पक्षा दुःखिताः काननौकसश्चते पाण्डवा अद्यैव वध्याः । तच्छ्रुत्वा जातहर्षो धार्तराष्ट्रो गजवाज्यनीकैः स्वतेजसा पाण्डवान्हन्तुं विनिर्ययौ । अत्रान्तरे ज्ञानलोचनो वेदव्यासः ससचिवं प्रस्थितं तं समवाप्य तस्य जिह्ममंत्रितं निवारयामास । ततो धृतराष्ट्रमुपेत्य प्रोवाच । राजन् ! दुर्णयरूपोऽयंकालः कुरुकुले जृंभते । एष वैराग्निर्नूनं भ्रातृकुलान्ताय समुद्गतोऽस्ति । किं बहुना । दुर्योधनं त्यज । शेषास्ते सुताःसुखं जीवान्ति । पश्यासौ पापो वनस्थपाण्डवानपिहन्तुमुद्यतः । केवलमस्यैव विकारेण वो विषमागतिर्माभवतु ।

इति व्यासवचः श्रुत्वा सुतप्रियो धृतराष्ट्रो बभाषे । भगवन् ! सर्वविपन्मूलमहं जानामि । किन्तु स्वयं पुत्रं परित्यक्तुं न शक्नोमि । ऋषिराज ! नानादोषयुक्तोऽपि देहइवपुत्रः कस्य प्रियो नास्ति ? एवमाकर्ण्य पाराशर्यः पुनरब्रवीत् । राजन् ! एवमेतत् यद्यपि पुत्रस्नेहो लोके सुदुस्त्यजस्तथापि पाण्डवास्तव सुताश्च धर्मेण समाना एव ।

नृप ! कृशेषु पाण्डवेषु मे त्वधिका दयास्ति । पुरा देवराजः स्वर्गे रुदतीं सुरभीं दृष्ट्वा-ऽपृच्छत् । मातः ! कच्चिन्नः कुशलमस्तीति कारणं पृष्टा सा दुःखिताऽवदत् । शक्र ! क्षेमं दिवौकसाम् । किन्तु स्नेहविक्लवाऽहं सीदामि । अन्येन बलिना धुर्येण कृष्यमाणं भुवि मे कार्षिकपीडितं दुर्बलं वत्सं पश्य । अस्य क्लेशः सर्वजीवेभ्योऽप्यधिकः । देवराज ! क्षितितले यद्यपि मेऽसंख्योऽयं वृषसर्गस्तिष्ठति । तथापि कृशतनावस्मिन् मेऽधिका स्पृहा समुपजायते । एवं पाकशासनः सुरभ्यास्तद् दुःखकारणं श्रुत्वा सहसा ववर्ष । येन कार्षिकस्तं सहसा मुमोच । राजन् ! सतां कृशेषु विपुला करुणा भवति । सम्प्रत्युदाराशयमवलम्ब्य राजन् ! वनेचरान् पाण्डुपुत्रान् स्वपुत्रवत् पश्येत्युपदिश्य व्यासदेवो वनं जगाम ।

अत्रान्तरे कृशानुकल्पो मैत्रेयः स्वतेजोभिर्दिशः प्रज्वलिता इव कुर्वंस्तत्र समागच्छत् । ततः प्राप्तसत्कारोऽसौ कनकासनमुपविश्य सपुत्रं कौरवपतिं सभायां समभ्यधात् । राजन् ! घोरोऽयमविनयस्त्वयाकुलाचारं समुत्सृज्य कथमुपेक्षितः ? मयैतच्छ्रुतम् । यद् भवता भ्रातृपुत्रा विवासिताः । किम्बहुना । बन्धुद्रोहरजः संगाद्राजन्नपि त्वं न राजसे । ब्राह्मणो विद्यया क्षत्रियः शौर्येण वैश्यो व्यापारेण शूद्रश्च सेवया धनमाप्नोति । परं भवान् कैतवेन लक्ष्मीवाञ्जात इति लोकप्रवादो दुर्निवारः । ततो मुनिः परावृत्य दुर्योधनमुवाच । धार्तराष्ट्र ! पार्थैः शमं विधाय सुस्थितो भव । बकहिडिम्बाकिन्दीरहन्ता भीमो न साधारणः । दुर्योधन ! मयाद्यैव काम्यकवने भवद्वैरगणनामंत्रजापिनो वल्कलिनश्च पाण्डवा दृष्टाः । रात्रौ कानने व्रजता भीमसेनेन किन्दीरो नाम राक्षसो हतस्तत् किं त्वया नाऽकर्णितम् ? निशम्यैवं मैत्रेयवचनं कुरुनंदनो दर्पात् पादेन क्ष्मां लिखन्नूरुं जघान । अथ कालानलप्रभो मुनिस्तमनयं दृष्ट्वा नाऽयमस्तीति संचिन्त्य च तं धृतराष्ट्रजं शशाप ।

अस्य दुर्नयरोगस्य भेषजं पवनात्मजः ।
उरुं भित्वा महायुद्धे शिक्षां तुभ्यं प्रदास्यति ॥

एवमाकर्ण्य भीतः कुरूद्वहः पुत्रस्नेहात् कुपितमुनिं प्रसादयामास । ततः प्रशांतमन्युर्मुनिपुंगवः शनकैरुवाच । राजन् ! संत्यक्तवैरस्याऽस्य शापो न भविष्यति । ततो धृतराष्ट्रो मुनिमपृच्छत् । महामुने ! भीमेन कथं किंदीरो निहत इति राज्ञा पृष्टो मुनिर्दुर्योधनमनादराद् दृष्ट्वा विदुरो वक्ष्यतीत्यभिधाय तूर्णमदर्शनं प्रायात् ॥

तस्मिन् प्रयाते राजपृष्टो विदुरो दुर्योधनानुपस्थितौ वक्तुं प्रारभत । अथैकदा द्यूत-जिताः पाण्डवाः क्वाऽपि गहने विश्रामार्थमतिष्ठन् । तत्रांजनाद्रिनिभैस्तमः पुंजैर्वृते-ऽर्धरात्रे महाकायः किंदिरो नाम राक्षस उदतिष्ठत् । ततो ज्वालाजटालनयनं विद्युत्पिंगशिरोरुहं जंगमं नीलाद्रिमिव तं नक्तं विलोक्य चकिताऽयतलोचना कृष्णा झंझावातेन कदलीव चकम्पे । ततो रजनीचरो रजन्यां जगर्ज । येन भूतानि सर्वा दिशो विघट्टिता मेनिरे । अथ नदतस्तस्य लोकमोहिनी माया धौम्यमंत्रपरिभ्रष्टा-ऽविद्येव सहसा विलयमगात् । ततोऽसौ नामभिः पाण्डवान् ज्ञात्वा क्रोधान्धो युधिष्ठिरं प्रोवाच । अहोनु ! सुचिरादेष मे मनोरथः फलितः । लोकेऽभीष्टसिद्धयः काकतालीय मायांतीति सत्यम् । भीमेनाऽनेन मे दयितभ्राता बको हतः । डिम्बमित्रं हिडिम्बमपि हतवानयम् । उभावपि बहिश्चरौ मे प्राणौ । दिष्ट्या सोऽयं रिपुर्मम भुजपंजरगोचरं प्रयातः । नूनमद्य समरेऽयं कृतान्तनगरातिथिर्भवितेत्यभिधाय दंतान् पिपेष । अस्मिन्नेवावसरे भीमसेनो निष्पत्रतरुमुत्खाय तं राक्षसमपीडयत् । अथ किंदिरोऽपि जवाद् भीमाय दीप्तमुल्मुकं प्राहिणोत् । एवमालोक्य भीमसेनश्चरणेन तन्चिक्षेप । ततस्तयोः शैलसारेषु गात्रेषु प्रहृतपादपा विसिनिबालकंदांकुरा इव द्रागभज्यंत । अथ निशा-चरः क्रोधं कृत्वा मारुतेर्मूर्ध्नि शैलशृंगोपमां शिलां चिक्षेप । ततो भीमः शिलाताडनजां व्यथां संस्तभ्य राविणं तं निशाचरं पाणिभ्यां कंठे निष्पीड्य व्योम्नि चिरं भ्रामयित्वा च भूतले न्यपातयत् । तत्र सरुधिरोद्गीर्णस्य व्यसोः किन्दीरस्य मरणकथामुनिजन-मुखान्मया श्रुता । ततः कुतूहलेन रणक्षेत्रं गत्वा तद्गिरिवने राक्षसकलेवरमपि व्यलोकयम् । इति विदुरेणोक्तं वृत्तमाकर्ण्य धृतराष्ट्रस्तप्तायसशूलस्पृष्ट इव व्यथितो बभूव ।

अत्रान्तरे केशवः कैतवविवासितान् पाण्डवान् ज्ञात्वा स्वयमेव तत्र समाययौ । सोऽथ चेदिपांचालकेकयपुरस्सरैर्धृष्टद्युम्नादिवीरैः परिवृतो जटावल्कलधारिणस्तानव-लोक्य कोपेन क्षणं वाचमुदीरणेऽपि समर्थो नाऽभवत् । ततस्तस्य विश्वक्षयाक्षेप-दीक्षितामिव भृकुटीं वीक्ष्य जगत्त्रय परित्रस्ता महर्षयः स्वस्तीत्यूचुः । अथ कृतांजलि-र्धनंजयस्तमवदत् । प्रभो ! विश्वसंहारचतुरां विक्रियां संहर । नाथ ! कोऽयं ते दुर्वार-दैत्यनिर्दारणोचितः कीटेषु धार्तराष्ट्रेषु गंभीरविक्रमसंरंभः ? सर्वेश ! शमिना त्वया किम् पुष्करप्रभासवदरीषु सहस्राब्दं कृतं तपो न स्मियते ? देव ! इयममृत-पेशला भवन्मूर्तिर्लोकत्राणाय । अपरं च संकर्षणात्मिका रौद्रीशक्तिः संहाराय । अच्युत ! त्वदिच्छास्पन्दमात्रेण जगन्ति भवंति च न भवंति । एवं पार्थवचसा शांतकोपो मुरान्तकः

प्रोवाच । पार्थ ! त्वं पुराणमुनिर्नररूपेणात्र तिष्ठसि । किं बहुना । त्वम्मे बहिश्चरं जीवितम् । क्षुद्रैः कृतां तव विप्रकृतिं नाऽहं सोढुं शक्नुयाम् । वसुधातलेऽस्मिन् पतिता दुर्योधनादयो निजशोणितसिक्तानि रजांसि भक्षयिष्यंतीति सुस्पष्टमेव । एवमाकर्ण्य शृण्वतो धृष्टद्युम्नस्य साश्रुनयना द्रौपदी कैटभान्तकं समभ्येत्य प्रोवाच । जनार्दन ! मया युधिष्ठिरसभाजुषां मुनीन्द्राणां कथयतां त्वत् प्रभाव विभूतयो बहुशः श्रुताः । त्वयि जगन्नाथे विद्यमाने साम्राज्ययाजिनो युधिष्ठिरजायाऽहं सभायां परैर्गौरिति व्याहृता । कृष्ण ! बकहिडिम्बारेरग्रे खाण्डवद्रुहश्च पश्यतोऽहं सती दुःशासनेन कृष्टा । अयं मे धार्तराष्ट्रकराकृष्टव्याकीर्णकचसंचयः पांचाल्ययशश्चान्द्रिकाकालबारिदोपमोऽस्ति । सम्प्रति नूनमहं पातककारिणी । यद्भूत्वापि पाण्डुपुत्रबधूः प्राकृतवधूरिवपराभवमिमं प्राप्तेत्युक्त्वा कुचस्थलेऽस्रुकणसंततिं सूत्रहारतान्निनाय । ततो भगवान् गरुडध्वजो वचनामृतेनमन्युहालाहलग्रस्तां तां जीवयन्निव बभाषे । राजपुत्रि ! ताः कौरवस्त्रियोऽपि बाष्पजलैस्तव कोपसप्तार्चिषो निर्वापणमवश्यं करिष्यंतीति सत्यं सत्यमवगच्छ ।

भीमभुजयोर्यत् क्षमं गाण्डीवस्य यदुचितं मत् कोपस्य च यद्यत्तुल्यं तस्य तस्य स्वयमहमग्रणीर्भविष्यामीत्युक्तवतिदाशार्हे धृष्टद्युम्नोऽब्रवीत् । वीरपत्नि ! मा कुरु चिन्ताम् । तव पतयो नूनं ते समीहितं करिष्यंति । युधि मया द्रोणेहते शिखण्डिना च गांगेये निपातिते कौरवाः पाण्डवानां भविष्यति नातिभारः । निशम्यैवं भ्रातृवचः कृष्णा कटाक्षेण किरीटिनं विलोकयामास । ततः कर्णान्तपरिसर्पिणा नेत्रविभागेन शरेणेव विद्धः किरीटी जगाद । कृष्णसाराक्षि ! माशुचः । कुरवस्तु तदैव हता यदैव कृष्णेन ललाटे भ्रुकुटी कृता । अथ जनार्दनोऽक्षुब्धवारिधिमिव निर्विकारं युधिष्ठिरमभाषत । महीपाल ! किं करोमि । यन्मयि सन्निहिते जगद्रक्षाशिक्षामणिस्त्वं पराभवमिमं प्राप्तः। तव राजसूये मया शिशुपाले निपातिते कोपं कृत्वा तत्सखा साल्वहयग्रीवो मत्पुरीमगात् । तत्र दृढतोरणार्गलां परिघबाहुभिः शूरैश्च रक्षितां द्वारकां विलोक्य व्योमचारी सौभो नानोपायैस्तामरौत्सीत् । ततः प्रद्युम्नाद्या मत्सुता युद्धार्थं रथैर्निर्ययुः । अथ तैर्मकरैरिव क्षोभ्यमाना साल्ववाहिनी लसद् विकोशासिवीचीवलयशालिनी विरेजे । ततो विविन्ध्य क्षेमवृद्धिनामकौ सौभसेनापती मत्सुतानां पराक्रमं सोढुंसमर्थौ नाऽभवताम् । अथ चारुदोष्णेन विविन्ध्ये निपातिते स्वयं साल्वः कामगविमानेन तत्र समभ्यायात् । एवमालोक्य कन्दर्पकल्पः प्रद्युम्नो दारुकप्रेरितहयैर्महीं निर्दारयन्निव तमभ्यधावत् । ततः साल्वप्रद्युम्नयोर्युद्धे दिव्यास्त्रविसरज्वालाजालारुणं नभो जातरक्तमिवाऽभवत् । तस्मिन्नवसरे साल्व-

वाहिनी सुवर्णपुंखैः प्रद्युम्नसायकैर्मेरुसंजातहेमवेत्रवनाश्रियं बभार । अथाऽयं रौक्मिणेय-दारुणशरविदारितः साल्वो दुर्जनवचसा मोहादिव रथादपतत् । ततः क्षिप्रहस्तः साल्वः कर्णान्तपरिसर्पिणा बाणेन बाणवर्षिणं प्रद्युम्नं विव्याध । सोऽथ तीक्ष्णपत्रिणा शरेण प्रहृतः कुलिशताडित शैल इव विचचाल । ततो लब्धसंज्ञः स निज सारथिना नीतं रथं विज्ञाय पूर्वं सूतं विनिर्भर्त्स्य पुनः साल्वमभ्याद्रवत् । अथ क्रुद्धो रौक्मिणेयो ग्रस्तक्षितितलैरिव तुरंगैः रिपुं समभ्येत्य तं सहसैव शरशताकुलं चक्रे । ततः साल्वो यन्महोग्रं दैत्यास्त्रं प्रादुश्चकार । तन्मत्सुतो ब्रह्मशिरसाऽऽशु शमयामास । अथ प्रद्युम्नोऽर्धचन्द्रं बाणं चिक्षेप । तेन दारितः साल्वः क्षतजोक्षितो मूर्छामवाप्य वाताकुलाऽशोक इव चकम्पे । ततः प्रद्युम्नो यावत् तद्वधाय स्वकार्मुकेऽस्त्रं संदधाति तावत् कृष्ण एवास्य वधाय समर्थ इति देववाणीं शुश्राव । ततो दिव्यशासनात् वीरप्रद्युम्ने संहृतास्त्रे साल्वराजो ध्वस्ततोरणां द्वारकां कृत्वा स्वनगरमयासीत् । अथ यज्ञान्ते तव नगरात् प्रतिनिवृत्तोऽहं हेमंते नलिनीमिव ध्वस्ततोरणां पुरीमपश्यम् । ततः शालिपूर्णामुर्वरां मेघेन समाहितामिव साल्वराजेन शकलीकृतां तां पुरीं श्रुत्वा कोपकम्पितोऽहं वृष्णिभिः सह जलधिकूलाश्रयं गत्वा तमरौत्सम् । अथ सैन्ययोरुभयोः शस्त्राशस्त्रि युद्धं प्रावर्त्तत । ततो मण्डलीकृतकार्मुकोऽहं शरैस्तस्याकाशगं सौभपुरमपूरयम् । अथ मायायोधी स ममोपरि मायां वितस्तार । येनाऽहं क्षिप्रं तिमिरावृतोऽभवम् । ततोऽहं पूषास्त्रेण तन्मायाकृतं मोहं समुत्सार्योर्द्ध्ववदनैः शरैश्च तं दैत्यमपूरयम् । सोऽथ मायावी नभस्तलान् मे वृद्धपितरं शरभिन्नगात्रमधोमुखं च प्रादर्शयत् । एवमालोक्य लूनधैर्योऽहं क्षणमात्मना विचार्य दैत्यमायां च निर्धारितान् । ततोऽहं तस्मै प्रचण्डमार्तण्डमण्डलाभं सुदर्शनचक्रं प्राहिणवम् । तत्तु पटुटांकारस्फोटिताशेषदिक्तटं सौभनगरं दग्ध्वा साल्वं च द्विधा चक्रे । एवं चक्रनिर्दारिते दैत्ये महीतले पतिते तदनुगास्तद्वह्निना दह्यमाना इवक्षयमयासिषुः । राजन् ! एवं सौभरेणाऽहं सुचिरं व्याकुलोऽभवम् । मध्यस्थिते च त्वया योऽयं पराभवः प्राप्तस्तत्राऽहं किङ्करोमीत्यभिधाय शौरिः साश्रुलोचनां सुभद्रां सूनृतगिरा सान्त्वयामास । ततः पाण्डवान् समामंत्र्य सौभद्रं च नीत्वा रथेनाशु द्वारावतीमगात् । अथ द्रौपदेयान् पुरस्कृत्य सकेकये धृष्टद्युम्ने प्रयाते धृष्टकेतुप्रभृतयोऽपि रथानारुह्य पवित्रं द्वैतवनसरो जग्मुः । यत्र पुन्नागकेसराशोकचूतकिंशुकचंपका मंजुशिंजानषट्पदैः सामानीव जगुः । तत्र वसत्सु पार्थेषु नारदाद्याः सुरर्षयोऽपरं देवलोकमिव कुर्वाणाः स्थितिं बबंधुः । तस्मिन् ब्रह्ममहासंघमध्ये महामुनिमार्कण्डेयो वीरपाण्डवान् जटाधरान्

वीक्ष्य ऋष्यमूकनिवासिनो रावणारेर्दाशरथेश्चिरं सस्मार । तत्रैकदा सायाह्ने संध्यारागारुणाम्बरे होमधूमेषु सर्पत्सु मंत्राहुतिपरायणेषु विप्रेषु सन्ध्याबद्धसमाधिषु च मुनिवृन्देषु दाल्भ्यो बको युधिष्ठिरं बभाषे । राजचूडामणे ! पश्य । त्वत् समाश्रयशालिनां भूदेवानां निर्विघ्नं वैदिकी क्रिया प्रवृत्ता । अहो परस्पराबद्धब्रह्मक्षत्रमिदं वनं तपः शौर्ययोर्लीलाक्षेत्रमिवविभाति । राजन् ! यत्र द्विजेन्द्रतेजो राजानं नरेन्द्रप्रतापश्च ब्राह्मणान् रक्षति । तत्र सरस्वतीमहालक्ष्म्योरेकत्रनिवासो भवति । एवमाकर्ण्यराजोवाच । महामुने ! सर्वमेतद् भवद्विधानां महानुभावानां कृपादृष्टिफलम् । अत्रान्तरे दुःशासनपराभवं मनसा स्मरंती द्रौपदी राजानमभ्येत्य प्रोवाच । नरनाथ ! परैरिमां दशां नीतामापिभार्यां विलोक्य मानिनोऽपि ते भ्रूभंगः कथं नोपजायते ? लोके स्वतेजसा हीना राजानो न राजंते । शत्रुमित्रयोः क्षमा यतिनां भूषणं कथ्यते । परमपराधिषु सत्वेषु सैव नृपाणां दूषणं गण्यते । लोका नाऽतितीक्ष्णं विलंघन्ते । किंतु क्षमिणं लंघयंति । महाजनास्तां क्षमां शंसन्ति । या च परिभवास्पदं नास्ति। पुराऽत्रैवार्थे श्रीभडिः पितामहप्रह्लादं समुपेत्य तेजः क्षमयोर्गुरुलाघवमपृच्छत् । तच्छ्रुत्वा सोऽब्रवीत् । वत्स ! क्षमा तु मुनिभूषणम् । किंतु महोग्रतेजसां महीपालानां तु जीवस्तेज एव । क्षमावान् बहुविधावमानैर्मर्मवेधिभिर्नर्मभिः किम्बहुना दारापहरणपर्यन्तं परैः परिभूयते । प्रशान्तांगारवर्चसा क्षमिणा मनुष्येण किम् ? स्वभृत्या अपि पादेन यं निर्विशंकं स्पृशंति । क्षमी गृहयोषाभिर्भर्त्स्यते । बालकैः परिकृष्यते । जरद्गव इवाऽवीर्यः सर्वापदां पदं गण्यते । क्लीबं स्त्रियो भीरुं भटस्तथाऽन्येऽपि च यं किमपि कथयंति । सर्वावधूतस्य तस्य क्षमिणो जीवितेन किम् ? जीर्णमार्जारवत् सदा दीनं क्षमापरं पुरुषं धिक् । यः श्मश्रुपाटनपर्यंतं पराभवं सहते । यो राजा मानमवलंब्य तेजसा प्रकाशते । लक्ष्मीस्तं विजयपुष्पोपहारेण पूजयति । अतीक्ष्णस्तेजस्वीशत्रुहन्ता क्षमी यथापराधदण्डश्च भूपतिर्लक्ष्मीनिवासो भवति । यः पादप्रहारेऽपि मौनी सक्षमी न किन्तु नीच एव । एवमाकृष्टशस्त्रे मित्रेऽपि यस्तेजस्वी न स खल एव निगद्यते । यः क्षमावान् देशकालौ विलोक्य क्रोधं कुरुते तस्य जनापवादैरस्पृष्टाः संपदो वर्धन्ते । राजन् ! भाडिनापृष्टेन प्रह्लादेन यत् कथितं तदंगीकृत्य परापकारनिरतेषु शत्रुषु क्षमां मा कृथाः । एवमाकर्ण्य कृष्णावचनं ससत्वो राजा सस्मितमवादीत् । कृष्णे ! सत्यमुक्तं भवत्या । तेज एव राज्ञां विभूतये भवति । किम्बहुना । क्षत्रसंततिरेषातेजसा सहैव जातास्ति । अनुत्सेकं सत्वं पराक्रमोऽहिंस्रोऽचापलं च दाक्ष्यं तेजोऽभिधीयते । केवलं क्रोधदग्धानां पुरुषाणामायासो दुःसहः किल । यतः क्रोधान्धोऽनिवारितोन्धकूपे

निपतति । देवि ! क्रोधविवशोभूताविष्ट इव समंताद्धावति । यथापस्मारी विवेक-शून्यो भवति । तथैव क्रुद्धोऽपिज्ञेयः । यः पुमान् समुत्पतितं क्रोधं तथा मानं च नियच्छति । पुंसां स श्रियोभाजनं भूत्वाऽऽपत्सु च न मुह्यति । क्रोधीबहुलामकीर्तिमात्मनाशं च प्राप्नोति । येन तं दुःसहक्रोधं साधु कोनाम न वारयेत् । यथा शशिना रजनी, लीलया च सुंदरी शोभते । तथैव पुमांस्तु क्षमयैव शोभते । क्षमाऽद्रव्याडम्बरो यज्ञः क्षमाऽकायशोधनंतपः । क्षमाऽप्रमादं महत्तेजः । किंबहुना । क्षमैव सतामममृतम् । सुभ्रु ! महात्मा कश्यपोऽब्रवीत् । यत् क्षमावानेव दयादानादिगुणान् पालयति । किमन्यत् । क्षमैव नृणां भर्तुः सनातनंपरब्रह्म । एवं सौम्यवचनमाकर्ण्य द्रौपदी गद्गदगिरा प्रोवाच । राजन् ! तस्मैस्वच्छन्दचारिणे विधात्रे नमः । येन ते बुद्धिः स्वधर्मादपकृष्टा । यथा यंत्रकारेच्छया कृत्रिमपुत्रकोजीवन्निव चेष्टते तथा दैवमोहितोऽपि जनः सर्वथा विवशे व्यवहरति । प्रायो देवैकनिष्ठस्य क्रियाक्रमोऽपि विफलः । यतः सर्वमिदं शुभाशुभं भगवदिच्छयैव भवति । देव ! पापात्मा दुर्योधनस्तु राज्यं करोति । भवद्विधश्च धर्मज्ञो वने सीदति । तस्माद् देहिनां दैविकादन्यो हेतुर्न विद्यते । निशाम्यैवं दयितावचोऽजातशत्रुः सास्मितोऽब्रवीत् । कृष्णेऽहमपीदृशं प्रगल्भं वक्तुं जानामि । लोके मुनिवराणां धर्मकलां श्रियं दृष्ट्वा प्रत्यक्षेऽस्मिन् सदाचारे को नाम शंकां कुर्यात् । देवि ! अयं तु मे धर्मः । यो धर्मः फलार्थितया क्रियतेः स तु वणिग्व्यवहारः । एवमाकर्ण्य द्रौपदी पुनर्बभाषे । आर्यपुत्र ! सर्वमेतदहंजानामि । परमेषाद्दुःखसूचना माम् पुनः प्रेरयति । नाथ ! दैवपुरुषार्थयोः परस्परनिबन्धनं वर्तते । तत्र दैवं पुरुषार्थाधीनं मत्वा पौरुषेमाविलंबस्वेति निगद्य निवृत्तायां कृष्णायां भीमसेनो धर्मराजमभ्युपेत्य प्रोवाच । राजन् ! मूकस्य सर्वस्वमिव किंवा क्लीबस्य कामिनीव दुर्योधनेन नो राजलक्ष्मीर्हृता । धर्म्मैकवादिनात्वयासंप्रत्यर्थसम्पत्तिः परित्यक्ता । अतो वयं दग्धपक्षाः खगा इव विवशा जातास्मः । कामार्थलोपीधर्मः किंवाऽर्थधर्महा कामस्तथाऽर्थोवा धर्मकामघ्नः सद्भिः किल विगार्हितः कथितः । समर्थक्षत्रियो मानं विहाय जटाधरो भूत्वा च वने विचरेदितिमर्यादा कस्मिन् शास्त्रे लिखिता ? राजन् ! अद्यापि स्वधर्मे वर्तित्वा रणदीक्षितो भव । नूनं तव कोपाग्नौ पतित्वा पतंगोपमाः कौरवा विलयमेष्यंति । समरे सव्यसाचिगाण्डीवप्रणयीभुजः पतद्भिर्विपक्षिनृपवक्त्रैः कंदुकक्रीडां करोतु । किंबहुना । भिन्नेभकुंभकूटोत्थवेल्लद्रक्तच्छटोक्षितेयं मद्गदा रणे शोणांशुकवतीव नृत्यतु । एतदाकर्ण्य भीमवचनं गंभीरहृदयो

राजा क्षणं विमृश्य प्रोवाच। वत्स! युष्माकमनुशासने मे वाणी न प्रगल्भते। यैर्विक्रियैर्मत्कृते घोरा दुर्दशा सह्यते। भीम! यथा ते भुजस्य विपुलप्रभावं वेद्मि तथा हेलानिर्जितजंभारेरर्जुनस्यापि विक्रमं सम्यगहं जाने। परं सत्यभंगभयादज्ञातचर्यापर्याप्तो द्यूतनिर्जितोऽयं समयो मया नोल्लंघनीयः। वीर! कालेन कालपक्वांस्तान् पातयिष्यसि। पश्य। भास्करोऽपि कालमनासाद्य तिमिरं न हन्ति। तच्छ्रुत्वा विमना भीमसेनोऽब्रवीत्। राजन्! अनिलोल्लासितोत्तालजलकल्लोलपल्लवं मनुष्यजीवितविभ्रमं किन्न जानासि? मन्युदग्धा वयमवश्यं क्षयं याताः। संप्रति वर्षोपमांस्त्रयोदशमासान् को नाम प्रतीक्षते? अपरं च भुवनविश्रुता वयं करावृत सूर्या इव छन्नाः क्व विचरिष्यामः? यस्य कीर्तयो दिव्यदेशेष्वपि गीयंते। स त्वं पिहितवक्त्रोऽप्यविज्ञातो न भविष्यसि। येन दिग्विजये किन्नरा अपि विजिता सोऽग्निकल्पोऽर्जुनः कथं छन्नः स्थास्यति? नूनमिदं व्यसनमपर्यन्तं समुपस्थितम्। लोके कस्तूरिका मृगाः केन गोप्यंते? तात! पूर्वं समरे शत्रून्हत्वा पश्चाद्धर्मं चर। संसारे सर्वपापप्रशान्तये वृषोत्सर्गादयोऽनेके धर्माः संति। निशम्यैवं भीमवचनं धर्मराजोऽब्रवीत्। वीर! साधुसम्मतोऽयं ते विचारः परं दृष्टसाराणां महोत्साहवतामपि सहसा कृतं कर्म केवलं पश्चात्तापायैव भवति। तत्र कर्णोऽपरः कार्तिकेय इव पराक्रमी विद्यते। भीष्मद्रोणौ च रणे सुरैरप्यजेयाविति वादिनि भूपतौ ज्ञानलोचनो भगवान् वेदव्यासस्तं देशं समाययौ। ततोऽसौ प्राप्तपूजासनो राजानं बभाषे। भूपाल! तव हृदयवर्तिनी चिन्ता मया परिज्ञाता। द्रोणकर्णकृपादयो वीरा दिव्यास्त्रविदुषः संतीति चिंता तव हृदयान्निवर्तताम्। संप्रति तुभ्यमहं दिव्यविद्यां ददामि। यां फल्गुणस्त्वत्तः समवाप्य सरुद्रलोकपालेभ्योऽपि दिव्यास्त्राणि समवाप्स्यतीत्यभिधाय तिरोदधे। ततः पाण्डवा विमर्दविरला द्वैतवनस्थलीस्त्यक्त्वा ब्राह्मणवृन्दान् पुरस्कृत्य च काम्यकवनं प्रययुः। तत्रैकदा युधिष्ठिरो धनंजयं समाहूय व्यासशासनमावेद्य च तद्विद्याभाजनं व्यधात्। ततः पार्थो दिव्यास्त्रज्ञानलाभाय सहानुजं धर्मराजं समामंत्र्य तपसे वदरिकाश्रमं प्रायात्।

सोऽथ कवची धनुर्धृत्वा च मनोहरं गौरीगुरुगिरेरिन्द्रकीलाभिधं शृंगमारुरोह। तत्राऽपरेद्युः कश्चिद् द्विजस्तमभ्युपेत्य प्रोवाच। वत्स! दिव्यास्त्रेच्छोस्तव संकल्पो मया ज्ञातः। त्वमत्र तपसा पूर्वं शंकरं दृष्ट्वा ततः समीहितमवाप्स्यसीति समादिश्य स तेजोमूर्तिर्ब्राह्मणोऽन्तर्हितोऽभवत्। अथार्जुनस्तमालवलयश्यामं गंगायमुनावारिविभंग-

सुभगप्रभं हंससारसादिजलपक्षिभिराकीर्णप्रदेशम् झांकारश्रवणानन्दनिःस्यन्दैर्द्विपैः सेवितम् किन्नरीकेलिसंगीतदत्तकर्णकुरंगकं च तपोवनमवाप्योर्द्धभुजो निराहारः शिवमंत्रं जजाप । अथैकपादानतांगुष्ठनखाग्रस्पृष्टभूतलः शीतवातातपसहो निरालंबश्च देवाधिदेवं महादेवं स्मरन् स्थाणुरिवाचलोऽतिष्ठत् । अत्रान्तरे मुनिवरविज्ञतो भगवान् हरः कैरातरूपमास्थाय पाण्डवं द्रष्टुं समाययौ । अथ राजीवलोचनः कनकतालाभो युवा मयूरपत्राभरणानि च धृत्वा शवररूपेण तत्र विचचार । ततस्तस्य स्वेच्छाविहारिणश्चरितानुवृता सती गुंजाफलविभूषिता भूत्वा लीलाशवरीरूपेण तत्राजगाम । अथ शवरशर्वस्तु तां पूर्णेन्दुमुखीं शवरीं प्रियां दृष्ट्वा जहर्ष । प्रायोहेलाविशृंखलावेशः प्रभूणां तोषायैव भवति । अत्रान्तरे मूकदानवो वराहरूपं धृत्वा पार्थं हन्तुं समाययौ । अथार्जुनस्तं जिघांसंतं सद्यो निशितेषुणा जघान । शवरोऽपि समभ्येत्य समकालमेव तमताडयत् । तेनाऽसौ दैत्यः सौकरं रूपं त्यक्त्वा व्यसुरभवत् । ततो धनंजय एककालशराघातकोपात् कर्णान्ताकृष्टसायकः किरातपतिमभ्यधात् । अहोनु ! वनचरो मृगयाधर्मं जानन्नपि मया हतं क्रोडं हत्वाऽपि न विकम्पसे ? किं धर्मविमोहाद् धार्ष्ट्याद् वा कुरंगं हतवानसि ? नूनं गह्वरावसथो जनो निर्विवेको भवतीत्यभिधाय हेमपुंखैस्तं हेमाचलप्रभमपूरयत् । ततोऽर्जुनेरिताः शरा वज्रसाराभे तच्छरीरेऽवकाशमनासाद्य विशीर्णाः क्षितिं प्रययुः । अथ तेन ग्रस्तशरः पार्थोऽतिविस्मयमवाप्य गाण्डीवेन चूडाग्रे स्मितमुखं तं ताडयामास । ततोऽसौ तेन हेलयैव ग्रस्तकोदण्डदण्डो भुजगभीषणं खड्गं समाकृष्य तमभ्यधावत् । अथाऽर्जुनेन तन्मूर्ध्नि पातितोऽपि कृपाणस्तत्तेजसा विशीर्णः कणशो दिशः प्रययौ । ततो धनंजयो भीमविक्रमं किरातं भुजाभ्यामाकृष्य मुष्टिभिस्तलघातैश्च निजघान । तस्मिन्नवसरे कांचनगौरेण तेन संश्लिष्टः श्यामलद्युतिः किरीटी मेरुणा मिलितनीलरत्नाद्रिरिव रराज । अथान्तर्हिता प्रमथास्तस्याऽमर्यादं धैर्यं विलोक्य मुहुर्मुहुः पाण्डुसुतमपूजयन् । अथ तयोर्वज्रांगयोरुरुस्तटविनिष्पेषैः स्फुलिङ्गशबलोऽनलः प्रादुरभूत् । ततो दीर्घभुजोऽर्जुनं भुजपंजरवर्तिनं कृत्वा निविडं निपीड्य च भूमौ निश्चेष्टमपातयत् । एवं तस्मिन्निपतिते साक्षाद्देवः शिवः सस्मितमभाषत । पार्थ ! शीघ्रमुत्तिष्ठ । त्वया शौर्यमुन्मुद्रितम् । तव विक्रमात् तुष्टोऽहं तुभ्यं दिव्यनयनं ददामि तद्गृहाणेति चन्द्रचूडेनोक्ते पीयूषपूरित इव रचितांजलिः सहसा समुत्थाय त्रैलोक्यानुग्रहव्यग्रां लोचनत्रयीं बिभ्राणम् विभूतिविभूषणं भुजंगमभूषणं वृषवाहनं शूलिनं च कृतार्थो ददर्श । ततोऽसौ तत्पादनखचंद्रिकां स्वचूडाचुंबिनीं कुर्वन् स्तोतुमारभत । श्रुतिरथस्थाय त्र्यक्षाय

त्रिपुरच्छिदे नमः । स्तंभितजंभारिभुजस्तंभाय शंभवे नमः । भिन्नांजनश्याममूर्तये भैरवात्मने नमः । कालीकटाक्षविक्षेपकलितायेव शूलिने नमः । तुंगजटाजूटक्षुभ्यद्भागीरथीजुषे नमः । कैलासशुभ्राय शशिशेखराय नमः । ताण्डवाडम्बरस्पृशे महेश्वराय नमोनम इत्यादिना विरूपाक्षं स्तुत्वा फल्गुनोऽपराधं क्षमयामास । ततस्तुष्टो महादेवस् तस्मै प्रत्यक्षविग्रहं पाशुपतास्त्रं प्रादात् । ततस् तस्मिन् दीप्ततेजसि महास्त्रे गृहीते सगणो गिरिजापतिर्नभसा जगाम । अथ प्रयाते भगवति साक्षाच्छंभुर्मया विलोकित इति विचिन्त्यार्जुनोऽतीव विस्मितोऽभवत् । अत्रान्तरे नीलमणिरुचिरो वरुणः पश्चिमतः कांचनच्छायो धनद उत्तरतो दण्डपाणिर्यमो दक्षिणतः सुरगजं समारुह्य च सहस्राक्षः प्राच्याः समागच्छत् । ततस्ते सर्वे मिलित्वा पार्थमूचुः । वीर ! त्वमसि पुराणमुनिः समरे च त्वया देवहितार्थं महत्कार्यं कर्तव्यमतो गृहाणास्त्राणीत्यभिधाय तस्मै प्रीत्याऽस्त्राणि यथाविधि प्रददुः । ततोऽसौ जलेश्वरात्पाशं कुबेरात्तिरोधानं यमाच्च दण्डमस्त्रमवाप्य कृतकृत्यो बभूव । अथ देवराजोऽब्रवीत् । वत्स ! त्रिदिवमारुह्य मदस्त्राण्यवाप्स्यसीति पार्थं समादिश्य लोकपवृन्दसमेतो दिवमारुरोह । ततोऽन्येद्युर्दिव्यरथादवतीर्य मातलिः पार्थं समभ्येत्य च प्रोवाच । वीरवर ! सुरराजेन तवाऽयं रथः प्रेरितः । संप्रति त्वमारुह्य दिवमेहीति शक्रसंदेशं श्रुत्वा पार्थः स्नात्वाऽग्निमपूजयत् । ततो जपान्निवृत्य गिरिवरं प्रणम्य च रथमारुरोह । अहो ! मनुमांधातृप्रमुखा यं स्प्रष्टुमपि न लेभिरे । तेन मनोरथजवेन रथेन पाण्डवो यथाविधि यातीति देवयोनयो मिथः प्रोचुः । सोऽथ मार्गे यतियाज्ञिकदानशीलसत्यवादिनां विमानानि विलोकयन् जंगमकैलासमिव चतुर्दन्तमैरावणं ददर्श । ततो व्योममार्गमतीत्य क्वचिन् मंदारमधुवाहिना बालानिलेन कलिताम्, क्वचिद् दिव्यवनितावदनेन्दुभिरदोषविषदोद्योतैरपूर्वकृतचन्द्रिकाम्, क्वचिन्म्लान माल्यवसनैर्भ्राजिष्णुविभवैर्भासुरसुरैश्च सेविता ममरावतीं विवेश । अथाऽसौ दिव्यकान्ताकरधूतवालव्यजनमारुतैरुपसेवितम्, रजनीराजमण्डलशालिना छत्रेण विराजमानम्, सकान्तगंधर्वगणैर्गीयमानगुणं दिव्यवसनं नवरत्नालंकारैर्विभूषितं पृथुरत्नासनासीनं च शचीसमेतं शतक्रतुमदर्शत् । ततः किरीटी सिद्धचारणवंदितं तं देवराजं प्रणम्य कृतांजलिस्तस्थौ । अथ सहस्राक्षस्तं विलोक्य हर्षान् निजासनार्धमादिश्य च पाणिना पस्पर्श । ततः पुरंदरस्तं पुण्यसौरभोदारं व्याजहार । वत्स ! त्वमद्य विपुलगुणैः परां कोटिं प्राप्तोऽसि । समरे सामान्यसायकैर्भीष्मप्रमुखा वीरा जेतुं न शक्याः । अतो मे दिव्यास्त्रं गृहाणेत्यादिश्य तस्मै दिव्यास्त्रं प्रादात् । ततोऽर्जुनः सुरेशशिक्षया चित्रसेनाद् गीतवाद्यकलारहस्यमज्ञासीत् ।

एवं सव्यसाची देववृन्दैः सह वासवभवने पंच समा निनाय । तत्र मेनकाप्रभृत्यप्सरोभिः परिवृतोऽपि न कदाचिद् विषयासक्तो बभूव । अत्रान्तरे समागतो लोमशमुनिश् शतक्रतु सिंहासनार्धे पार्थं विलोक्यातिविस्मितोऽभवत् । ततः सर्वज्ञसुरेश्वरः पार्थमुखाम्बुजे सुदृष्टिं क्षिपन् महामुनिं सस्मितमवादीत् । ऋषिराज ! नारायणसखोऽयं पुराणमुनिः सुरकार्यार्थं नररूपेणावतीर्य साधुसत्कृतेर्भाजनमभूत् । संप्रति त्वमितो गत्वा युधिष्ठिरायैन मिहस्थं निवेदय । येनाऽसौ चिन्तया न ताम्यतीति महेन्द्रवचसा तीर्थार्थी मुनिवरः सशिष्यः पाण्डवसेवितं काम्यकवनं प्रायात् ।

अथैकदा व्यासपरिकीर्तितामर्जुनकथां श्रुत्वा धृतराष्ट्रः खिन्नो भूत्वा संजय मभाषत । सूत ! मयाऽद्य पाराशर्यमुखात् समाकर्णितम् । यत् संग्रामेऽर्जुनेन त्रिपुरान्तकः संतोषितः । किम्बहुना । तेन शक्रपुरं गत्वा दिव्यास्त्रमण्डलं संप्राप्तम् । नजानेऽग्रे किं भविष्यतीति विचारयन् मे चित्तं शान्तिं नाऽधिगच्छति । तच्छ्रुत्वा संजयोऽब्रवीत् । राजन् ! गाण्डावनिर्गतभल्लैः कर्णमुख्यानां कौरवाणां शिरांसि वसुधातलेऽवश्यं पतिष्यंतीति स्पष्टमवगम्यते । महाराज ! हितवचो न शृण्वतां पादोत्सारितसंपदां च जनानां तापपरंपरा निधनावधयो हि भवंति । निशम्यैवं संजयवाक्यं धृतराष्ट्रः स्थले मीन इवानुशय विवशो बभूव । अस्मिन्नेवावसरे वने पार्थविरहाकुलं युधिष्ठिरं द्रष्टुं बृहदश्वो महामुनिः समागच्छत् । सोऽथ सानुजनृपसनामयं पृष्ट्वा प्राप्तासनः क्षिप्रं पार्थविरहितः सुप्तार्णव इव बभूव । एवमालोक्य च धर्मनंदनो निःश्वासैर्दुःखं प्रदर्शयन् प्रोवाच । भगवन् ! मत्समो भुवि विपन्निकेतनं राजा नास्ति न बभूव नचाग्रे भविष्यतीति प्रतीयते । निशम्यैवं भूपवचनं सस्मितं मुनिरुवाच । राजन् ! स्वच्छन्ददिव्यविभवमवाप्य विप्रकल्पतरुर्भ्रातृसमेतस्त्वम् सुरेन्द्रादपि विराजसे । पुरा निषधेषु वीरसेनसुतो नलो नाम राजर्षिरभूत् । किमन्यत् । तद्यशस्तुलनां मनुमान्धातृप्रमुखा अपि नरेश्वरा न लेभिरे । तस्मिन्नेवावसरे विदर्भेषु भीमनरेश्वरो बभूव । सोऽथपरिचर्यया महामुनिं दमनं परितोष्य तद्वरप्रभावाद् दम दान्त दम नांस्त्रीन्कुमारानेकां दमयंतींकन्यां च प्राप्तवान् । ततः सा शुक्लपक्षकलेव विवर्धमाना विवाहयोग्या बभूव । अथैकदा राजा नलः पुष्पधन्वनो लीलावल्लरीं ताम शृणोत् । साऽपि बाला रूपयौवनशालिनं तं शुश्राव । ततः कदाचित् मृगयारसिको नलो दिव्यभूमिसमायातं मनोरमराजहंसं ददर्श । सोऽथ युक्त्या गृहीतोविहगो मानुषगिरातमवदत् । राजन् ! मां मुंच । दमयन्तीसान्निधावहंत्वाम् कीर्तयामीति

निशम्य वचनं राजा तं मुमोच । अथासौ पक्षी तूर्णं मुक्ताहारझणज्झणा दिशः कुर्वन् विदर्भानगमत् । ततोऽसावन्तःपुरवाटिकां गत्वा दमयंत्यै नलस्य नयनानंदस्यंदिनीं रूपसंपदम् निवेदयामास । साऽथ सामुलोचना तं राजशशिनं ध्यायंती शशांकलेखेवाऽतिकृशा बभूव । अथैकदा धीमान् विदर्भपतिस्तां श्रुत्वा स्वयंवरे दूतैर्नरेश्वरानानिनाय । अत्रान्तरे राजसमाजं समालोक्य नारदस्त्वरितंगत्वा सर्ववृत्तान्तं देवराजाय न्यवेदयत् । ततः सहस्राक्षोऽपि दमयंतीस्वयंवरं विज्ञाय तदाशया लोकपालैः सह व्योम्ना प्रतस्थे । अथ व्रजन्तस्ते भुवि विदर्भनगरं यान्तं निषधाधिपतिन्नलं ददृशुः । ततः सर्वांगसुंदरं द्वितीयमन्मथमिव तं राजचन्द्रं समालोक्य स्वभावनिःस्पन्ददृशोऽपि निःस्पन्दमतयोऽभवन् । अथतेदेवा शुशुचुः । यदेषा राजपुत्री प्राप्तेऽस्मिन् ध्रुवं नान्यं वरिष्यतीति निश्चित्य च तमभ्युपेत्य प्रोचुः । राजन् ! त्वमस्मासु भक्तः । वयं च ते प्रीतिमन्तोऽग्न्यादयो देवा स्त्वामुपस्थिताः । सम्प्रति नः कार्यं कर्तुमर्हसि । तच्छ्रुत्वा विस्मितो नलः प्रणम्य तान् किंकरोमीत्यभ्यधात् । ततस्ते प्रोचुः । राजन् ! त्वमितो गत्वा वैदर्भकन्यकां ब्रूहि । यत् सुलोचने ! वयं लोकपालास् त्वदर्थमेव संप्राप्ताः । सुभगे ! त्वमस्मास्वेकंतमंभजस्वेतिवचः श्रुत्वा विषण्णो नैषधोऽब्रवीत् । महाभाग्याः ! यदाऽहमेकार्थाभिनिविष्टोऽस्मि । तदा प्रयोजनेऽस्मिन् कथं प्रविशामि । अस्वीकारे च मे प्रतिश्रुतं वृथा स्यात् । अपरं च प्रख्यातोऽहं कंचुकिस्त्रीगणवृतमंतःपुरं कथं प्रविशाम्यत्र कोऽप्युपायश्चिन्त्यताम् । तच्छ्रुत्वा शक्रोऽवदत् । राजन् ! माभैषीः । तत्रत्वमतर्कितो देवप्रसादत् प्रवेक्ष्यसि । ततो बाढ मित्युक्त्वा राजा विदर्भान् प्रययौ । सोऽथालक्षितः कन्यान्तः पुरं प्रविश्य दासीसहस्रमध्ये तां मृगेक्षणामपश्यत् । ततोऽसौतद्रूपसंपदा विस्मितो भूत्वा क्षणं धृतेरनीश्वरो बभूव । अत्रान्तरे सखीजनपरिवृता दमयंती स्मरशंकया तं प्रणनाम । ततस् तया स्वयमागमने हेतुं पृष्टःसोऽवदत् । महानुभावे ! नैषधोऽहं देवदूतः । शक्रपुरोगमा लोकपालास्त्वां प्राहुः । यद्वयं त्वदर्थमत्र समायातास्तेष्वेकतमेन सह रमस्वेति नलवचनं श्रुत्वा लज्जानतविलोचना राजतनया सस्मितमुवाद । राजन् ! त्वं मे चिरसंभृतं संकल्पं वृथा कर्तुं नार्हसि । यतो महात्मानः प्रणयिषु नह्यनादरा भवंति । अलमन्यया वार्तया । मयातु त्वदर्थमेव भूपाला एते सान्निपातिताः । अत्र जनस्यास्य जीवितं तु त्वमेवासि नाऽपरः कश्चित् । इयं सौभाग्य हेला किंवा विडम्बनकथाऽथवा मद्भाग्यपरीक्षा । यत् त्वमेवं भाषसे ? सोऽथ कटाक्षैः सस्मितवचनैश्च तस्या निश्चलं संकल्पं ज्ञात्वा सहर्षपुलकाकीर्णस् त्रिदशान्प्रति

प्रययौ । ततोऽसौ सत्यवादी तस्या आशयं तेभ्यो विनिवेद्य तदनुज्ञातः स्वयंवर सभाङ्गन प्रययौ । सोऽथ भूपभूषणभूषितां सभां प्रविश्य रविर्मेरुमिव दिव्यकांचनासनं भेजे ततस् तत्रत्या नृपाःसाकारमन्मथमिव तं नलमालोक्य राजसुतालाभे श्लथमनोरथा बभूवुः । अथ पुण्यश्लोके नले तत्र राजमध्ये विराजति कामवैजयन्तीव दमयंती समाविशत् ततो भुवनमोहिनी सा देवान् नमस्कृत्य प्रोवाच । यदि नलादन्यत्र मम संकल्पःपदं बध्नाति तर्हि सत्येनाऽनेन देवाः स्वां व्यंजनस्थितिं लभन्ताम् । पुरा मया श्रुतम् यद् देवा निर्निमेषा निःस्वेदाश् छायाविरहिता अपरिम्लानवसना अस्पृष्टभूमिकाश्च भवंति । नूनमेते तथाविधाः संतीति राजसुतयोक्ते स्वलक्षणजुषः सुराः प्रहृष्य नलाय प्रथमेन देवदर्शनं, द्वितीयेन दिव्यान्नरसविज्ञानं, तृतीयेन धर्मरुचिम्, चतुर्थेनाग्निप्रादुर्भावम् पंचमेन जलप्राप्तिम्, षष्ठेन धनागमम्, सप्तमेन वंशवृद्धिमष्टमेन च सद्गति मेवमष्टौवरान् दत्त्वा दिवं प्रययुः । ततो ह्रीमती दमयंती नलकण्ठे कटाक्षशवलामलिकुलसमाकुलां च मालां चिक्षेप । अथ नृपा दमयन्त्या वृतं पुण्यश्लोकं समालोक्य क्षणं क्षिति मैक्षन्त । ततो वैदर्भो यथागतं याते नृपतिमण्डले नलाय यथाविधि सरत्नाभरणां तां सानन्दं प्रादात् । सोऽथ नैषधो मनोरथगताभ्यस्तां तां सुंदरीमवाप्य सामंतनिचयैर्वृतः स्वराजधानीं ययौ । ततस्तत्र तया बालमृगीदृशा प्रवर्द्धितोत्सवो रतियुतो मन्मथ इव स विजहार । अत्रान्तरे द्वापरानुगतः कलिः स्वयंवरान् निवृत्तान् शक्रादिदेवान् दृष्ट्वाऽपृच्छत् । अपि विलो कितो युष्माभिर्दमयंतीस्वयम्वरः ? तच्छ्रुत्वा शक्रोवदत् । कले ! गृहंगच्छ । स्वयंवरे तया राजा नलोवृत्तः । निशम्यैवं शक्रवाक्यं कलिः कोपं कृत्वा प्रतीकारेच्छया नैषधं प्रायात् । तत्र मलिनाचारोऽसौ कदाचित् कौमुदीकांतकिरणोत्करहारिषु सौधेषु, कदाचित् सुभगा मोदासु रसालवनस्थलीषु, कदाचित् हंससंघट्टितोत्तुंगतरंगेषु सरस्सु वैदर्भ्या सह रम माणं नृपं दृष्ट्वापि नान्तरं लेभे । एवं तां नयनामृततरंगिणीं सेवमानः स नलो मुहूर्त वहेलया द्वादशसमा निनाय । अथैकदा कलिः संध्यायामधौतचरणाम्बुजं तं दृष्ट्वाऽन्तर मासाद्य सद्यः प्राविशत् । ततः स्वयं कलिः सशोकं पुष्करं गत्वा रहो जगाद । सखे ! त्वं नैषधाच् छ्रियमाहर । अहं वृषो भूत्वा पुरःस्थितस् ते सहायं करिष्ये । त्वं द्वापर विष्कृतैरक्षैर्मामेव पणं कल्पयेः । निशम्यैवं कलिवचो लुब्धपुष्करोऽनिवर्तिनं मानधनं नलं समाहूय कैतवेन तस्य सर्वसम्पदमपाहरत् ।

एवं द्यूतरससंसक्तं त्यक्ताखिलनृपक्रियं च नलमवलोक्य विषण्णहृदया दमयंती सचिवैः सह पुनः पुनः प्रत्यबोधयत् । सोऽपितदा हितवादिवचनानि न शुश्राव ।

यतश्चासन्नविपदामुपदेशाःशिरोरुजो भवंतीतिसत्यम् । ततः कालेन देविनस्तस्य शुष्यत्कोशस्य मंत्रिणः प्रकृतयश्च दुःखविह्वलाः शुशुचुः । अथ साश्रुमुखीदेवी सुत-मिंद्रसेनं सुतामिन्द्रसेनांच पितृनगरे प्राहिणोत् । सोऽथ वार्ष्णेयो नलसारथी रथेन दारकौ नीत्वा भीमराजाय न्यवेदयत् । अथ हारिताशेषराज्यो नलः पुष्करेण नगरेऽपि निषिद्धवासो भूषणानि परित्यज्य दमयन्तीसहायो विनिर्ययौ । ततोऽसौ निराहारः पथि व्रजन् वेगवाहिनोहेमरुचिरान् विहगान् ददर्श । ततो वंधकोविदोऽसौ विधिनादिष्टमे तद्भोजनमितिनिश्चित्य तान् जिहीर्षुर्निजवासः प्राहिणोत् । अथ खगास्तद्वस्त्रं हृत्वा तं मिथःप्रोचुः । क्षितिपते ! वयमक्षास्ते वासो न सहामहे । एवमुक्त्वा तेषु यातेषु दुःखविवशो नलो दिशःकलयन् विजने बल्लभां प्रोवाच । प्रिये ! क्षीणसंपदोमम वासोऽक्षैर्हृतं पश्य । सम्प्रत्यहं विचिन्त्यापि प्राणवृत्तिं न पश्यामि । तवेदं प्रम्लानाधर पल्लवं वदनांभोजं मम मानसं शुष्कतोयाशयच्छायं करोति । प्रियतमे ! जनवर्जितो ऽयंदेशो दिगन्तवर्त्मनां नाभिस्थानेऽस्ति । विरलपादपोऽसौ मार्गस्तु विदर्भनगरं याति । एष सरलःकोसलम् । रम्योऽयं पंथाश्चदक्षिणां दिशंगच्छतीत्यादि प्रदेशिन्या दिगंतरं दर्शयंतं तं विशालाक्षी शंकितेव प्रोवाच । नाथ ! किमनेन मार्गोपदेशेन ? श्रुत्वैतद् वचनं मम मनः शंकितं भवति । धैर्यधनाःसत्पुरुषा हृदयानुगं नहि त्यजंति । किम्बहुना । मनुष्याणां हितोपदेशेषु तथा प्रणयाश्वासनेषु संपत्सु विपत्सु च भार्यैव परममित्रं विद्यते । तदेहि । सांप्रतं विदर्भपतिपुरमेवावां गच्छावः । तत्र सोऽति प्रसन्नतयाऽऽत्मानंधन्यं मत्वा त्वां पूजयिष्यति । निशम्यैवं हरिणीदृशो वचनं गद् गद् गिरानलोऽवादीत् । प्रिये ! वृथा विशंकां मा कृथाः । सुव्रतचारिणीभार्या सर्वास्व वस्थासुमित्रमस्तीत्यत्रनास्तिकश्चित्संदेहावसरः । जीवन् कस्त्वां विमुंचति ? प्रिये ! पूर्वं प्रभुर्भूत्वाऽधुना निर्धनो मानम्लान करैरिव पौरैरंगुल्या दर्शितो विदर्भांस्तु न गच्छामि । यो विनष्टविभवः कृपालोलितकन्धरैर्जनैस्सोयमितिदूरान्निर्दिश्यते तं धिक् । इति मिथःशनकैर्ब्रुवाणौ शोकोत्तौ दंपती वस्त्रेणैकेनसंवीतौ निर्जनां भुवमवापतुः । ततस्तन्वंगी श्रान्ता सा निद्रामवाप । परं चिन्तास्तिमितोनलस्तु दिशोऽवलोकयंस्तस्थौ । ततोऽसावचिन्तयत् । यन्मदाश्रयेयंबालाऽवश्यं विनङ्क्ष्यति । यतो भाग्यहीनानुगो जनोऽपि नित्यमावासभाजनो भवति । मत्परित्यक्तेयं नूनं बान्धवाननुयास्यति । यतो मदनुयायिनीं शोच्यांदशामियं सोढुं न शक्ष्यतीति निश्चित्य कलिविमोहितो नलो दयितान्य स्तलोचनःक्षणं शुशोच । ततः कलिकृष्टस्ततप्रेम्णा च मुहु र्मुहुर्दोलाविलोलहृदयो

ऽसौ न कथंचिद् धीरतां सस्मार । अथ नैषधः सपदि शस्त्रेण वस्त्रार्धं छित्वा प्रियां परित्यज्य च सपदि लघुसंचार मगमत् । ततो विनिवर्त्य पुनः कान्तां विलोक्य च स्वात्मानमात्मना विनिन्दन् शुशोच । अहोनु मद्विहीनेयं प्रबुद्धा किं करिष्यति ? यत् कृते कुवलयेक्षणेयं मुहूर्तात् प्राणसंदेहमवाप्स्यतीतिविचिन्त्य दूरंगतोऽपि वातूल तूलतरलैः संकल्पैर्व्याकुलीकृतो ममतया पुनःसमाययौ । ततः कलिसमाविष्टे दूरतरं गते नले सहसा प्रबुद्धा सा सुलोचना तं कान्तं नाऽपश्यत् । अथाऽसौ चक्राधिरूढेव किंवा मकराकरमग्नेव किंचन न विवेद । ततः शनकैः संज्ञा मवाप्य स कथं प्राणेश्वरःप्रियतमां मां परित्यजेदिति क्षिप्रं निश्चयं नाऽध्यगच्छत् । साऽथ दिक्षु सास्रुलवा दृशो दत्वा आर्यपुत्र ! हा हतास्मीति क्रोशंती भुवि न्यपतत् । प्राणनाथ ! अन्यदुक्त्वा किमन्यत् कृतवानसि ? अहह ! मया विरहितस्त्वमेकाकी विजने कथं विचरिष्यसीत्यभिधाय संरंभात्सा समुत्थाय च तं विचेतुं समुद्ययौ । अत्रान्तरे स्फूर्जत् कालाग्निदुःसहोऽजगरस्तत्रागत्य सहसा तान्जग्राह । अस्मिन्नेवावसरे समायातः कश्चिल्लुब्धकः शरेण सर्पं निहत्य तां ररक्ष । ततोऽसौ कामार्तो भजमामिति गजगामिनीं तान्जगाद । निशम्यैवं व्याधवाक्यं पतिव्रता सा दीप्तशापाशिखिना सद्यस्तं निर्ददाह । ततः कमललोचनं नलं विलपंती सा बाला स्वदुःखमिवविस्तीर्णं विषमं वनं विवेश । अथ तत्र तां दृष्ट्वा पवनालोलशिरसांतरूणामपिशोकावेश इव बभूव । हानाथ ! क्वस्थितोऽसीति तस्या विलापं श्रुत्वा तत्प्रतिध्वानैर्दिशः क्रन्दन्त्य इव प्रत्यभुः । ततः प्रौढव्यसनमोहिता सा अपिदृष्टो नल इति गिरितरुगजसिंहहरिणान् पुनः पुनः पप्रच्छ । प्राणपते ! प्रणयकोपोऽयम् किंवाऽस्य जनस्य परीक्षा ? यदात्मानमवच्छाद्य मां नाऽभिभाषसे । इत्युक्त्वा वनगुहातरुकुंजसरित्तटेषु प्रियमीक्षितुं बभ्राम । अथैकदा सा पुण्यं तपोवनमवाप्य तत्र तेजोमूर्तीन् भृग्वत्रिपुरोगमान् महामुनीन्ददर्श । साऽथप्रणम्य यावत् स्वाभिप्रायं तेभ्यो निवेदयति । ततः पूर्वमेव ते त्रिकालज्ञाः पुत्रि ! गतकिल्विषं पतिं न चिरादवाप्स्यसीत्यभिधाय तिरोहिता अभूवन् । अथाऽन्तर्हिते मुनिगणे विस्मिता सा राजसुता विरलच्छायमरण्यं समवाप्य चेदिविषयं व्रजन्तं सार्थं ददर्श । ततः सा अपिदृष्टो नरपतिनलइति पृथगवादीत् । अथाकलितवृत्तान्तैस्तैः सार्थवृद्धैः समाश्वासिता सा किंचिद्धैर्यमवाप्यसहगन्तुमुद्यताऽभवत् । ततः क्षीणेऽन्हि स सार्थो वनान्तरं समासाद्य सरित्तटे मुक्तवाहनोऽतिष्ठत् । अथ सुप्तेषु सर्वेषु कश्चिद् गजयूथो जलवांछया तं देशं समभ्यायात् । ततस्तत्र स्वल्पावशेषं सार्थं कृत्वा गतेषुदंतिषु तीर्थनिवासिनां सा

प्राणि भयंकरो विपुलाक्रन्दोऽभवत् । साऽथ वियोगसंतप्ता विलोक्यदुर्घटनामेनां सद्यो मुमोह । प्रायो विधिशासनाद् विपत्स्वेव विपदो वर्तन्ते । ततः सा हतशेषैरेवद्विजैः सह चेदिविषय मवाप्य तत्र चेदिराजजननीपूजिता सैरन्ध्रीव नृपान्तःपुरेऽज्ञातचर्यया निवसंती विरहध्यानदीर्घीकृता निशा निनाय । महाजनः प्रच्छन्नोऽपि न कदाचिल्लाघव मभ्येतीति सत्येषा किंवदंती । अथ कलिविमोहितो विच्छिन्नवस्त्रार्धो नलो व्रजन् दुःखाग्नेरिव सादरं दावाग्निं पुरो ददर्श । ततो नैषध ! त्रायस्वेति महास्वनं श्रुत्वाऽग्रे गच्छन् दह्यमानं करिकराकारं नागराजमदर्शत् । अथ नागेन्द्रस्तमभ्यधात् । राजन् ! माम् स्कन्धे कृत्वा महानलात् संतारय । अहंकर्कोटिकोऽएडविग्रहो भूत्वा ते भारपीडां न करिष्यामि । त्वं पदानि गणयन् व्रज । कर्मणाऽनेन तव श्रेयो भविष्यतीति सत्यमव गच्छ । तच्छ्रुत्वा नलस्तमुद्धृतं स्कन्धे धृत्वा पदानि गणयन् ययौ । अथ दशमे पदे दशेत्युक्ते फणी सहसा तमदशत् । ततस्तेन दष्टमात्रे नलःखर्वो विकृताकृति श्चाऽभवत् । अथ विषण्णं तं नागोऽब्रवीत् । सखे ! वैरूप्यादस्माच्छुचं मा कृथाः । कंचित्कालं तवैषा रक्षा मया विहिता । येन शत्रुणा त्वं दुःखे पातितोऽसि । सोऽपि त्वद् देहस्थखलो मद्विषानलाक्रान्तिमवाप्य सुखं न स्थास्यति । अधुना त्वमयोध्यां गच्छ । तत्र बाहुक इति नाम धृत्वा सारथ्येन ऋतुपर्णनृपं सेवस्व । सोऽथ विद्याविनिमयात् तुरंगहृदयज्ञस्य तेऽक्षहृदयं दत्वा सख्यं विधास्यति । ततोऽर्धवाससा संवृतस्त्वं स्वंरूपं समवाप्स्यसीत्यभिधाय वस्त्रं च तस्मै दत्वा तिरोदधे । अथ नलोऽयोध्यां गत्वा तत्र ऋतुपर्णराजर्षिसकाशात् पूजामवाप्य सूदसारथ्यकर्मणा समयानिनीषुरभवत् । ततस्तत्र नृपादेशाद् वार्ष्णेयजीवलाख्यौसूदानुचरावपि विस्रंभभाजनमवाप । सोऽथ सदा दीर्घं निःश्वस्य ध्याननिश्चललोचनो व्याकुलाक्षरं कथयन्नासीत् । अहोनु ! पुण्यहीनेन मदोद्धतेन लक्ष्मीरिव सा हरिणेक्षणा हारिता । अथैकदा जीवलानुगो वार्ष्णेयो विलपन्तं ते किमेतदित्यपृच्छत् । स च पृष्टोऽभ्यभाषत । सखे ! केनापि दैवदग्धेन कापि मुग्धा वरांगना विपिनेऽसहाया त्यक्ता । तस्यैवैतत् परिदेवितम् । अत्रान्तरे विदर्भराजः पुष्करेण विवासितं नलं श्रुत्वा पुत्रीमन्वेष्टुं तत्रत्य द्विजान् समादिदेश । अथ सुदेवनामा विप्रः सकाननां महींभ्रान्त्वा चेदिराजगृहे प्रोषितव्रतसम्पन्नामेकवेणिकां वियोगाग्निसमुद्भूतधूममालांकितामिव पतिव्रतां दमयंतीमपश्यत् । ततो ब्राह्मणो ललाटतिललक्षणेन तां परिज्ञाय राजमात्रानुज्ञातां विदर्भानानयत् अथ नरेश्वरस्तथाभूतां तां सुतां दृष्ट्वा हाहेति विलपन् सास्रु मुमोह । ततो लब्धसंज्ञो

राजा दमयंतीं समाश्वास्य नलमन्वेष्टुं दिक्षु विप्रान् प्राहिणोत् । साऽथ सती तेषां व्रजतां द्विजानां संदेशं प्रादात् । महाशयाः ! भवद्भिरिदं सर्वेषु देशेषु गीयताम् ।

चातुर्येण प्रियाया वासश्छित्वा विहाय विपिने त्वम् ।
एकाकिनीं प्रसुप्तां प्राणेश्वर ! कुत्र यातोऽसि ॥

एवं भीमसुतादिष्टं पद्यं गायंतस्ते द्विजवराः प्रतिवाक्याशया सर्वां पृथ्वीं मनिशं बभ्रमुः । अथैकदा मनोजवः पर्णादोनाम द्विजोऽखिलां महीं भ्रान्त्वा प्रतिनिवृत्य च तामभाषत । देवि ! त्वद्गाथां निशम्य योऽस्माकं प्रतिवचो ददौ । तादृशः कश्चिन्नासादितः । केवलमेकएवायोध्यायामृतुपर्णभूपतिसारथिर्बाहुको नाम विरूपो ह्रस्वबाहुको दृष्टः । सोऽश्वज्ञाने कोविदो दिव्यान्नरसपरीक्षायां च निपुणोऽस्ति । गाथामाकर्ण्य सास्रुलोचनोऽसौमामूचे । भाविदुःखपराधीनस्य सहसा हारितात्मनश्चपत्यु रपराधप्रणयिनी प्रिया गणयितुं नार्हति । पतिव्रता विधिवंचितव्यसनमोहितेभ्यो न क्रुध्यन्तीत्यभिधाय ससूतोंऽघ्रिणा महीं लिखन् लज्जावनतमुखो बभूव । निशम्यैवं द्विजभाषितं संदेहान्दोलिताशया दमयंती मोहमुपागमत् । ततः संज्ञामवाप्य मात्रा समंत्र्य च मिथ्यादिष्टस्वयंवराऽऽयोध्यामृतुपर्णाय दूतं प्राहिणोत् । राजन् ! यदि त्वमेकेनाह्ना शतयोजनीं समायासि तदा तु मामवाप्स्यसीति तस्मै संदेशमभ्यधात् । पृथिव्यां नलादन्यो दूराध्वलंघने रथी कोऽपि नास्तीति निश्चित्य सा तमुपायं चक्रे । अथ ते दूता अयोध्यामवाप्य सकौतुकं नृपमूचे । राजन् ! दमयंतीस्वयंवरो न चिराद् भविता । तच्छ्रुत्वा राजा बाहुकमाहूय प्रोवाच । सारथे ! श्वो दमयंतीस्वयंवरो भविता । अपि शक्नोषि मामेकाह्नैव ताम्पुरीन्नेतुम् ? तद्वर्त्म हि ममागम्यमधुना भवानेव प्रमाणमिति समाकर्ण्य वज्राहत इव बाहुको बभूव । ततः सोऽचिन्तयत् । अहो तस्यास्तत्सतीव्रतं परिवृत्तम् । यथा देहिनां शरीराणि काले काले विपर्ययमायांति तथा चित्तचरित्राण्यपि परिवर्तन्ते । अथवा मद्दर्शनाशया तयाऽयमुपायो विहितः । ध्यात्वैवं हयहृदयविदसौ शक्नोमीति नृपतिमवादीत् । ततोऽसावायतासांन् तनुतीक्ष्णांश्च हयान् रथे योजयित्वा तत्र विस्मितनृपमारोप्य च प्राचोदयत् । अथाऽरुणप्रेरितसूर्याश्वा इव तेन प्रेषितास्ते तुरंगमाः सत्वरं समुत्पेतुः । अत्रान्तरे नृपोत्तरीयं परिभ्रष्टम् । सहसा जिघृक्षतोऽर्युत क्रान्तयोजनस्य च तस्य तद् दृष्टिगोचरे नाऽभूत् । एवमालोक्य विपुलकौतुको नृपो व्यचिन्तयत् । अहो ! कोऽप्ययं प्रच्छन्नो देवः शालिहोत्रो वाऽनूरुः किं वा मातलिरथवा नलः एव समायातः । इति सुचिरं विचिन्त्य बाहुकमब्रवीत् । भद्र ! इयममानुषी ते विद्या कस्य विस्मयकारिणी न ? अक्षहृदयज्ञस्य ममाऽपि परां प्रतिभां पश्य । दृशैवाऽहं

तरोः पत्रपुष्पफलानि जानामीत्युक्त्वाऽग्रेस्थितविभीतके दूराद् गणयित्वा बाहुकस्य यथोक्तं पत्रसंचयं प्रादर्शयत् । ततो बाहुको हयविद्ययाऽक्षहृदयमृतुपर्णात् प्राप । अथ तयोः शाश्वते सख्ये संजाते बाहुकविग्रहात् कर्केटकविषज्वालामूर्छितः कलिर्निर्ययौ । ततोऽसौ कोपाकुलितो नलः प्रत्यक्षविग्रहं दृष्ट्वा स्थगितस्यंदन स्तं क्षपाम् शप्तुमैच्छत् । अत्रान्तरे कृतांजलिः कलिस्तमुवाच । राजन् ! दमयंत्यैव शप्तोऽहं सीदामि त्वं तु शापं संहर । किंबहुना । सोऽहं तच्छापविवशस्त्वयि कर्कोटकतीव्र विषाग्निना दह्यमानो नित्यं दुःखमवसम् । अद्यप्रभृति लोकेऽस्मिन् भवत्कीर्तिकथाविदाम् मत्कृतमशुभं मा भवतु । राजन् ! यथा त्वं पुण्यश्लोको जात स्तथा तव कथावाचकोऽपि पुण्यश्लोको भूयात् । देव ! वृथा कोपं मा मा कृथाः । निशम्यैवं कलिदीनवचनं राजा तं नाशपत् । यतः सज्जना अधमेन सह वैरमपि नेच्छंति । ततो भीतः कलिर्विभीतक माविवेश । येनाऽसौ पादपोऽमंगलप्रदोऽभवत् । अथ कलिमुक्तोबाहुकः क्षणात् प्रसन्न हृदयो भूत्वा ऋतुपर्णवचसा पुनरश्वानचोदयत् । ततः सहसा नरेश्वरे विदर्भान् संप्राप्ते रथनिर्घोषं श्रुत्वा भीमोनलमशंकत । ऋतुपर्णोऽथनृपेण प्राघूर्णिकधिया पूजिते लज्जामवाप्य स्वयंवरकथां नाऽपृच्छत् । ततो दमयंती तत्सूतमीक्षितुं केशिनीं नाम दूतीं समादिश्य बाहुकदिदृक्षया सौधमारुरोह । अथ केशिनी बहुशो बाहुकमुपसृत्य तदाकारेङ्गितचेष्टाभि स्तं परिचित्य प्रतिनिवृत्य च तां प्रोवाच । देवि ! मयासकृद्वाहुको लक्षितः । किमन्यन्नल एवैषः परं रूपे संशयोऽस्ति । मयाऽस्य सलिलानलपुष्पाणामिच्छामात्रेण सान्निधिः संकटेऽप्रतिहतगतिश्च दृष्टा । त्वत्कथावादिनीं मां वाष्पपूर्णेक्षणः प्रणय वाक्यानि ब्रुवन् पुनः पुनः परिचयं पृच्छति । सोऽथ कुमारमिंद्रसेनं तथेन्द्रसेनां दारिकां च दृष्ट्वा दीर्घमुष्णंच निःश्वस्य परिष्वक्तुमिव समुद्यतोऽभवत् । एतदाकर्ण्य ससंशया दमयंती पित्रोरनुज्ञामाधिगम्य स्वयं बाहुकं द्रष्टुं प्रययौ । साऽथैकवेणी विरहापाण्डुक पोलपतितालका च वाष्पाकुलं तमेत्य प्राह । अपि त्वया कश्चित्प्रियोदृष्टः ? यो विपिनेऽनागसं भार्यां सुप्तां च परित्यज्य यातः । तच्छ्रुत्वा सास्रुनयनः सोऽब्रवीत् । महाशये ! कलिमोहितं माम् विना कोऽन्यो दुर्जनस्तादृशो लोके लभ्यते । तदा यत्किमपि जातं तत्सर्वं कलिना कृतम् । सोऽधुना त्वच्छापशोषितो धृतिजुषो मे प्रणष्टः । साम्प्रतं मे सहजं वपुः पश्येत्युक्त्वा यावन्नववस्त्रेण स्वविग्रहं समाच्छादयति तावदेव नलः पूर्वरूपं समासाद्य स्मरसुन्दरो बिबभौ । साऽथ नवचन्द्रमिवसमुद्यतं तं विलोक्य मिथः परिष्वज्य च तौ दम्पती ननंदतुः । ततो दमयंती न मे प्राणाः प्रयाता इति

विचिन्त्य ललज्जे । अथ नैषधस्तामानतमुखीं दृष्ट्वाऽतिमधुरवाक्यैः सान्त्वयन् प्रोवाच । देवि ! गतन्नशोचनीयम् । अत्रान्तरे नलः व्योम्नो लोकसाक्षिणो वायोर्देव्या दमयंत्याः सतीव्रतं जगत्त्रये पूज्यमिति शुभवचनं शुश्राव । ततो नैषधं प्रसाद्य याते ऋतुपर्णे विदर्भाणां प्रमदोत्सवो बभूव । ततो भीमपूजितो नलश्चतुरंगिनीं सेनां नीत्वा स्वनगरं जगाम । ततोऽक्षविद् द्यूते पुष्करं विजित्य स्वराज्यं पुनरासादयामास । अथ कृपानिधिर्नलो विभ्रष्टविभवं पुष्करं पुनरपि विभागप्रदानेन परितोष्य निष्कण्टकं राज्यमकरोत् । कौंतेय ! एवमुन्नतात्मनामेव दैवविप्रिया जायंते । महात्मानः संपत्स्वनुत्सिक्ता विपत्सु धैर्यसाराः कार्येषु चाऽविमूढास्तिष्ठंति । राजन् ! तदक्षहृदयं मत्सकाशात् त्वमपि गृहाणेत्यभिधाय तत् प्रदाय च तीर्थार्थी मुनिः सत्वरमयासीत् ।

अथ बृहदश्वे गते पाण्डवा धनंजयं स्मरन्तो धृतिं न लेभिरे । अत्रान्तरे स्वयं भगवान्नारदस्तत्रागत्य तेभ्यस्सत्कारमवाप्य च पाण्डुपुत्रान्नानोपदेशैः सान्त्वयामास । ततोऽसौ युधिष्ठिरेण सर्वतीर्थफलं पृष्टः पुलस्त्यभीष्मयोः संवादं वर्णयितुमारब्धवान् । राजन् ! सत्यव्रताः परोपकारिणः शांताः सत्वशुद्धाश्च जनास्तीर्थेषु फलभागिनो भवंति । अकृतव्रतैरस्पृष्टतीर्थसलिलैश्च पुरुषैः पुण्यपणप्राप्याः श्रियो नोपलभ्यंते । बहुधा द्रविणाडम्बरान् पापमयाँश्च क्रतून् विज्ञाय को धीमान् सर्वयज्ञफलं तीर्थं नोपसेवते ? तत्रादौ साक्षाद् भगवता पुष्करजन्मना समभीष्टंपुष्करंस्मरतामपि पापानि यदा ध्वंसं यान्ति तदा दर्शनस्नानादि कर्तॄणां तु का कथा ? अयोध्याऽध्यात्मज्ञानदा । मथुरा मुक्तिदा । माया माहात्म्यदा । कांची कांचनदा । वाराणसी विद्यादात्री । अवंतिकाऽभयदा । द्वारावती-दुःखनाशिका जम्बुमार्गे तण्डुलिकाश्रमः पुण्यफलदः । आगस्त्यंसरोऽशुभनिवारणम् । धर्मारण्यम् धनवर्द्धनम् । ययातिपतनक्षेत्रं यज्ञफलदम् । महाकालक्षेत्रम् मोहनाशनम् । कोटितीर्थं कुमतिहरणम् । भद्रवटं सरोऽभयप्रदम् । नर्मदा नेत्ररोगहारिणी । सिन्धुर्बन्धुदा । चर्मण्वती चर्मरोगनाशिनी । अर्बुदोऽखिलसुखदः । वसिष्ठाश्रमो विभूतिदः । कपिलातीर्थं कालिमलापहम् । प्रभासः प्रभुताप्रदः । दुर्वाससःक्षेत्रंदुर्मतिभंजनम् । पिण्डारकतीर्थं पिण्डसुखदम् । वसोर्धारा वसुवर्षिणी । दमि द्राविणदम् । सरस्वतीसंगमः सर्वसुखदः । ब्रह्मतुंगं श्रमनिवारणम् । कौमारं क्रोधनाशनम् । रेणुकं ऋणनिवारणम् । पंचनदं प्रीतिवर्धनम् । भीमाश्रमतीर्थं भयविध्वंसनम् । श्रीकुण्डं श्रीधाम । विमलं व्यसनापहम् । वडवाक्षेत्रं वटुकदम् । कामाख्यं कामिनीप्रदम् । रुद्रतीर्थं रूपदम् । वस्त्रापदं विभवदम् । मणिमान् मोदप्रदः । देवीक्षेत्रं दीप्तिदम् । दीर्घसत्रं दीर्घायुःप्रदम् । स्कान्दं

स्यन्दनदम् । मुनिकोटी मुक्तिदा । कुरुक्षेत्रं कुगति निवारणम् । वैष्णवं विश्रामप्रदम् । शालूकिनी शांतिदा । दशाश्वमेधं दुर्दशानिवारणम् । भौजंगं भ्रांतिभंजनम् । अपरंच

वाराहं विरहभंजनम् । आश्विनमश्वप्रदम् । सोमतीर्थं सुखदम् । पुण्डरीकं पुण्यदम् । सारसं सत्वदम् । मुंजवटं मुक्तिदम् । रामह्रदो रमाप्रदः । वंशमूलकं वंशविवर्धनम् । कायशोधनम् कान्तिप्रदम् । लोकोद्धारः कीर्तिप्रदं । श्रीतीर्थम् श्रेयस्करम् । सौरं सुखकरम् । गोभवनम् गोप्रदम् । ब्रह्मावर्त्तं ब्राह्मसुखदम् । मातृतीर्थं मानवर्द्धनम् । केदारं कलिनाशनम् । इलास्पदं इच्छापूर्तिकरम् । वैतरणी पापहारिणी । मिश्रकं मतिप्रदम् । व्यासस्थली व्यसननाशिनी । दृषद्वती दारिद्र्यदारिणी । कौशिकी कुमतिनाशिनी । मृगधूमं मानवर्द्धनम् । विष्णुप्रदं विभवदम् । कुब्जं कुशलदम् । सारस्वतं स्मृतिदम् । कन्यातीर्थंकान्तिदम् । ब्रह्मतीर्थं ब्राह्मतेजो विवर्द्धनम् । मांकणकम् मानप्रदम् । दाधीचं दानशक्तिदम् । शौक्रं शौक्ल्यप्रदम् । कपालमोचनं कलहनाशनम् । अग्नितीर्थमारोग्यदम् । पृथूदकं पृथ्वीप्रदम् । पृथुफलं मोक्षदम् । वारुणं वयोवर्द्धनम् । स्वर्गद्वारं स्वर्गदम् । स्वस्तिपुरं सुखकरम् । गंगासागर संगमो मुक्तिप्रदः । बदरीपाचनं विभूतिदम् । नैमिषंनैर्मल्यप्रदम् । धर्मतीर्थं धर्मवर्द्धनम् । पावनं पुण्यप्रदम् । प्लक्ष प्रस्रवणं प्रभुभक्तिप्रदम् । शाकंभरीक्षेत्रम् शांतिसुखदं । गंगाद्वारं गतिदम् । सप्तगंगं सुखदम् । चक्रावर्तं चमत्कारप्रदम् । कनखलं कनकदम् । वैतसिकं विद्याप्रदम् । त्रिनयनं त्रितापहरम् । गृध्रवटं गतिप्रदम् । मणिनागं विषहरम् । अहल्याक्षेत्रम् अखिलदोषहरम् । जनककूपो जन्मफलदः । गण्डकी गतिदायिनी । विशल्या विभवदा । सालिग्रामक्षेत्रं सुमतिदम् । वटेश्वरो विभवदः । निगूढं नीतिप्रदम् । देवकूटो द्युतिप्रदः । वीराश्रमो विजयदः । वन्हिधारो विभवदः । गौरीशिखरं गुरुताप्रदम् । अरुणा कौशिका-संगोऽन्नवस्त्रप्रदायकम् । उर्वशीसर उन्नतिदायकम् । कुंभकर्णाश्रमः कुमातिनिवारकः । नंदाऽऽनंददा । ऋषभद्वीपमार्षतेजोविवर्द्धनम् । औद्दालकम् उपद्रवनाशनम् । चंपारण्यं चमत्कारपूर्णम् । करतोया कष्टनिवारिणी । शोणसंगमः शौर्यप्रदः । वंशगुल्मो बाध निवारकः । कोसलः कार्पण्यनाशकः । कालातीर्थं कल्मषनाशनम् । वदरीवनम् वैराग्यदम् । रामतीर्थं रमाप्रदम् । केदारं कल्मषापहम् । देवह्रदो द्युतिदाता । ऋषभपर्वतो ऋणाऽपहारी । कावेरी कविशक्तिदा । गोकर्णं गोप्रदं । गायत्रीतीर्थं गतिदायकम् । वेणा विभवदा । गोदावरी गोवंशवर्द्धिनी । वरदा वरदायिनी । दण्डकंदान्तिकम् । शरभंगाश्रमः शान्तिसुखदः शीर्षनखं सुखकरम् । सप्तगोदावरम् सुखकरम् कालिंजरोगिरिः कलिमलापहः । मंदाकिनी मंदभाग्यनाशिनी । चित्रकूटश्चिन्तापहारी । श्रृंगवेरं सुगतिदम् । प्रयागः प्रकर्ष

प्रदाता । प्रतिष्ठानम् प्रतिष्ठाप्रदम् । भोगवती भोगदात्री । हंसप्रपतनम् हिंसानिवारणम् । सिद्धिक्षेत्रं सिद्धिप्रदम् । राजन् ! संक्षेपेणैतानि तीर्थानिसंति । नाम संकीर्तनमप्येतेषां दुःखदारिद्र्यभंजनं विहितम् । राजन् ! यज्ञजपदानधर्मादिभिर्यत्फलं भवति । तत्फलं तीर्थ सेवीजनो लभते । किं बहुना । तीर्थसेवनात्प्राणी लोके सर्वसुखान्यवाप्य देहान्ते ब्रह्मरुद्रेन्द्र विष्णुलोकानुपैतीत्यभिधाय पुलस्त्योक्तं तीर्थयात्राप्रकरणं महामुनिः प्रोवाच । महाराज ! दिनेष्वेतेषु भवानपि तीर्थयात्रां करोत्विति समादिश्य तिरोदधे । निशम्यैवमधिकश्रद्धावान् राजा धौम्यं तीर्थादिगनुक्रमं पप्रच्छ । तच्छ्रुत्वा धौम्योऽब्रवीत् । राजन् ! प्राच्या मुदयगिरिर्नैमिषारण्यं गोमती कौशिकी फल्गु प्रभृतयो नद्यश्च पुण्य फलदाः कथ्यंते । दक्षिणस्यां दिशि महेन्द्रपर्वतः कृष्णा कावेरी गोदावरी पुरस्सराः सरितो माठरं च वनं पुण्य क्षेत्रं विहितम् । पश्चिमेऽस्ताचलोभूभृत् सिन्ध्वाद्यास्तरंगिण्यः प्रभासक्षेत्रं च भुक्ति मुक्तिफलप्रदं भाष्यते । अथोदीच्यां पुण्यतोया सरस्वती नदी वदरिकारण्यं नगाधिराजश्च हिमालयः सर्वतीर्थेषु प्रथम इति कथयित्वा धौम्यो विरराम । अत्रान्तरे मार्तण्डोपमस्तेजस्वी लोमशमुनिस्तत्र समाययौ । राजाऽथ तं प्रणम्य पूजयित्वा च शुभागमनकारणं पप्रच्छ । ततः पृष्टकुशलः सोऽब्रवीत् । महीपाल ! महीं भ्रान्त्वाऽहं त्रिदशमंदिरमगाम् । तत्र शतक्रतोरासनार्धे तवभ्राता सव्यसाची दृष्टः । ततस्तद् दर्शनोद्भूतविस्मयं माम् दृष्ट्वा पाकशासनस्तव भ्रातुः कौशल्यं वक्तुं समादिदेश । राजन् ! प्राप्तास्त्रोऽसौ देव कार्यं कृत्वा न चिरात् त्वामुपेष्यतीति सत्यमवगच्छ । राजन् ! महाभागेन तेन नियुद्धे देवदेवं पिनाकिनं तोषयित्वा घोरं पाशुपतास्त्रं संप्राप्तम् । सम्प्रति या ते हृदि कर्णादि शौर्ये शंका वर्तते । तां परित्यज । धनंजयो मया गुप्तो विजयी भविष्यति । निशम्यैवं लोमशमुखान्महेन्द्रसंदेशं कौंतेयोऽब्रवीत् । महामुने ! तवेयं सुधाविस्यंदिनी वाणी नो मानसं हर्षवीची विलासांकं विदधाति । त्वत्प्रसादादहमद्य संपद्भाजनं जातः । किं बहुना । साक्षात्पुरंदरोऽपि यस्याऽभिमुखो भूत्वा विजयलक्ष्मीं दातुं समुद्यतः । भगवन् ! भवन्मुखारविन्दात् तीर्थमहिमानं समाकर्ण्याऽहमपि तीर्थदर्शनमभिलषामि । तत्र त्वं प्रसादं कर्तुमर्हसीति नृपवचनं श्रुत्वा तथाऽस्त्विति मुनिःप्रत्यवदत् । ततः पुण्याहे मुनिचक्रं पुरस्कृत्य सानुजो राजा प्रतस्थे । तत्रादौ नैमिषारण्यवर्तिनि मिश्रक तीर्थे स्नात्वा राजा शमठमुनिशासनाद् ब्राह्मणेभ्यो धनरत्नादीनि दत्वा तेभ्यो जयाशीर्वादाञ्जग्राह । अथाऽन्येद्यूराजामहामुनिंमहर्षिदधीचिचरित्रं पप्रच्छ । तच्छ्रुत्वा मुनिः प्रोवाच । राजन् ! पुराऽत्र दधीचिरिति विख्यातो दानशूरो महामुनिरभूत् । यथा वशिष्ठ-

ह्यारुन्धती तथैवास्य पतिपरायणा वेदवती नाम भार्या बभूव । अथाऽसौ तया सह वनमधिवसन् दीर्घं तपस्तेपे । अथैकदा शक्रपुरस्सरा देवगणा दैत्यान् विनिर्जित्य स्वास्त्ररक्षार्थं दधीचाश्रमं प्रापुः । ततो मुनिं नमस्कृत्य प्रोचुः । महाभाग ! सिद्धं नः समीहितं भगवत्प्रसादात् । परमस्त्ररक्षार्थं वांछामो निरापदं स्थानम् यद्यनुजानाति भवाँस्त-दातु स्वास्त्राणि निक्षेपरूपेणात्र धृत्वा स्वसदनं गच्छामः । पुनः सम्प्राप्तेऽवसरे ग्रहीष्यामः । किम्बहुना । दिनेष्वेतेषु भवद्विधो याचकाशापारपूरकोऽन्यो धरातलेनास्तीत्यभिधाय विरेमुः । निशम्यैवं सुरवचनं निस्संकोचं महर्षिस्तां प्रार्थनामंगीचकार । अथैकदा विदितवृत्तान्ता दितिजा मुनिवरं पीडयितुं तत्राऽकस्मादुपस्थिता अभूवन् । एवमालोक्य मुनिः स्वतपो-बलेन तान् पराजित्य ब्राह्मं तेजः प्रदर्शयामास । अथ देवानामौदासीन्यं दैत्यानां च पुनः पुनराक्रमणं दृष्ट्वा मुनिर्भार्यामपृच्छत् । देवि ! किमत्र करणीयम् ? तच्छ्रुत्वा साऽब्रवीत् । प्राणनाथ ! स्वार्थपरोलोकः परसंकटं न वेत्ति । निशम्यैवं प्रियावचनं मुनिराह । सत्य-मभिहितं त्वया । परंलोकेऽस्मिन् परोपकारसदृशं पुण्यं परापकारसदृशं च पापंनास्तीत्यभिधाय पूर्वंतु जलैस्तानि प्रक्षाल्य ततो जलमयानि च तानि कृत्वा देवहितार्थमाचचाम । अथ पुनरुपस्थिते युद्धे देवा दधीचिमुपसृत्यप्रोचुः । मुनिराज ! वृत्रासुरेण सह युद्धकालोऽयं समुपस्थितः । कृपयाऽस्त्राणि नः प्रयच्छ । एतदाकर्ण्य मुनिः आह । महानुभावाः ! गतेषु भवत्सु यद्यपि निरंतरमागत्य राक्षसा मामपीडयन् । तथाऽपि नाऽहं तेभ्यो विभीषिकया दत्तवान् । प्रत्युत तानि जलमयानि कृत्वाऽपिवम् । सम्प्रति तानि मदीयेऽस्मिन् देहेऽस्थिषु प्रविष्टानि । तच्छ्रुत्वा देवा हा हता वयमिति भाषमाणा निश्चेष्टा बभूवुः । ततोऽसौ करुणाकुलो मुनिरवदत् । देवाः ! त्यजत चिन्ताम । राक्षसवधार्थं यद्युज्यते तद्याचत । निशम्यैवं देवाः प्रोचुर्भगवन् ! यद्येवं तर्हि तु कृपयाऽस्थीनि देहि । ततो मुनिराह । विबुधाः ! शरीरं तु नश्वरम् । कस्मिंश्चिद्दिनेऽवश्यं गन्ता । तदधुनैव देवकार्ये समर्प्य कथं न मुनिव्रतं पालयामीत्यभिधाय बद्धपद्मासनः समाधिना तनुं तत्याज । एवमालोक्य देवा महर्षिदानशौण्डत्वं पुनः पुनः प्रशंसन्तः पुष्पाणि ववर्षुः । ततस्तदस्थिभिर्वज्रं निर्माय रणे वृत्रासुरं जघ्नुः । अत्रान्तरे गभस्तिनी नद्याः प्रतिनिवृत्य भर्तारमनावलोक्य हा प्राणनाथ ! क्व मामेकाकिनीमसहायां च विहाय देवलोकं प्रस्थितोऽसीति विलपन्ती मूर्छिताऽभवत् । ततस्तत्रत्यमुनिगणैराश्वासिता संज्ञामवाप्याऽतिखेदात् सद्योजातं पुत्रं पिप्पलकोटरे धृत्वा ततो चितां रचयित्वा च तत्रोपाऽविशत् । ज्वालमालाकुलोऽग्निदेवस्त-च्छरीरं क्षणाद्ददाह । अथ तपोवनस्था मुनयस्तं बालकं नीत्वा ररक्षुः । सएवाऽयं

अग्रे गत्वा निगमागमपारगो मंत्रद्रष्टा पिप्पलाद इति प्रसिद्धो मुनिराजो ※ बभूव ।

अथ प्रभाते राजा लोमशमुनिमगस्त्यचरितं पप्रच्छ । निशम्यैवं मुनिराजोऽब्रवीत् । राजन् ! पुरा मणिमत्यामिल्वलवातापी दैत्यौ बभूवतुः । तयो रिल्वलो मायावी कपटान्मेषरूपिणं भ्रातरं हत्वा सततं द्विजानभोजयत् । तत एहीति तेनैवाहूतो भुक्तवतां तेषां विप्राणामुदरं भित्वा वातापि र्विनिर्ययौ । एवं दैत्यगेहे द्विजक्षये वर्त्तमाने दैवगत्या समायातः कूपाऽपि लंबमानान् स्वान् पितॄनवलोकयामासागस्त्यः । ततोऽसौ विस्मितस्तान् पतनकारणमप्राक्षीत् । तच्छ्रुत्वा ते तवैव वयं पितर इत्यब्रुवन् । वत्स ! त्वद्ब्रह्मचर्याच्छिन्नवंशत्वमवाप्य दशामिमां गताः स्मः । किम्बहुना । त्वमधुनाऽपत्यमुत्पाद्य भवान्नो रक्षतु मर्हसी त्यभिधाय विरेमुः । एवमाकर्ण्य बाढ मिति मुनिः प्रोवाच । ततोऽसौ तपसा ध्यात्वा विदर्भराजसुतां रूपयौवनभूषितां लोपामुद्रां स्वयोग्याममन्यत । अथैकदा मुनिर्विदर्भाधिपमभ्येत्य तत्कन्यारत्नमयाचत । निशम्यैवं मुनिवचनं राजा सहसा विषण्णवदनो बभूव । परं मुनिशाप

※ अत्रैषाख्यायिका ।

अथर्वणस्तुशांतायां कन्यापुत्रौ बभूवतुः ।
कन्यादधिमथीदेवी पुत्रो दध्यङ् ऋषीश्वरः ॥

पुरा मरुस्थले यत्र मान्धाता बृहद्यज्ञं व्यधात्तत्रैव श्रीदधिमथीचरणपादुका प्रतिष्ठापिताऽस्ति । तद्दधिमतीक्षेत्रं पुष्करादष्टयोजने वैश्रवणदिशिवर्त्तते । अद्यश्वः प्रदेशोऽसौ नागोरमूंडवाख्यनगरयोः पार्श्वे वर्तते । श्रीमद्दधीचवंशजानामेषैवकुलदेवी । कालक्रमाद्दधिमथी माता दधिमातासंजाता । दधिमातृभक्ता दधिमा दहिमा दाहिमा वा संजाताः ।

भारतवर्षे दधीचिमुनेश्चत्वारिस्मृतिचिन्हानि प्राप्यन्ते । तेष्वेकतमं नैमिषारण्ये मिश्रकतीर्थम् । यत्र श्रीदधीचिमुनिर्निर्वाणं लेभे । तत्तीर्थतटे श्रीमद्दधीचिमुनेर्विशालमन्दिरं वर्त्तते । द्वितीयं मरुस्थले दधिमथीक्षेत्रे । तृतीयं ब्रह्मपुस्करे । सावित्रीपर्वतोपत्यकायाम् पुष्करराजस्य पश्चिमतटे । उक्तं च पुष्कराष्टके । अगस्त्यभार्गवौदधीचिनारदौशुकादयः ।

अत्र डीडवाणियां त्रिपाठीत्युपाख्य स्वर्गवासि राजगुरु कन्हैयालालात्मज पंडित बदरीलालाशयमवलम्ब्य तत्पुत्रशिवदत्तरामदत्ताभ्यां निधिवसुग्रहचन्द्रमितस्य वैक्रमाब्दस्य वसन्तपंचम्यां चरणपादुका प्रतिष्ठापिता । चतुर्थस्थानं गुर्जरदेशेऽहमदावादनगरे सागरमतीतटे यत्र भुवनविश्रुतस्य गांधीतिपदवाच्यस्य मोहनदासस्याश्रमोऽस्ति । तत्र मनोहरः शिवालयो विराजते । लोकाः शिवरात्रौ तत्र जागरणादिकं कुर्वंति ।

भयान्नैकोत्तरमभ्युवाद । अथ लोपामुद्रा पितरमुपसृत्य प्रोवाच । तात ! मा कुरु चिन्ताम् । त्वम् मामस्मै देहि । यतो लोके ब्रह्मकोपो दुःस्सहो भणित इत्युक्तवाक्यां तनयां यथाविधि राजाऽगस्त्याय प्रादात् । एवम्मुनिर्मानसचंद्रिकां तां लोपामुद्रां समवाप्य तयैव सह पुण्यधाम तपोवनं प्रायात् । ततः सा तदाज्ञया भूषणानि समुत्सृज्य चन्द्रलेखाविङ्गं संध्याभ्र मिव वल्कलं जग्राह । साऽथ धर्मचर्यया पति माराधयंती बहुतिथं समयं यापयामास । अथैकदा प्रत्यग्रस्नानसुभगा संगमार्थं मुनिना प्रार्थिता सा लज्जयाननं नम्रं विधाय प्रोवाच । स्वामिन् ! सौधे रत्नाभरण भूषिताऽहं महार्हशयनस्थं त्वामुपेतुमिच्छामि । पर्णशालेयं मम मनो नहि प्रीणाति । भगवन् ! मातपितृगेहे विभवं स्वयं दृष्टवानसि । सम्प्रति तपसा सर्वं राजयोग्यं विभवं कर्तुमर्हसीत्यभिधाय तूष्णीमतिष्ठत् । एवं तया मृगशावाक्ष्या ऽभिहितोमुनि र्निःस्पृहोऽपि धनाशया श्रुतविप्रमुखान् नृपाँस् तूर्णं मयासीत् । ततः करुणानिधिर्मुनिस्तेषां नृपाणामायव्ययौ समौ निशम्य नृपगणसमेतो महाधनं दैत्यराजमिल्वलं प्रायात् । ततोऽसौ तेन याचितो महाऽसुरः सर्वान् हन्तुकामो ऽनुजं रहो हत्वा भोजनं विदधे । ततो भोजने शंकितान् नृपानवलोक्य सास्मितो मुनिः सम्यग् भुक्त्वाऽपि निर्विकाराननस्तस्थौ । अथ दानवेन तूर्णमेहीति समाहूते दैत्ये प्रहसन्नगस्त्यः पवनोद्गारं मुमोच । ततोऽसौ जीर्णवातापिर्मुनि र्भयातुरदैत्येन वितीर्णं विपुलं वसु समादाय स्यन्दनेन स्वाश्रमं ययौ । सोऽथ दिव्याम्बरवतीं रत्नाभरणभूषितां च तां प्रियां राजार्हशयनेऽभजत् । ततो लोपामुद्रा तस्मात्तपोनिधेर्गर्भमवाप्य सप्त वत्सरैस्तपोधनं पुत्रं प्रासूत । सोऽथ दृढस्युर्नाममुनिर्बालएव सर्वज्ञतामवाप । अत्रान्तरे कालेया नाम दानवा वृत्रसाहाय्यमवाप्य लोकानपीडयन् । ततो दानव निर्जितः शक्रो विरंचिवचसा दधीचेरस्थिसंचयैस्त्वष्टृकृतमहावज्र मवाप । ततो मातलिप्रेरितरथमारुह्य पुरंदरो वृत्रं हत्वा कालेयान् समुपाद्रवत् । ततस्ते भीता मकरालयं प्रविश्य प्रतिनिशं मुनिमण्डलं निजघ्नुः । अथ देवास्तैस्तैस्तपोवननिवासिष्वनिशं भक्ष्यमाणेषु हिरण्याक्षहरं हरिं शरणमाजग्मुः । ततोऽसौ भगवान् समुद्रमग्नान् महासुरान् विज्ञाय समुद्रशोषणे श्रमः क्रियतामित्यादिदेश । ततस्ते विष्णुनिर्दिष्टा देवा अगस्त्यमेव तत् कर्मणि समर्थं मत्वा तमभ्युपेत्य प्राचुः । महामुने ! त्वमेव नो गतिः । पुरा त्वयैव दर्पान्धो नहुषः स्वर्गात् पातितः । अपरं च मेरुजिगीषया समुत्थितो विन्ध्यगिरि रेष रवि मामेव प्रदक्षिणां करोत्विति निश्चित्य निरुद्धनिखिलालोको मार्गं देहीऽतिवादिना दक्षिणा

माशां व्रजता त्वयैव भूमिसमः कृतः। कृपासिन्धो ! स त्वमद्य दानवसंश्रयं समुद्रं पातुमर्हसीत्यर्थितः सुरगणैर्महामुनिर्महोदधिं समभ्येत्य कल्लोलमालिनं सागरं स्वशक्त्या समाचचाम। एवं मुनिना पीते सागरे बलशालिनः कालेयास् त्रिदशैर्हताः। ततः सुविततते काले देवा रिक्तसमुद्रस्य संपूरणोपायं समाचिन्तयन्। अत्रान्तरे सगरो नाम राजर्षिः पिनाकिवरादेकस्यां जायायां तु पुत्रसहस्राणां षष्टिं द्वितीयस्यां च पत्न्यामसमंजसं सुतमवाप। अथैकदा राजा ययुं समुत्सृज्य तदनुसर्तुं पुत्रानादिदेश। तेऽपि बाढमित्युक्त्वा तमनुसस्रुः। ततो जितत्रैलोक्यवीराणां क्षितौ विचरतां तेषां तच्छुष्कसमुद्रकूलेऽन्तर्धानमगमत् सोऽश्वः। अथ यज्ञविघ्न परित्रस्तास्ते राजपुत्राः पितृशासनात् कुद्दालविहितैः खातैः पातालतलं समाविशन्। ततस्ते दुर्मदा असुरो रगरक्षांसि निघ्नन्तो दैवयोगात् कपिलमुनेराश्रममवाप्य चरन्तं हयं ददृशुः। अथ कपिलः क्रोधात् तमश्वं जिघृक्षतान्तेषां शरीराणि दृशैव भस्मकूटावशेषाणि चकार। ततो मुनिकोपाग्निना दग्धेषु तेषु सगरोऽसमंजं सुतं प्राह वत्स ! ते मम पुत्रा विनष्टाः। तुरंगमश्चहारितः। संप्रति क्रतुविध्वंसभीतस्य मे त्वमेवैकः परायणमितिराज्ञा समादिष्टः सोंऽशुमान् पातालं गत्वा कपिलमुनिं तुष्टाव। ततस्तुष्टेन तेन वितीर्णं हयं समादाय सगरस्य यज्ञसंभारमहीनं चकार। अथ गच्छता कालेन तपसा सगरे त्रिदिवं गते राजमानगुणोज्वलोंऽशुमान् राजा बभूव। तस्य पुत्रो दिलीपोऽभवत्। तस्माद् भगीरथोऽभूत्। अथैकदा स मातृमुखात् कपिलकोपेन रसातले भस्मीभूतान् पितामहाञ्छुश्राव। सोऽथ तत्कृते देवदेवमुमापतिं तपसा समाराध्य लोके गंगावतरणं कारयामास। ततो दिवः पतन्तीं गंगां यत्र ते सागरा दग्धास्तत्र पाताले चण्डीशजटाजूटभृतां गंगा भगीरथो निनाय। अथ प्रालेयशिखरस्फारकल्लोलहासिभिस्तत् सलिलैः स्पृष्टे भस्मनि सागरा स्त्रिदिवमयासिषुः। एवमगस्त्यपीतैः स्वैरेव जलैःसंपूरितोऽम्बुधिरभूत्। ततः प्रभृत्यगस्त्यमहत्वं लोके प्रथितमभूत्।

एवं लोमशोक्ता मगस्त्यकथां श्रुत्वा राजाऽऽत्मानं सर्वतीर्थेष्विवाप्लुतं मेने। ततः पाण्डवो नंदामपरनन्दां च नद्यामवाप्य देववृन्दसेवितं हेमकूटगिरिशिखरमारुरोह। यत्र साक्षादग्निदेवः सायं प्रातश्च समवलोक्यते। धर्मसूनु स्तत्र स्नात्वा देवान् संपूज्य च कौशिकाश्रमं प्रायात्। ततो लोमशः कौशिक्यां कृतावगाहं नृपं विभाण्डकमुनिचरितं वक्तुं प्रारभत। पुराऽत्रसलिले यद् विभाण्डकमुनिवीर्यमुर्वशीमप्सरसं दृष्ट्वाऽपतत्। तत् कुरंगिकाऽपिवत्। ततः समाप्ते समये तस्या मृगशृंगां

कितः सुतः समभवत् । स एव ऋष्यश्रृंगाभिधो महर्षिर्निखिलागमनिगमपारगो बभूव । सोऽथ हरिणैः सह वृद्धिमवाप्य पित्रा सुविहितव्रतो विपनेऽदृष्टमानुषं सुचिरं तपश्चक्रे । अत्रान्तरे लोमपादभूपशासनसमयेऽङ्गदेशे द्विजशापाद् घोराऽना वृष्टिरभूत् । ततोऽसौ विप्रान् समाराध्य योषिज्जनादृते कोऽन्यो जनं हर्तुंप्रगल्भत इति निश्चित्य विघ्नप्रशमनार्थं तदानयनाय देवदासीं स्ववेश्यां समादिदेश । साऽथ पुत्रीसहिता नावमारुह्य नदीमुत्ततार । ततः सा विभांडकाश्रमोपान्ते सरित्तटे क्षणं स्थित्वा मुनिसूनुमनोहर्तुं सुन्दरीं सुतां प्राहिणोत् । साऽथ चारेण पितृ रहितं तं विज्ञाय हंसगत्या तपोवनं विवेश । तत ऋष्यश्रृंगो देवतामिवरूपिणीं तां चन्द्रवदनां समालोक्य परमप्रीतिमाससाद । शरीर सहजो वासनाक्रमो नूनमनादिरि ति सत्योऽयंसिद्धान्तः । ततो वलितापांगरचितानंगमंगला साऽपि कलकोकिलमधुर स्वरेण शनैस्तं कुशलं पप्रच्छ । ततोऽसौ मुनिसुतस्तामब्रवीत् । तपोधन ! ते स्वागतम् । साधो ! त्वं धन्योऽसि । यो देवोचितं रुचिरव्रतं विभर्षीति निगद्य तस्यै निजासनप्रदानपूर्वकं वदरामलकानि फलानि प्रादात् । ततः साऽपि तस्मै राजार्हं मोदकं प्रायच्छत् । अथाऽसौ कदाचित् विचित्रकंदुकक्रीडालडितैः कदाचिद्यत्न-दर्शितकुचैः कदाचिद्धेलागलितमेखलैः स्मरविभ्रमैर्मुनिसूनुमनो हृत्वा नानाचटुलचेष्टित पूर्वकं नातिदूरे समाश्रम इति निगद्य जगाम । ततस्तस्यां गतायां नवकामेन समाकुलिते मुनौ तेजसा प्रज्वलन्निव विभाण्डकः समभ्यायात् । सोऽथ चिन्तानिःश्वासम्लानिताधरं दस्युभिर्लुप्तार्थमिव तं सुतं दृष्ट्वा किमेतदिति पर्यपृच्छत् । तच्छ्रुत्वा सोऽवदत् । तात ! मयाऽद्य देवकल्पो मुनिर्दृष्टः । यस्य कुसुमिता बर्हिबर्होपमा जटाः सदाशिवं स्मारयंति । स कृष्णसारनयनो दाडिमीकुसुमाधरत्वमवलम्ब्य श्रोत्रपात्रीरसायनं किमप्याह्लादि वचनं वक्ति । किम्बहुना । तस्य यादृशी बालकलहंसकलस्वना मौंजी विराजते । तादृशी ममेयं नास्ति । स मम वक्त्रे वदनं निवेश्य यत् पीयूषं ववर्ष । येनाऽह ममृताभिषिक्त इव जातोऽस्मि । तात ! सा का नाम व्रतचर्या ? किन्नाम तत् सुभगं तपः ? येनाऽहमप्य-चिरात् तादृशो भवामि । मन्ये तस्य कोऽप्यपूर्वो दीक्षाक्रमोस्ति । यत् संदर्शनादेव वृत्ति संक्षयो जायते । निशम्यैवं सुतवचनं मुनिस्तां योषितं मत्वा प्रोवाच । पुत्र ! बने तादृशा-स्तपोविघ्ना राक्षसा निवसंति । तेषु कदापि मा विश्वासीहीत्यभिधाय काश्यपः कोपात्तत्र दिनत्रयं च स्थित्वा पुनर्मूलफलाहरणाय काननान्तरं जगाम । ततस्तस्मिन् प्रयाते लीलाविभ्रमशालिनी सा पुनरभ्येत्य कामासक्तस्य ऋष्यश्रृंगस्य पुरतस्तस्थौ । ततोऽ

सौ विलोक्य सुधासिक्त इव भूत्वा करेण च समालंब्य साधो ! त्वदाश्रमपदं व्रजामीति वदञ्जगाम । ततः साऽङ्गनाऽऽश्रमधिया तं नौकारूढं कृत्वा लोमपादपुरीं चम्पां निनाय । अथ तस्मिन् प्रविष्टे सहसा घनाःसघनं ववृषुः । ततोऽतिसंतुष्टो राजा तस्मै शान्तां नाम सुतां प्रादात् । अत्रान्तरे चण्डकोपो विभाण्डकः सुतं हृतं ज्ञात्वा कम्पमानो नृपपुरीं समाययौ । ततोऽसौ जामातृहिताय राज्ञा रचितां गोकुलपद्धतिमग्रे दृष्ट्वा क्रोधं तत्याज । अथाऽसौ दंपती मुखमवलोक्य तपोवनमयासीत् । यतो महात्मनां कोपो नहि चिरं तिष्ठति । तत ऋष्यश्रृंगोऽपि तया कमलनेत्रया राजपुत्र्या सह सांसारिकसुखमनुभवँश्चिरं तस्मिन्नाश्रमे न्यवसत् । निशम्यैवं लोमशकथितं सानुजो राजा गंगासागरसंगमं प्रययौ । तत्र कृतव्रतः स्नात्वा द्विजेभ्यो विपुलधनं प्रददौ । ततोऽसौ कलिंगविषये वैतरणीमवाप्य स्नात्वा देवयज्ञे रुद्रभागप्राप्तिस्थाने दिव्यदृष्टिं लेभे । सोऽथ देवरूपां पृथ्वीं प्रणम्य यत्र स्वयंभुवा कश्यपाय मही दत्ता तत्तीर्थमासाद्य कृतार्थतामगमत् । ततोऽसौ सर्वमुनीन् संपूज्य रामशिष्यमकृतव्रणमुपसृत्य चाऽपृच्छत् । भगवन् ! कदाऽहं तेजोनिधिं भार्गवं द्रक्ष्यामि । निशम्यैवं भूपवचनं सोऽब्रवीद्राजन् ! स महानुभावः पर्वण्यत्र समागमिष्यति । ततो राजाऽवदत् । ऋषिराज ! कृपया रामचरित्रं श्रावयेति भूपेनोक्तोऽकृतव्रणो वक्तुमारभत । पुरा कान्यकुब्जेषु गाधिर्नाम राजा बभूव । तस्य पुत्रो विश्वामित्रः सत्यवती नामिका च कन्याऽऽसीत् । अथैकदा भृगुसूनुर्ऋचीकः श्यामकर्णानां सहस्रं राज्ञे दत्वा हयशुल्कां तां समवाप्तवान् । ततोऽसौ पितृशुश्रूषणे रतो विपिने धर्मं चचार । सा राजतनया च तं तपः स्थितं सिषेवे । ततः कदाचिद् भृगुस्तुष्टिमवाप्य तनयभार्यायै वरं प्रादात् । साऽथ तं मातुरात्मनश्च सुतावयाचत । तच्छ्रुत्वा सोऽब्रवीत् । भद्रे ! त्वं न्यग्रोधं तव माताचोदुम्बरं समालिङ्ग्य पृथक् पृथक् पुत्रमवाप्स्यथः । इति श्वशुरेणादिष्टा सा वृक्ष विपर्ययं कृत्वा कालेन गर्भंदधार । एवमेव वरप्रभावात्तज्जनन्यपि गर्भवती बभूव । अथैकदा धर्मविद्भृगुः सगर्भां तां दृष्ट्वा प्रोवाच । अहोनु ! बुद्धिदौर्बल्यात्तव पादपौ विस्मृतौ । पुत्रि ! वृक्षव्यत्ययात्तवक्षत्राचारो गाधिपत्न्याश्च राजन्यो ब्राह्मणोचितः पुत्रो भविता । एवमाकर्ण्य विषण्णवदनाम्बुजा ऋचीकभार्या पुत्रस्थाने पौत्रो मे क्षत्राचारो भवत्वित्यभ्यधात् । ततो गाधिवधूर्विश्वामित्रं ऋचीकपत्नी च जमदग्निं तपोनिधिमजीजनत् । अथ गच्छता कालेन जमदग्नी रेणुकाभिधां भार्यां समासाद्य तस्या यान् पंचपुत्रानुत्पादयामास । तेषां कृती रामोऽनुजोऽस्ति । ततः कदाचिद् रेणुका चित्ररथाभिधं भूपालं जलकेल्याकुलं विलोक्य विस्मिता बभूव । अत्रान्तरे मुनिः

स्वेदार्द्रवदनां धैर्याच्चपरिच्युतां तामवलोक्य रुषा हन्तुं पुत्रानादिदेश । ततस्तेषु चत्वारोऽपि पुत्रा यदा पित्राज्ञां नानुमन्यंत । तदा तेन महर्षिणा शप्तास्ते काष्ठलोष्ठोपकारा गतचेतसश्च बभूवुः । ततः पितृशासनाद्रामस्तु परशुना मातृशिरश्चिच्छेद । अथास्य यदा जमदग्निर्वरप्रदो बभूव । तदाऽसौ तद्वरप्रभावाद् विस्मृतवधां जननीं विधाय सर्वानग्रजांश्च जीवितान् कृत्वाऽऽत्मानमपि निष्पापमकरोत् । अथैकदा मदाकुलः कार्तवीर्यो जमदग्नितपोवनमागत्य सवत्सां धेनुमपाऽहरत् । ततस्तरुवरान् भंक्त्वा समरदुर्मदे तस्मिन् याते रामोऽभ्येत्य वृत्तान्तं च विदित्वा तत् कोपात् प्रजज्वाल । ततोऽसौ भर्गशिष्यः संग्रामे भल्लैर्बाहुशालिनस्तस्य भुजानां सहस्रं चिच्छेद । एवं तस्मिन्हते तत्तनयाः कालेन तद्वनमभ्येत्य रामरहितं जमदग्निं शितशरैर्जघ्नुः । ततो रामः पितरं पातितमवलोक्य सुचिरं विलप्य च क्षत्रियान् समुपाद्रवत् । अथाऽसौ युधि त्रिःसप्तकृत्वो निःशेषं क्षत्रक्षयं कृत्वा कुरुक्षेत्रे पंच रुधिर ह्रदांश् चक्रे । एवमसौ रामो वैरनिर्यातनं कृत्वा कश्यपाय ससागरां पृथ्वीं प्रादात् । अद्यश्वः स महात्मा महेन्द्रशिखरे निवसति । चतुर्दश्यामिहागत्य मुनिसन्निधिं करोतीत्यभिधाय रामशिष्योऽकृतव्रणो विरराम ।

अथ सानुजो राजा मुनिभिःसह परशुरामदर्शनं कृत्वा नानातीर्थानि पश्यन् प्रभासक्षेत्रमयासीत् । तत्र श्रीरामकृष्णमुखैर्वृष्णिपुंगवैः संगतो विपुलां प्रीतिमाससाद । ततः सत्यविक्रमः सात्यकिः कृष्णाजिनयुतं जटाधरं च कौंतेयं विलोक्य दुर्योधनाय चुक्रोध । अथ पाण्डवो वृष्ण्यन्धकानामंत्र्य रेवामुत्तीर्य च वैडूर्यपर्वतं प्राप । ततो लोमशः प्राह । राजन् ! पुरेह भार्गवश्च्यवनो दीर्घं तपश्चक्रे । किम्बहुना । तच्छरीरं भूमौ निमग्नं तृण पिपीलकैश्च व्याप्तमभूत् । अथैकदा क्रीडाकुलवधूवृन्दसंदेहितलतावने नृपशर्यातिस्तं देशं समाययौ । ततस्तत्र सुकन्येति विश्रुता तत्पुत्री वनदेवीव विचरंती समाययौ । च्यवनोऽथ तां शशिमुखीं दृष्ट्वा तद्विलासरसमिच्छन् क्षमया गिरा बभाषे । परं च सा नाऽशृणोत् । ततो भूमिलीनस्य तस्य मणिबुद्ध्या कण्टकेन विलोचनेऽपाटयत् । तेन जगद्व्यथितं बभूव । अथ तत्कोपात् शर्यातिसेना शकृत्स्तंभादानाहव्याधिसंरुद्धा परमसंकटमवाप । ततो भीतो नरेन्द्रो यत्नात् तत्र मुनिमन्विष्य प्रणामादिभिस्तं प्रसादयामास । अथ मुनिः प्रोवाच । राजन् ! सुतामेताम्मे प्रयच्छ । अन्यथा तवेयं सेना मया बद्धा न विमुच्यते । तच्छ्रुत्वा नृपतिस्तस्मै तूर्णं निजात्मजां दत्वा विमुक्तरोगं सैन्यं च समादाय स्वनगरं जगाम । अथ च्यवनोऽपि कान्तिकौमुदीं सुकन्यां समवाप्य तयैव सह चिरं वन्हि पर्यचरत् । अथैकदा कांतिभूषिताश्विनौ तां रूपाधिदेवतां विलोक्यावदताम् । अहोनु

सुभगे ! तवैतद् दिव्ययौवनं ललिता च तनुः संभोगभाजनं कान्तं विना वृथा वर्तते । च्यवनं कृशं प्रवयसं च मत्वाऽऽवयोर्मध्यादेकतरं वृणु । सुमुखि ! किं विपंचीपटहयोः संगमः शोभते ? अथवा तं सुरूपं यौवनान्वितं च करिष्यावस्त्वमावयोः कथनमनुपालय । निशम्यैवं सा कोपकम्पिता वल्लरीव स्खलिताक्षरं तमेवार्थं भर्तारमुवाच । तच्छ्रुत्वा मुनिः प्राह । सुभ्रु ! को दोषः ? तद्विचेष्टितं तु पश्यावः । एवमाकर्ण्य पत्युराज्ञां सा तावभ्येत्य च तथाऽस्त्विति प्रत्यब्रवीत् । ततस्तौ मुनिना सार्धं दिव्यरूपप्रदं सरः प्रविश्य सहसा तुल्यरूपास्त्रयः समुत्तस्थुः । अथ सती सुकन्या तान् सदृशाकारान् समानाभरणाम्बरान् विलोक्य स्वमेव दयितं वव्रे । ततस्तारुण्यमवाप्य संतुष्टोमुनिर्युवयोः प्रियं करिष्य इत्यश्विनावब्रवीत् । अथ युवा मुनिवरस्तया वालमृगीदृशा सह फुल्लपादपशोभिषु वनान्तेषु विजहार । अथैकदा स श्वशुरशार्यातेर्बृहद्यज्ञे मुनिगणैः सह याजको बभूव । तत्र सुरेश्वरोऽश्विनोः सोमं प्रगृह्णन्तं तं प्रोवाच । भगवन् ! अश्विनौ यज्ञे सोमभागं नार्हतः । यतो भिषजाविमौ परकार्योपजीविनावपांक्तेयाविति सुरेन्द्रेणोक्तेऽपि यदा मुनीश्वरो नामन्यत । तदा क्रुद्धो देवराजः पाणिना वज्रमुद्यम्य मुनिराजमभ्यधावत् । ततो मुनिर्मंत्रबलेन प्रहरतस्तस्य सवज्रदक्षिणभुजं संस्तभ्य चित्रार्पितमिव चकार । अत्रान्तरे पावकोपमो मुनिस्तद्विनाशाय पावकं हुत्वा कृत्यारूपं मायासुरं नाम विनिर्ममे । सोऽथ महाकाल इव विभीषणो गर्जन् जंभारिमभ्यगात् । ततोऽसौ वज्रस्तब्धभुजस्सहसा तमापतन्तं दृष्ट्वा भयात् सहसा प्रोवाच । ऋषिराज ! यज्ञेऽस्मिन् सोमभागोऽस्तु । निशम्यैतद्देवराजवचः कृपासागरो मुनिस्तं मायासुरं विससर्ज । ततोऽश्विभ्यां सोमभागं वितीर्य विधिवत् क्रतुं समाप्य शक्रं विसृज्य च कृतार्थो मुनिः सुकन्यया सह चिरं विजहार । राजन् ! सोऽयं पुण्यप्रदाताऽऽश्रमः । ततो राजा तत्र स्नात्वा कृतनित्यकृत्यश्च कृतार्थो बभूव ।

ततो राजा मांधातृमखक्षेत्रं प्राप । अथ राज्ञा मांधातृचरित्रं पृष्टो लोमशः प्रोवाच । महाभाग ! पुरा मनुवंशे यवनाश्वो नाम राजा बभूव । सचैकदा वने विचरँस्तृषार्तो भृग्वाश्रमं जगाम । तत्र भृगुवृतात्पुत्रेष्टिकलशाज्जलं पीत्वा गतक्लमोऽभवत् । ततो वर्षशते पूर्णे राजकुक्षिं भित्वा भासुरस्सूनुर्विनिर्ययौ । अथ देवराजेन मुखे प्रदेशिनीन्दत्वा मां धास्यतीति बालकः समाश्वासितः । स एव शिशुरग्रे गत्वा मान्धातेति विख्यातो भूपालो बभूव । एवं मांधातृसंभवंश्रुत्वा राज्ञा पृष्टो मुनिः सोमकाश्रममासाद्य तत्कथां वक्तुं प्रारभत । पुरासीत् सोमको नाम राजा । स यज्वा जायाशतपतिर्महत्तपसा जंतुसंज्ञकं सुतमवाप । स सर्वप्रियो बालकः कदाचित् पिपीलिकेनैतस्य स्फिचि दष्टः । अथ सान्तः

पुरो राजा तद्व्यथारावमाकर्ण्य मर्माहत इव दुःखितो बभूव । एव मालोक्य तद्याजको ऽपत्यशतप्राप्त्यर्थमाथर्वणं यागं व्यधात् । ततोऽसौ क्रोशंतीनां जननीनान्तमेव सुतं हृत्वोत् कृत्योकृत्य च तद्वसामग्नौ भागशो जुहाव । अथ याजकाज्ञया विवशा राजपत्न्यस्तद्धूममाघ्राय काले कुलोचितं सुतशतं प्रापुः । ततो जंतुजननी तमेव जंतु पूर्वलक्षणलाञ्छितं सुतमवाप । अथ गच्छता कालेन प्राप्तशतपुत्रो राजा त्रिदिवमवाप्य घोरनरके पच्यमानं स्वयाजकं ददर्श । ततो राजा मत्कृतेऽसौ पापमवाप्नोतीति विचिन्त्य निजस्वर्गफलं त्यक्त्वा तमेवाऽनुससार । अथ तत्सत्वेन निर्मुक्ते याजके स राजा पुनरपि त्रिदशमन्दिरं समवाप्तवान् । अतएव द्रव्यमयाद् यज्ञाद् ज्ञानयज्ञो विशिष्यते ।

ततो राजा ययातिमखभूमिं दृष्ट्वा पवित्रं कश्मीरमण्डलमगात् । तत्र मोक्षदायां वितस्तायां स्नात्वा तच्छीकरमारुतैर्भवमरुभ्रान्तितापपापविमुक्तिमवाप । ततो नाना तीर्थानि विलोकयन् राजा धर्मनिष्ठोशीनरस्य क्रतुक्षेत्रं जगाम । अथ राज्ञा पृष्टो मुनिर्लोमशस्तत् पुण्यस्थलमाहात्म्यं वक्तुं प्रारभत । आसीदत्र शिविर्नाम यज्ञपरायणो राजा । तस्य दशसु दिक्षु दयामहिमानं श्रुत्वा तत् सत्य दया परीक्षार्थं श्येनरूपो देवराजः कपोतरूपेण वन्हिना सह तत्राऽऽजगाम । ततः परित्रस्तकपोतः श्येनेन बलादनुसृतो नरपतेरुरुप्रदेशमवाप्याऽतिष्ठत् । अत्रान्तरे श्येनोऽभ्येत्य तद्रक्षणोद्यतं भूपालमूचे । राजन् ! त्वं दैवविहितं मे भक्ष्यमिमं रक्षितुन्नार्हसि । त्वं धर्मभृतामग्रणीर्विपश्चितां च प्रथमो भूत्वा वृत्तिलोपान्मां निहन्तुं कथमुद्यतोऽसि ? महीपाल ! अद्य भोजनविरहान्मयि विनष्टे सपुत्रा सती मे भार्याऽप्यवश्यं विनङ्क्ष्यति । राजन् ! कारणात्तस्मादेकरक्षणाद् बहून्मावधीः । लोके महात्मानः पापानुबंधनं धर्मं नहि सेवन्ते । तच्छ्रुत्वा दयानिधी राजा विस्मयमवाप्य तं जगाद । वत ! शरणार्थिनमायान्तं त्यजेति भाषसे । सर्वो हि जनः स्वार्थे मुखरतामेवावलम्बते । त्वं चिन्तितो मा भव । हेलयाऽहं सकुटुम्बस्य तव निर्वाहार्थं प्रयतिष्ये । विहंगम ! कपोतं प्रति त्वं वृथा निर्बंधं मा कृथाः । निशम्यैवं श्येनो भूपतिं सावेगं पुनरवोचत् । राजन् ! भक्ष्यशतेनाऽपि शाश्वतं भोजनं नाऽहं त्यजामि । जगति लोभतः को हि नाम सहजा शाश्वतीवृत्तिं त्यजति । अथवा पार्थिव ! यदि शक्नोषि तर्हि तु एतेन तुल्यं स्वविग्रहान्मासं तुलया मे देहि । निशम्यैवं महानुभावो राजा परमलाभं मन्यमानो स्वमांसं दातुमुत्सहे । अथ शनैः शनैस्तुलारूढे कपोते गुरुतां याते वितीर्णाशेषमांसो राजा स्वयं तुलामारुरोह । ततः स्वरूपवान् मघवा विस्मितस्तमभाषत । राजन्! श्येनरूपोऽहमिंद्रः कपोतश्चाऽयं पावकोऽस्ति। यशोनिधे ! तव सत्वं विज्ञातुमिहाऽद्य संप्राप्ता

विति निगद्य इन्द्राऽनलौ त्रिदशालयं जग्मतुः ।

ततो लोमश औद्दालकिश्वेतकेतो राश्रममवाप्य पाण्डवाञ्जगाद । राजन् ! पुराऽत्र उद्दालको नाम मुनिरासीत् । तस्य श्वेतकेतुः पुत्रः सुजाता च कन्या बभूव । ततोऽसौ कपोढाख्याय ब्रह्मवादिने तां कन्यां प्रादात् । साऽथ वरवर्णिनी कालेन तस्माद् गर्भमधत्त । अथैकदा तद् गर्भस्थशिशुः सम्यङ् नाधीतमिति पितरं प्रोवाच । निशम्यैवं लज्जितकपोढो रुषाऽब्रवीत् । गुरुजनावमंतः ! पापादस्मात् सहसाऽष्टांगवक्रत्वमवाप्य त्वमष्टावक्रो भविष्यसि । तत आसन्नप्रसवा ब्राह्मणी समये कपोढमूचे । देव ! धनाविहीनाया मे प्रसवोऽतिदुस्तरः । निशम्येति भार्यावचः कपोढो जनकभूपतेर्यज्ञमगात् । नूनं गृहदुर्गतिर्दुःसहैव भवति । ततस्तत्र वादे वन्धेन वंदिना यथा बहवो विचक्षणाः पराजिता जलनिकेतनेक्षिप्तास्तथाऽयमपि पणधृतो जलप्रक्षेपरूपं दण्डमवाप । ततो भर्तृरहिता सा सती पुत्रमष्टावक्रं प्रासूत । अथाऽसौ मातामहात् कृतसंस्कारोऽचिरेणैव कालेन वेदवेदांगपारगो भूत्वा जननीसहितानाश्रमस्थान् परितोषयामास । अथ कदाचित् स शिशुर्मातृवचसा वादे वंदिना निहतं पितरमाकर्ण्य कोपकम्पितोऽभवत् । ततोऽन्येद्युः स मातुलेन सह जनकनृपं प्रायात् । तत्राऽसौ द्वाःस्थेन बालोऽसीत्यभिधाय निरुद्धः । तच्छ्रुत्वा सोऽब्रवीत् । भद्र ! तेजः सारं पश्य । बालेन तव किमपकृतम् ? पश्य । बालो वन्हिर्दहत्येव । बालभास्करस्तपत्येव । किं बहुना । यत्र तेजोविचारस्तत्र वयो नोपयुज्यते । अथैवं ब्रुवाणो द्वाःस्थेनावेदितोऽसौ राजसभाप्रवेशं प्रापत् । तत्रान्हाय वन्दिनो वादे स सभ्यानां विस्मयं व्यधात् । तत स्तत्र तयोर्मुहुरुत्तरोत्तरवाक्येनास्थगितो वाणीविच्छेदावधि निर्णयो वादोऽभवत् । तत्रादौ पूर्वपक्षः । एकोग्निः । उत्तरम् । द्वौ शक्राग्नी । प्र० त्रयो लोकाः । उ० चत्वारो वर्णाः । प्र० पंच पावकाः । उ० षड् ऋतवः । प्र० सप्तर्षयः । उ० अष्टौ वसवः । प्र० नव सामिधेन्यः । उ० दश दिशः । प्र० एकादश रुद्राः । उ० द्वादशादित्याः । इत्युत्तरक्रमवादे वंदी लज्जामवलंब्य प्रोवाच । महाप्राज्ञ ! ज्ञानी तव पिता वरुणाज्ञया मयाऽब्धौ प्रक्षिप्तः । त्वं तस्यैव यज्ञं कुरु । तत् प्रसादादसौऽचिरात्समेष्यतीत्यभिधाय वंदी विरराम । पूर्वं द्विजैः सार्धं निमग्नः कपोढोऽधुनावरुणसत्कृतो भूत्वा जयिना पुत्रेण संगतो विरेजे । ततो जनकमालोक्य वंदी सलिले ममज्ज । दुर्बलोऽष्टावक्रश्च मातुलं पुरस्कृत्य निमज्य पुनः प्रायात् । राजन् ! सोऽयं पवित्रकीर्त्तेः श्वेतकेतोराश्रमो विराजते । ततो राजा रैभ्याश्रम मवाप्य लोमशं तच्चरित्रं च पप्रच्छ । तच्छ्रुत्वा मुनिः प्रोवाच । पुराऽत्र रैभ्यभरद्वाजौ मुनिराजौ परमसुहृदावास्ताम् । तत्र भरद्वा-

जस्य तनयो यवक्रीतो रैभ्यस्य च पुत्रावर्वावसु परावसू संज्ञकौ बभूवतुः । अथैकदा मूर्खयवक्रीतः सात्मजं तं पूजितं दृष्ट्वाऽतिदुःखितोऽभवत् । ततः कदाचिदसौ वेदविद्याप्तये भागीरथीतटं गत्वा सुचिरं तीव्रं तपश्चक्रे । अत्रान्तरे साक्षाद्देवराजस्तं समभ्येत्य प्रत्यबोधयत् । वत्स ! निर्बन्धात् परिवर्तस्व । परिश्रमोऽयं ते वृथा । किम्बहुना । गुरुमुखाद्विना वेदा न प्रतिभान्तीतिसत्यमवगच्छेति सुरेन्द्रेण प्रबोधितोऽपि स यदा मिथ्याप्रयासान्न विरराम तदा शक्रो वृद्धविप्रो भूत्वा तत्तपोवनोपान्ते वालुकामुष्टिकृतसेतुना शनैः शनै गंगाविपुलवेगं रोद्धुमुद्यतोऽभवत् । एवं निष्फलायासे कर्मणि प्रस्तुतं कृशं च तं दृष्ट्वा विहसन् यवक्रीतोऽवदत् । विप्र ! ते किमिदं विचेष्टितम् ? अहह ! इयं वेगवतीगंगा सिकतामुष्टिसेतुना किं धर्तुमायाति ? किंवाऽत्रकोऽप्येषस्तव मोहो विजृंभते । तच्छ्रुत्वा वृद्धब्राह्मणो विहस्य तं प्रोवाच । भद्र ! यथैतत्ते घोरंतप स्तथैवाऽयं ममाऽप्युद्यमोऽस्ति । गुरोरग्रेऽनधीत्य कथं श्रुतिः प्रतिभाति । सिकता मुष्टिभिश्चापि सेतुः कथं नाम निबध्यत इत्युक्त्वा पुनरपि प्रबोधितोऽसौ यदा तपसो न चचाल तदा तस्य दृढभक्त्याऽतितुष्टो देवराजस्तस्मै वरं प्रादात् । ततः स्तद्वरप्रभावादसौ चतुर्दशविद्याविशारदशक्तिमवाप । अथाऽसौ हृष्टस्तां वरप्राप्तिं पित्रे न्यवेदयत् । निशम्यैवं पुत्रमुखात् सिद्धिसमाचारं भरद्वाजोऽब्रवीत् । पुत्रक ! सर्वज्ञोऽस्मीति विचिन्त्य दर्पान्धता म्मागमः । गुणो नम्रशिरसः सहस्रगुणतां प्रयाति । अपरं च रैभ्यो मुनिर्महाक्रोधी । तस्मात् त्वं तदाश्रमं मागमः । यतो नूतन पण्डितस्तत्र गत्वा ध्रुवं स्तब्धतां याति । पुराऽमरतुल्योऽपि बालधिमुनितनयो दर्पान्धत्वाद् धनुषाख्यमुनिना क्षिप्रमायुषा भ्रंशितः । एवं पित्रा समादिष्टोऽपि मदाकुलो यवक्रीतो रम्यासु वनपर्यन्तभूमिषु भ्रान्त्वा कालं निनाय । ततः कदाचिद्विरहिणां काले कुसुमशालिनि वसंते समायाते यवक्रीतो निजाश्रमे विचरंतीं रैभ्यस्नुषां ददर्श । सोऽथ शशांकमुखीन्तान्दृष्ट्वा स्मरेण मुखरीकृतो भजस्व मामित्यवादीत् । निशम्यैतत् पतिव्रता सा भयात्कम्पमवाप्य विस्मृतकुलाचारं तं समेष्यामीति मिथ्या बभाषे । ततस्तस्मिन्नपसृते रैभ्यो निजाश्रममवाप्य तत्र साश्रुनयनां परावसुदयितां विलोक्य ताम् शोककारणं पप्रच्छ । सोऽथ स्नुषामुखाद्यवक्रीतनिकारं श्रुत्वा तां समाश्वास्य रुषा कल्पान्तकालानलोपमो जज्वाल । ततोऽसौ स्वजटामेकामुत्पाट्य पावके जुहाव । यया क्षिप्रं जगद्ग्रासक्षमा कृत्यैका समुदभूत् । अथ क्रुद्धो मुनि र्द्वितीयामपिजटां हुत्वा तया च घोरराक्षसमुत्पाद्य यवक्रीतवधे कृत्यासममादिदेश । सोऽथ

दीप्ताक्षो हस्ते शूलं धृत्वाऽर्धशौचं कृत्याहृतकमण्डलुं च यवक्रीतमनुससार । ततोऽसौ शूलाहतो मुनिसुतः शुष्के सरसि जलमनवाप्य बलीयसा कालेनेव तेन रक्षसानुसृतो गृहरक्षक शूद्रेणाऽपि च निवारितः पितुरग्न्यागारमवाप्य निपपात । अथ यातजीवे मुनिसुते राक्षसे च तिरोहिते कृतस्नानो भारद्वाजो निजाश्रमं समागच्छन् मार्गे दुर्निमित्तानि दृष्ट्वाऽतिशंकितो बभूव । सोऽथ गृहरक्षकाच्छूद्रात् तत् कथां निशम्य विचेतनो निपपात । ततो लब्धसंज्ञोऽश्रुगद्गदं सुचिरं विललाप । हा ! स्नेहजन्मनि संसारेऽस्मिन् दुःखादपरफलं किमस्ति । अहो ! सुहृदप्यहं क्रोधात्तं शपामि । सोऽपि क्रूरकोपो न चिरात् स्वपुत्राद् वधमवाप्स्यतीत्यभिधाय पुत्रं संस्कृत्य च भारद्वाजोऽग्निमाविवेश । अथ गच्छता कालेन रैभ्यतनयौ पितुराज्ञया दीक्षितबृहद्युम्नभूपतियज्ञे याजकौ भूत्वा जग्मतु ः । ततस्तास्मिन् वर्तमाने क्रतौ परावसू रात्रौ मृगशंकया स्वपितरं जघान । अथाऽसौ प्रातःकाले रैभ्यं हतं दृष्ट्वाऽऽत्मानं ब्रह्महत्याग्रस्तं निश्चित्य नृपयज्ञमहीं च गत्वा सर्ववृतं भ्रात्रे न्यवेदयत् । निशम्यैवं भ्रातृवचो दुःखितोऽर्वावसुः प्रोवाच । भ्रातः ! त्वं भूपालं याजयस्व । अहं त्वत्पापशांतये नियम मवलम्ब्य व्रतं चरामीति निगद्य तपोवनं जगाम । अथ कालेन तीर्णव्रते तास्मिन् प्रयाते कृतघ्नपरावसुः राजसम्मानवासनया वृहद्युम्नमभाषत । राजन् ! अयं ब्रह्महा तवास्मिन् क्रतुक्षेत्रे प्रविष्ट इत्युक्तो नृपतिस्तेन तत्प्रवेशं निवारयामास । तच्छ्रुत्वाऽर्वावसुः प्रोवाच । राजन् ! नाऽहं ब्रह्महाऽस्मि । ततस्तेन सत्येन संतुष्टा वन्हिमुखा देवाः समेत्य तस्मै वराम् प्रददुः । अथाऽसौ प्रथमवरेण विस्मृतागसं पितरमजीवयत् । द्वितीयेन पितृमित्राय भरद्वाजाय जीवदानं प्रादात् । तृतीयेन च यवक्रीतमुत्थापयामास । अथ लब्धजीवो यवक्रीतो देवान् प्रणम्याऽपृच्छत् । महाभागाः ! तुल्याध्ययनसंस्कारो रैभ्यो माङ्कथमवधीत् ? तच्छ्रुत्वा देवा जगदुः । वत्स ! त्वया गुरुमुखाद्विना निखिला वेदाः प्राधीताः । तेन कर्मणा त्वं न्यूनोऽसीत्यभिधाय त्रिदशालयं प्रतियातेषु तेषु सुरेषु रैभ्यं पुरस्कृत्य सपुत्रो भरद्वाजः स्वाश्रमं जगाम । कौंतेय ! तेषाम्महानुभावानां दिव्यपुष्पफलद्रुममेतत्तपो वनं वर्तते । ततो गंगायमुनादितीर्थप्रभवं हिमालयंपर्वतराजमवाप्य मुनिरुवाच । कौंतेय ! सिद्धगुह्यकसेवितं गिरिराजं पश्य । देशोऽयमानुषागम्यः । अतः सानुजः समाधानपरो व्रज । निशम्यैवं लोमशवचनं राजाश्रमार्तां कृष्णां समाश्वास्य गंधमादनं गन्तुमुद्ययौ । अथ मार्गे कुलिंदपत्तनाधिपेन सुबाहुना पूजा मवाप्य तत्रैव क्षपां क्षपयामास । ततोऽन्येद्यः प्रचण्डघनविप्लो

प्रशांते भीमसेनेन संस्मृतो घटोत्कच स्तत्रागत्य सिद्धमार्गेण सर्वांस्तानुवाह ।

अथैकदा द्रौपद्याः पुरः कमलाहस्तकमलादिव निर्गतं कमलमपतत् । साऽथ लोलाक्षी दिव्यपंकजमालोक्य हर्षात्तदादाय च क्षितिपाय निवेदयामास । तस्मिन्नेवावसरे भीमसेनोऽपि तत्रा जगाम । ततः सा चंचलदृशा तं विलोक्य द्वितीयकमलानयनाशयं विज्ञापयामास । अथेंगितज्ञः पवनात्मजो दयिताशयं परिज्ञाय सत्वरं तदानेतुं प्रतस्थे । सोऽथ बद्धतूणधनुष्पाणिर्वरवारणान् वारयन् विविधाश्चर्यमुनिद्रुपादपं गिरिमपश्यत् । तत्र सुवर्णकदलीखण्डमंडिते गिरकटके सरस्तटाभ्यर्णे साक्षतिर्हनुमान् स्थितआसीत् । सोऽथ मारुतिः सिंहशब्देन गुहाप्रतिस्वनं श्रुत्वा कंपिताचलशेखरं पुच्छमास्फोटयामास । ततो वायुनंदनो भ्रातरमागतं दृष्ट्वा तत्कल्याणाय मार्गसमावृत्याऽतिष्ठत् । अथ भीमस्तस्मिन् कदलिकावने सरसि स्नात्वा व्रजन् नेकायने पथि तं कपीन्द्रमपश्यत् । ततोऽसौ कमलार्थी वृकोदरः पवनाकम्पिपर्यन्तकेसरेण विराजितं रुद्धवर्त्मानं तमपसर्पत्वयमिति प्रोन्ननाद । तच्छ्रुत्वा कपिर्लोचने समुन्मील्य मंदमंदस्वनमुवाच । अहोनु ! महाकुलस्त्वं बलदर्पात् किंवा प्रमादात् प्राणिनां हृदयोत्कम्पं विदधासि । प्रभविष्णुपदस्थानां वृद्धोपसे- विनाम्महात्मनां सभारंभो लोकोद्वेगकारी नहि भवति । अहह ! परपीडानभिज्ञेन त्वया दीर्घरोगग्रस्तमशक्तं मां विनिद्रं कुर्वता किन्नाम सुकृतं कृतम् ? इतः परं सिद्धसेवितोऽयं देशो मनुष्याऽगम्यः । मद्वचनान्निवर्तस्व । यतोऽतिप्रसंगो न क्वाऽपि प्रशस्यते । निशम्यैवं विस्मितो भीमसेनस्तस्मै निजाभिजनं विनिवेद्य तं देवोऽयमिति मत्वा व्याजहार । प्लवंग- मेश्वर ! मार्गं देहि । नाऽहं वाङ्मात्रैर्निवर्ते । देशोऽयमगम्यो वा गम्यो भवतु । तवाऽनेन किम् ? तच्छ्रुत्वा कपिः पुनरभाषत । भीम ! मामुल्लंघ्य व्रज । नाऽहं सम्प्रति विचलने क्षमोऽस्मि । किम्बहुना । कायोऽयं क्लेशमयः सर्वापायमयाश्रयश्च । दरिद्राणामुत्सव इव पर्यन्ते हि भारायते । एतदाकर्ण्य भीमोऽब्रवीत् । देव ! सागरोपमं त्वद्विग्रहस्थित- मनन्तं क्षेत्रज्ञं हनूमद्वत् कथमहं लंघयामि । तच्छ्रुत्वा समुद्भूततनूरुहो वानरोऽवादीत् । कोऽसौ हनूमान्पुराऽभवत् । यो विलंवितवान् सशैलं समुद्रम् । निशम्यैवं पाण्डवस्तमुवाच । स महाभागो वीरराघवसहायार्थं महाम्बुधिं विलंघ्य लंकां ददाह । ततः सीतासंदेशं समा नीय च रावणारिं प्रसादयामास । सोऽनिलसुतो मे भ्राता भुवनत्रये विश्रुत इतिब्रुवाणं भीमं सावज्ञो वानरो ममैतल् लांगूलमुत्क्षिप्य गम्यतामित्यवादीत् । तच्छ्रुत्वा भीमो यदा पाणिनैकेन पुच्छमुद्धर्तुं नाशकत्तदा सर्वप्राणेन भुजाभ्यां तद् ग्रहीतुं प्रायतत । तत आलोडितमुखः स्विद्यद्गात्रो दष्टरदच्छदश्च प्रयत्नशतं कृत्वाऽपि यदा कृतार्थो न

बभूव तदा तदूर्जितबलं स्तुत्वा को भवानित्यपृच्छत् ? अथ प्रीतो वानरेश्वरो विहस्य प्रोवाच । वत्स ! सोऽहमस्मि हनूमान् पवननंदनः । क्रुद्धसिद्धास्त्वां न शपेयुरिति विचिन्त्य तवैव श्रेयसे मयेदं वर्त्म निरुद्धम् । अत्र रम्यगिरिनिकुंजेषु त्रिदशांगनाः सततं रामचरित्रं गायंति । तेनाऽहमत्र तिष्ठामि । भ्रातर् ! यदर्थं त्वमत्रायातः । सा कमलिनी नाऽति दूरेऽस्ति । त्वं विनीतत्वमवलम्ब्य पर्वतेऽस्मिन् व्रज । निशम्यैवं हनुमद्वचनं भीमस्तं प्रणम्य प्रोवाच । विभोऽहं तव निजरूपं द्रष्टुमिच्छामि । पुरा केन वपुषा महार्णवं लंघितवानसि ? एवमाकर्ण्य प्रणतप्रियो हनूमान् बभाषे । भद्र ! यद्यपि विपुल कालो गतः शक्तयश्च तास्तिरोहितास्तथापि तव विनोदाय दर्शयामीत्यभिधाय विद्युत्सहस्रपिंगेन विपुलतेजसा व्याप्तं दिव्यस्वरूपं दर्शयामास । ततोऽसौ कल्पान्त-दहनोपमं दुर्निरीक्ष्यं वपुर्वीक्ष्य प्रभो ! रूपं संहरेति निवेदयामास । महावीर ! ते भैरवं तेजः क्षणात् त्रैलोक्यमपि निर्दहेत् । सम्प्रति प्रसन्नो भूत्वा मम चापलं क्षमस्वेति पाण्डवेन प्रार्थितः सत्वरं निजस्वरूपं स संजहार । ततः पृथासुतः कृतार्थत्वमवाप्य भुजाभ्यां परिष्वज्य च तं सहस्रगुणमहाभाग्यत्वं समवाप्तवान् । अथ वरदो हनूमान् तं प्रोवाच । भ्रातस् ! तव किम् प्रियं करोमि ? यदीच्छसि तर्हि कौरवाणां हस्तिनापुरं शिलया मथ्नामि । किंवाऽर्जुनध्वजे सन्निधानं वः करिष्यामि । किं बहुना । तत्र स्थितस्य मे पुष्करावर्तनादिभिर्नादैर्धैर्यरहिताः कौरवाः संख्ये क्षणात् क्षयं प्रयास्यंतीत्युक्त्वाऽन्तर्हिते प्लवगेन्द्रे कमलार्थी वृकोदरस् तन्माहात्म्यं विचिन्तयन्नग्रे जगाम । ततो भीमः सिद्ध-तरंगिणीं समुत्तीर्य धनेशाचलमवाप । अथ वीचिहस्तसमाधूतकमलां कमलामिव तां नलिनीं दृष्ट्वाऽतिमुदितमना बभूव । लोके गुणिसंगात् को नाम महानंदनिर्भरो न स्यात् । तद्रक्षायै ये हेमकंकटा राक्षसा नियुक्ता आसन् । ते कमलानि जिहीर्षन्तं वृको-दरं समेत्य प्रोचुः । रे कस्त्वम् ? किमर्थं च धनपतिनलिनीं हर्तुमिच्छसि ? एषा त्रिदशैरपि दुष्प्राप्याऽस्माभिश्च परिरक्षिताऽस्ति । कोप्यत्यक्तजीवितो बलादिमां प्राप्तुंनार्हति । किम्बहुना । यक्षपतेराज्ञां विना हर्तुमियं न पार्यते । त्वमधुना निष्फलायासान् निवर्तस्व । कानने मिथ्या भ्रान्तोऽसीति वचनमाकर्ण्य निःशंको भूत्वा वृकोदरस्तानुवाच । भद्राः ! अहं भीमसेनः पाण्डुपुत्रो युधिष्ठिरस्य च लघुभ्रातास्मि । कृष्णायाः कृते पद्मान्येता न्याहर्तुमत्र समायातः । क्षत्रियोऽह मतः कथं याचे । किं यूयं न जानीथ । यत् क्षत्रिया यांचास्वशिक्षिता भवंति ? अपरं च भूधरकंदरे जातेयं नलिनी सर्वसाधारणा वारांगनेव कस्य निजपरिग्रहोस्तीत्यभिधाय पद्मनाललतालक्ष्यपुलकाकारकण्टकाम् स्रस्त

हंसालिरशनां तां सरसीमा लिलिङ्ग । अथ कांचनपत्राणि हर्तुमुद्यतं तं वीरं दृष्ट्वा सहसा सयत्ना राक्षसाः क्रोधं कृत्वा तं समुपाद्रवन् । ततस्ते शरशक्त्यसितौमरैर्मारुति मदृश्यं कृत्वा स्वपराक्रमं दर्शयामासुः । एवमालोक्य भीमसेनः कार्तस्वराङ्गदां गदां समादाय सुचिरात् कृतान्तनगरे राक्षसागमं चक्रे । ततः कुबेरकिंकराः स्वसैन्यं कलाव शेषं विज्ञाय पुनर्दाशरथिभ्रमं कर्तुमारब्धाः । रीत्यानया हतशेषेषु कैलासकंदरेषु च लीनेषु तेषु मारुतिस्तत्पयः पीत्वा कमलानि जहार । अत्रान्तरे केचित् धनदसेवकास्ततो गत्वा पुण्यजनेश्वराय स्वपराभवं निवेदयामासुः । तच्छ्रुत्वा भीमसेनबलाक्रान्ताँस् तान् धनाधिपोऽब्रवीत् । भद्राः! भीमसेनः प्रसभं मम पद्मानि निजवद्धरतु । यतः स महाभागः स्वपुण्यैः कस्य माननीयो नास्तीति श्रुत्वा कुबेरात् क्रुद्धे रक्षोगणे निवृत्ते गृहीतकमलो भीमः पुष्करिणीतटे विजहार । अत्रान्तरे युधिष्ठिराश्रमेऽपि संग्रामसूचको घोरनिर्घातोऽभवत् । ततः शंकितो राजा व्याप्ताम्बरं तमो वीक्ष्य क्व भीम इति पप्रच्छ । अथ द्रौपद्या विनिवेदितं तद् व्यवसितं श्रुत्वा तूर्णं सानुजो धनदाचलं प्रतस्थे । ततः सानुजेन घटोत्कचेन विहायसोह्यमानः कृष्णासखो राजा लोमशप्रमुखैः सार्धं ताम्पुष्करिणीमवाप्य हत राक्षसं भीमं च परिष्वज्य निश्चिन्तो बभूव । अथ भीममुखात्सर्वं वृत्तं श्रुत्वा संजातहर्षास्ते सकृष्णाः पाण्डवा तस्मिन् कमलिनी तटे कंचित्कालं सुखेन विजहुः ।

ततो घटात्कचे निजधामयाते द्विजरूपं धृत्वा भार्गवशिष्योऽहमितिब्रुवन् जटासुराभिधः कश्चित् निशाचरस् तत्र समायातः । अथाऽसौ विश्वासं समुत्पाद्य द्विजातिभिश्च पूज्यमानः सुचिरं तत्र न्यवसत् । अथैकदा स जटासुरः सर्वायुधानि गणयित्वा मृगया रसाद् भीमे गते सानुजं सभार्यं च नृपं जहार । एवमालोक्य छद्मापहृतायुधो राजा तमब्रवीत् । वत ! त्वं कृतघ्नधौरेयोऽसि । यतोऽस्मत्तोऽभयसंश्रयभोजनान्यवाप्याऽपि द्रोहमाचरसि । किम्बहुना । हिंस्रोऽपि पालक न्न निहन्तीत्युक्त्वाऽजातशत्रुस्तत् पृष्ठे गिरिगौरवोऽभूत् । अथ यदा तस्य मनोजवागतिर्विडम्बिताऽभूत्तदा पूर्वमपक्रान्तः सहदेव स्तं बलेन निर्धूय द्रौपदीं परिसान्त्वयन् क्रोधात्तंतिष्ठेत्यब्रवीत् । अत्रान्तरे समायातो भीमस्तान् दूराद्दृष्ट्वा तूर्णमभ्याद्रवत् । ततश्चिरात् समागतं पुत्रमिव तं दोर्भ्यां निविडमापीडयामास । ततो रजनीचरस्तमुवाच । रेभीम ! संप्रति बककिंर्मीरबधादिदर्पंतेहरामीत्यभिधाय बज्रसारैर्मुष्टिभिस्तं ताडयामास । ततस्तयोर्वृक्षैः शिलाभिश्च चिरं युद्धमभूत् । अथ प्राप्तावसरो भीमस्तद्वपुर्विनिष्पिष्य खड्गेन च तच्छिरश्चकर्त ।

एवं समनोरथे कृतान्तातिथितां याते राक्षसे सानुजो युधिष्ठिरो वदर्याश्रममगात् ।

ततोऽर्जुनागमनोत्सुको राजा मुनिजनैः सह तत्र सप्तदशादिना निस्थित्वाऽग्रे तुहिनाचलं विलोकयितुमयासीत् । सोऽथ राजर्षिवृषमर्वाणमवाप्य स्वकीयं विपुलपरिच्छदं च न्यासं तस्मै विनिक्षिप्य च सिद्धांगनाचरणालक्तकांकितं गन्धमादनमयात् । ततस्तत्रत्य शोभां विलोक्य भीमं राजोवाच । वत्स ! पश्यैताः किन्नर्यः पाणिनालम्ब्य मंदाकिनी तीरचारुरत्नशिलातटे सुमधुराणि गीतानि गायंति । अत्रावलोकय । ललितालका विद्याधरांगना मंदारामोदशालितो मरुतः सेवंते । अथाऽन्येद्युः सानुगो राजा राजर्षेर्ार्ष्टिषेणस्याश्रममवाप्य तेन पूजितस्तत्राऽतिष्ठत् । तत्रैकदा पार्षती विचित्ररूपाणि पुष्पाणि दृष्ट्वा हर्षाद् भीमं विजने प्रोवाच । आर्यपुत्र ! श्रूयतेऽस्य पर्वतस्य परपार्श्वं रम्यतरमस्ति । मम चेतस्तद् द्रष्टुमुत्कण्ठते । पूर्वमत्रत्यराक्षसमण्डलं त्वं जहि । पश्चादहं समेष्यामीति प्रियावचनं समाकर्ण्य सायुधो भीमो धनदपालितां दिशं प्रययौ । ततः स सरत्नतोरणवर्ती स्फारस्फटिकमन्दिरामलकां दृष्ट्वा शंखशब्दं विदधे । तच्छ्रुत्वाऽऽश्चर्यान्वितान् गुह्यकान्पुरस्कृत्य क्रुद्धा राक्षसा युद्धार्थमुपस्थिताः । ततः क्रूरकर्मभिस्तैः सह पुरा खरप्रभृतिभिर्दाशरथेरिव तुमुलो विमर्दोऽभवत् । तत्र भीमभुजोत्सृष्टदारुणभल्लैः पिशिताशिनां वपूंषि क्षिप्रं क्षतांगान्यभवन् । ततस्ते भयपीडिता कुवेरमित्रं मणिमन्तं शरणमगमन् । तान् वीक्ष्य सोऽब्रवीत् । वीराः ! मा नश्यत । मानिनां युद्धे मरणं श्रेयः किन्तु पलायनं न वरम् । लोकेऽस्मिन्नायूंषि तु तरंगलोलानि परं त्वेका कीर्तिरेव कल्पान्तसाक्षिणीत्यभिधाय क्रुद्धो मणिमान् भीममुपाद्रवत् । अथ वृकोदरस्तद्भुजप्रेरितां वेगादापतंती गदां विशिखैर्मयूखखचितामिव विदधे । ततोऽसौ राक्षसो भीमाय भुजगीमिव शक्तिं चिक्षेप । कौंतेयो दूरमुत्प्लुत्य तां निस्सारां चकार । एवमालोक्य मणिमान् शूलं प्राक्षिपत् । भीमसेनस्तं दलशो विधाय स्वगात्रं ररक्ष । ततो मारुतिः कोपं कृत्वा राक्षसाधिपतये गदां प्राहिणोत् । येन विचेतनो भूत्वा मणिमान्धरातले निपपात । अत्रान्तरे युधिष्ठिरो भीममदृष्ट्वा शंकितचेतसा तमन्वेष्टुं धनदाचलमगात् । ततो भूभृतो दूरमुल्लंघ्य पवनात्मजमदर्शत् । अथ राजा मणिमन्तं पातितमवलोक्य भीमं प्रोवाच । वत्स ! मम गिराऽस्मात् प्रयासाद्विरम । यतः प्रसंगाऽतिशयात् स्निग्धोऽपि शत्रुतामायाति । अत्रान्तरे रक्षः क्षयं विज्ञाय क्रुद्धो वैश्रवणस्तं देशमाजगाम । ततस्तं दृष्ट्वा युधिष्ठिरस्तु सादरं प्रणनाम । परं निर्व्यथो भीमो दर्पाद्योद्धुमुपस्थितोऽभवत् । ततः शांतकोपो धनेशो विहस्योवाच । वीराः ! युष्मासु मम कोपो न विद्यते । भवितव्यमेव खल्वीदृशम् । पुरा त्रिदशयज्ञे निमंत्रितोऽहं यक्षगणसमेतो यदा कुशावतीमगमम् । तदाऽयं मणिमानपि मम पार्श्वग आसीत्

प्रमादादसावगस्त्योपरिन्यष्ठीवत् । कुपितः स मर्त्यात् सानुगोऽचिराद्वधमवाप्स्यसीत्यशपत् । एतन्निकारजं पापफलं दृष्ट्वा तद्वचसा हतानीकमपि नाऽनुशोचामीत्यभिधाय कुबेरः स्वसन्तोषं प्रकटयामास । राजन् ! दर्पसाहसशीला अविचारितकारिणश्च मूढा आयुषा सहैव संपदं नाशयंति । विनयवतां समृद्धिः शुक्लपक्षीयचन्द्रकलेव विवर्द्धते । शक्रसदनात् प्राप्तास्त्रोऽर्जुनो युष्मानचिरात्समेष्यतीत्यभिधाय धनाध्यक्षस्तिरोदधे । ततः सानुगे गुह्यकाधीशे प्रयाते पाण्डवा आर्ष्टिषेणाश्रमं गत्वा कृष्णामवापुः । अथ तत्र फल्गुनासक्तचेतसां तेषां स्वल्पोऽपिकालः संवत्सरशतोपमः प्रययौ । ततः कदाचिद् विपुलतेजो व्याप्तं गगनं दृष्ट्वा यावत्ते ऊर्ध्वमवलोकयंति तावद्धनंजयो नभसोऽवतीर्य तान् समभ्यायात् । सोऽथ स्वयं शतक्रतुना पाणिना मूर्ध्निबद्धेन भास्वता किरीटेन विभ्राजितः पार्श्वमागत्य पूर्वं युधिष्ठिरमनंतरं भीमसेनं च ववंदे । ततो महेन्द्रदत्तान्याभरणानि राज्ञे समर्प्य महोत्साहानिःस्पन्दां कृष्णां प्रेमदृशा समाययौ ।

अथ हर्षसंरुद्धो युधिष्ठिरो धनंजयं परिष्वज्य शंकरदर्शनगौरवादात्मानं पवित्रं मेने । ततो विनयावनतैः पाण्डवैः सत्कृतो मातलिस् तेनैव दिव्यरथेन दिवं प्रययौ । अथ चिरसंभृतलावण्यविम्बितसुधाकरं पार्थं चक्षुषा पिबन्तः पाण्डवास्तृप्तिं न ययुः । अथाऽपरेऽन्हि शचीपतिः स्वयमभ्येत्य रचितांजलिं कौन्तेयं प्रोवाच । प्राप्तास्त्रेण तव भ्रात्रा महत्सुरकार्यं कृतम् । तद्भुजबलात्त्वं द्रुतमेव साम्राज्यमवाप्स्यसीत्यभिधाय तिरोहिते देवराजे युधिष्ठिरः पार्थं सर्ववृत्तान्तमपृच्छत् । तच्छ्रुत्वा सोऽब्रवीत् । राजन् ! निजपराक्रममाख्यातुं मे वाणी न प्रगल्भते । तथापि त्वदाज्ञया वच्मि । महाराज ! यद्यपि पूर्वमहं त्वत्तो विद्यामवाप्य गिरिराजमगाम् । परं तत्र स्वात्मनैव कालेन तपसा शवराकृतिं शंकरं दृष्ट्वा कृतार्थोऽभवम् । सोऽथ नियुद्धेन संतुष्टो मह्यं पाशुपतास्त्रं प्रादात् । ततो देवदेवे तिरोहितेऽहं लोकपालेभ्योऽपि सर्वास्त्राण्यवाप्य पूर्वजपुण्यप्रभावाद्देवराजमंदिर मवाप्तवान् । तत्र स्वयं शतक्रतुना प्रीतिपूर्वकं निजासनार्धमुपवेशितः सुरवृन्दविस्मयदोऽभवम् । अथ गच्छता कालेन वृत्रारिः सर्वाण्यस्त्राणि दत्वा मम स्कन्धे शिंजानकंकणं च करं धृत्वोवाच । वीर ! त्वमधुना शौर्यसीमांतमवाप्तवानसि । अथ देवकामार्थमितो गत्वाऽशु समुद्रकोटिनिलयान् निवातकवचान् दैत्यान् हंतुमर्हसीत्यभिधाय मातलिसखं मां निजस्यंदनेन प्राहिणोत् । ततोऽहं किरीटमक्षय्यां ज्याममोघकवचं च महेन्द्रदत्तं समवाप्य दैत्याश्रितां दिशमयासिषम् । अथ देवाः सुरारिदलनोद्यतं मां समालोक्य विपुलस्वनं शंखं मह्यं प्रायच्छन् । ततोऽहं

मयूररुचिरात्विषा रथेन जलधितटमवाप्य तत्र लंकोपमां पुरीमपश्यम् । अथ नवनीरदोपमं शंखनिःस्वनं श्रुत्वा निवातकवचा माम् वज्रिणममन्यन्त । ततः कृष्णखड्गा महाचापाश्चते रथानारुह्य मामुपाद्रवन् । अथ गाण्डीवप्रेरिताः शराः सायं विहंगा वस्तुं वनपादपानिव तानविशन् । ततो ममार्धचन्द्रकृत्तानि सुरवैरिणां वक्त्राणि कालपक्वमहीरुहफलानीव पेतुः । अथ ते त्रैलोक्यमोहिनीं मायां प्रसारयामासुः । यया विज्ञोऽपि मातलिमूढतामयासीत् । ततस् तमोनिबद्धदिक्चक्रास्ते शैलशस्त्रास्त्रवर्षणै र्जगच् चिरं संहाराकुलितं चक्रुः । अथाऽहं महास्त्रैर्विपुलां तन्मायां विदार्य हेलयैव शरैस्तेषां जीवतावचयमकार्षम् । ततो मातलिप्रेरिता हयास्तेषां गिरिसन्निभानि शरीराण्युल्लंघ्य दिवमुत्पेतुः । ततो मार्गे किमेतदितिपृष्टो मातलिः प्रोवाच । एतद्धिरण्य-पुराभिधं विचित्रं कामगं पुरं विद्यते । अत्र पौलोमाः कालखंजाश्च निवसंति । ब्रह्मवर प्रभावादेते मनुष्यादृतेऽबध्याः । निशम्यैवमहं शंखमधमम् । तच्छ्रुत्वा विपुलक्रोधास्ते मां समभ्याययुः । अथ तैः समुत्सृष्टां शस्त्रवृष्टिं धर्तुमहंसमर्थो नाऽभवम् । ततोऽहं पुरारिं प्रणम्य पाशुपतास्त्रं गांडीवे समयोजयम् । अथो नानारूपा रुद्रगणाः समुद्भूय तत्र-त्यान् राक्षसान् स्मृतिमात्रावशेषान् चक्रुः । एवं विजयमवाप्य विचित्ररत्नभवन प्रभादीप्तामरावतीमहं प्राविशम् । ततो नूतनातंकमवाप्य विकीर्णहाररचना स्तत्रत्यास्तरललोचना मान्द्रष्टुमुत्सुका बभूवुः । ततः शक्रसूतेन पूज्यमानोऽहं सुरालयं गतवान् । तत्र वृत्रहा निहताराति मां समालोक्य हर्षनिर्भरो मह्यमिमां कांचनीं मालां प्रादात् । अथ सहानुजो राजा विजयेन प्रोक्तं वृत्त माकर्ण्य प्रहर्षोत्फुल्लनयनो विपुलविस्मयमगात् । ततः स तानि महास्त्राणि राज्ञे दर्शयितुं समुद्यतं जयं विज्ञाय जगद्धितैषिणो देवा नभस्तलात् प्रोचुः । पार्थ ! प्राप्तान्येतान्यस्त्राणि बालवत् प्रयोक्तुन्नार्हसीति निशम्य देवादेशं धनंजयोऽनवसरेऽस्त्रप्रदर्शनविचारं त्यक्त्वा कृतार्थो बभूव । एवं नानोपाख्यानानि वर्णयित्वा पाण्डवानामंत्र्य च देवर्षिर्लोमशो दिवं प्रायात् । अथ पंचभिर्वर्षैं प्राप्तास्त्रे निवृत्ते पार्थे युधिष्ठिरो वर्षद्वयावशिष्टं वनवासं च विज्ञाय काम्यकं गन्तुमुद्यतोऽभवत् । तत आर्ष्टिषेणं समामंत्र्य हिमालय कटकस्थविशाखायूपमदर्शत् । अथ सानुजस्तत्रत्यसिद्धभूमिषु वत्सरं विजहार । अथै कदा भीमो मृगयार्थं परिभ्रमन् विषवेगोल्वणाननं रुद्धभूधरकंदरं पन्नगं च दृष्ट्वा चित्रन्यस्त इव क्षिप्रं निःस्पन्दोऽभवत् । ततोऽसौ भोगी भोगेन भीममावेष्ट्याऽतिष्ठत् । अथ बलिना तेन निरुद्धो विषादमवाप्य भीमस्तमुवाच । सर्पराज ! त्रैलोक्य कवली

कारश्चतुरो भगवान् काल एव किं वपुषाऽनेन स्वय मायातः। लोकेषु त्रिषु यस्याग्रे मद्भुजगौरवं कुंठतां याति। तमन्यं कालादृते नाऽहं पश्यामि। अहोनु धार्तराष्ट्रमुकुल वेधसा मम मातुस्ते मनोरथा वृथैव विहिताः। निशम्यैवं भीमवचः स्वयमजगरः प्रोवाच। दिष्ट्याऽद्य धात्रा शापबद्धस्य मे भोजनं त्वं समादिष्टोऽसि। अत्रान्तरे दुर्निमित्तानि दृष्ट्वा भीममन्वेष्टुं तं देशं राजाऽऽजगाम। सोऽथ सर्पवेष्टितमार्तनादपरं च भीमं दृष्ट्वा गद्गदगिरा कोऽसीति भुजंगमं पप्रच्छ। तच्छ्रुत्वा सोऽब्रवीत्। पार्थ! नहुषाख्यनरेश्वरोऽहमगस्त्यशापान्महीधरेऽस्मिन् व्यालतामिमां प्राप्तवानस्मि। षष्ठे कालेऽद्य धात्रा मे भोजनार्थं वृकोदरोऽयं सृष्टः। यदि प्रश्नान् विवृणोषि। तदा त्वेनं मुंचामीतिवाक्यं निशम्य राजोवाच। ब्रूहि। तदाकर्ण्य सर्पोऽपृच्छत्। कोऽसौ ब्राह्मणः? राजाऽब्रवीत्। लोके भवविभ्रमं समानं विज्ञाय वृत्तमहत्वं च शिरोधार्य कथयामि। यस्मिन् तपःसत्यशीलदयाक्षमादिगुणास्संति स ब्राह्मणोऽस्ति। ततः सर्पोऽवदत्। यदि ते गुणाः शूद्रेऽपिस्युस्तर्हि कोऽ सा विति प्रश्नं श्रुत्वा राजाऽवदत्। यदि सत्यादयो गुणाः शूद्रे भवेयुस्तदा स ब्राह्मणो ज्ञेयः। तद्रहितो द्विजश्च शूद्रोऽभिहितः। भुजंगमोऽन्वयुंक्त। यतात्मभिः किंवेद्यम्? राजा जगाद। सुखदुःखोज्झितं पदम् वेद्यमभिधीयते। ततो राजाऽपि तमपृच्छत्। नागेन्द्र! धर्मः कः? सोऽब्रवीत्। यो लोक परलोकयोः साधकः स धर्मः। अथ राजाऽवदत्। कः स्वर्गः? सर्पोऽवदत्। दुःखाऽसंभिन्नं सुखं स्वर्गः। राजा पप्रच्छ। कः स्वर्गाधिकारी? सर्पोऽवादीत्। यः सत्यमवलम्बमानः सुपात्राय यथाशक्ति साहाय्यं वितरति प्रियंवदति दयाशीलश्च भवति सः स्वर्गं लभते। महामुनिभिर्देशकालविभागेन गुणानां सारफल्गुता निगदिताऽस्ति। ततो राजोवाद। सर्वज्ञ! मनसो विषये युगपज्ज्ञानं कथं न सिद्ध्यति? तदाकर्ण्य स प्रोवाच। राजन्! ईश्वरेणात्मना प्रेरितं मनः क्रमेण बुद्ध्या विषयान् पृथग् गृह्णातीत्युक्त्वाऽजगरो राज्ञे निजां कथा मावेद्य त्वद्दर्शनावधिर्मे शाप इति निगद्य च कृतार्थो बभूव। ततो विनष्टशापोऽसौ भीमं परित्यज्य भुजंगमतया रहितो भूत्वा च नाहुषेणैव वहुधा दिवमाचक्रमे। चंद्रवंशेऽयं प्रथितयशा राजा बभूव।

अथ हृत्पुष्टस्मरधूमैरिवावृतो विप्रयुक्तवधूकाल इव जलदलांछनः कालः समाययौ। तत्र तरलताराभिर्धाराभिर्घनपयोधरा दिशो बभुः। ततः शनैरनिलेन घनघटापटले छिन्ने चन्द्रानना हंसहासा शरदद्दश्यत। अथ पार्थाः सारस्वतेषु पुलिनेषु विहृत्य मत्तालिमण्डलानिमीलितफुल्लमालं काम्यकवनं विविशुः। अत्रान्तरे मार्कण्डेयादि

महामुनिभिरभिनंद्यमानो भगवाँन् लक्ष्मीसखः पार्थानाश्वासयितुं पाण्डवाश्रममभ्याययौ । ततः कृतकृत्यो राजा कृष्णानुमतिमाश्रित्य नारदादिमहामुनिभिः सह पुरातनकथाः श्रोतुं मार्कण्डेयमुनिमुपागमत् । स सत्संगसमयोऽतीव रम्य असीत् ।

ततस्तं प्रणिपत्य । राजोवाच । भगवन् ! धन्योऽहम् । येन सकृष्णनारदो भवान् परमेष्ठिसमो दृश्यते । महामुने ! दुराचारा धार्तराष्ट्रा स्तु विपुलैश्वर्यशालिनो वयं च वनेचराः सीदामस्तस्मान्निरर्थकं कर्म मन्ये । अथवा सर्वजंतुभिः स्वकृतं कर्मैव भुज्यते । परमेश्वरः सर्वं कुरुत इति श्रुतिस्तु विफला प्रतीयते । यदि देहिनां प्रविभागेन हटाद्वा कर्म फलति तर्हि देहमुत्सृज्य यातानां तत्कर्म क्व नु तिष्ठतीति राज्ञा पृष्टो मुनिराजोऽभ्यभाषत । राजन् ! पुरा प्रजापतिर्विगतकल्मषाः प्रजा विसृज्य निश्चिन्तो बभूव । अथ गच्छता कालेन सः प्रजासार्थो मायाभेदविकल्पोत्थशुभाशुभफलोदयोऽभवत् । तस्मिन्सर्गे प्रजातानां देहिनां निजकर्मतो हठाद्दैवाच्च सततं फलसंततिर्दृश्यते । लोकेऽस्मिन् शरीरिणां कर्म छायेवानुगतम् । देहान्ते तेनैव सौरभेणैव वासना याति । यथा त्वया दृष्टा स्तथा मयापि पापाः सुखिनोऽवलोकिताः । यतः कर्मविपाको विचित्रोऽस्ति । सुखिनामयमेवलोकस्तपस्विनां च परएव । असतां नाऽयं न च परः । यज्वनामयं तथा च परः । एतदाकर्ण्य ब्राह्मणप्रियो राजा मुनिं विप्रमाहात्म्यं च पप्रच्छ । तच्छ्रुत्वा मुनीश्वरोऽब्रवीत् । पुरा हैहयो नाम राजतनयो वने मृगाशया बाणेन कृष्णाजिनधरं मुनिसूनुं जघान । ततः स तं निहतं विलोक्य ब्रह्महत्याभयाकुलो बंधुभ्यः सर्वं विनिवेद्य तार्क्ष्यमुनिमुपाययौ । सोऽथ स्वकिल्विषं कथयित्वा यावत् क्षमां याचते । तावत् तस्यैव पुरस्तं हतमुनिसुतंददर्श । अथ तार्क्ष्यः सास्मितोऽवादीत् । राजपुत्र ! तपोबलात् त्वया हतोऽयं मत्सुतस्तत्क्षणं जीवितमवाप्याऽत्र सुखेनास्ते । विस्तरेणकिम् । ब्राह्मणप्रियकामानां सदा द्विजशेषाशिनां सत्यवादिनां च व्रतिनां मृत्युभयं नास्ति । निशम्यैवं मुनिवचनं हैहया विस्मय मवाप्य ब्रह्मवादिनो ब्राह्मणान् प्रशंसन्तो गृहान् प्रययुः किम्बहुना । राजन् ! ब्राह्मणमहिमाऽतीव विलक्षणोऽस्ति ।

पुराऽत्रिर्धनाशया वैन्यराजर्षेरश्वमेधसभां गत्वा तुष्टाव । राजन् ! त्वम् प्रथमः प्रजापतिः । त्वं महेन्द्रस्त्वं वरुणस्त्वं यमस्त्वं सूर्यस्त्वमेव चन्द्रोऽसीति स्तुतेऽत्रिणा वैन्ये तत्रस्थो गौतमः प्रोवाच । अहोनु ! धनकामानां चाटुप्रगल्भता मिथ्या ! वैन्योऽयं प्रजापतिः कथं भवितुमर्हति । निशम्यैवं गौतमवाक्यमत्रिः पुनः प्रोवाच । विप्र ! क्षणं प्रतीक्षस्व । मुनिसंसदि मुनीन्द्रसनत्कुमारो निर्णयतु । तच्छ्रुत्वा धर्मज्ञनरपतिस्तुतौ

न दोष इति सनत्कुमारोऽब्रवीत् । यतो राजा पालनात् प्रजापतिरैश्वर्यादिन्द्रो विभवदनाद्वरुणो नियमनाद्यमः प्रकाशाद् भास्करश्चमत्काराच्च चन्द्रोऽभिधीयते । तत स्तत्र विपुलः साधुवादोऽभवत् । अथ राजाऽपि याचकाशापूरणं स्वधर्मं मत्वा तस्मै प्रचुर धनं प्रादात् । ततो लब्धधनो ब्राह्मणस्तदपत्येभ्यो वितीर्य स्वयं तपोवनं जगाम ।

अथैकदा ब्राह्मणाग्रणीस्तादर्यस्सरस्वतीमुपसृत्य धर्मफलं पप्रच्छ । तदाकर्ण्य साऽब्रवीत् । विप्र ! सतताध्यायी ब्रह्मज्ञो नियतः शुचिर्यज्वा प्रदाता च स्वर्गे हेमपद्मासुवापीषु तथा कल्पवल्लीवनेषु सुराङ्गनायुतैः सुरगणैश्च स्तूयमानो मुदं प्रयाति । धेनुदाता ततोऽधिकं फलमवाप्य हेलया सप्तकुलानि संतारयति । वृषदाता नरो दिवाकरलोकमेति । वस्त्रं दत्वा चन्द्रलोकं प्रयाति । हेममहीकन्यादानैश्च मनुजो देवतुल्यत्वमाधिगच्छति । शुचिकामा बन्हिपुरोगमा देवा नाशुचे र्दत्तं गृह्णंति । देवताः श्रोत्रियं शुद्धाचारं विद्वांसं च सदा वाञ्छंति । अहमग्निहोत्रात् समुत्पन्ना ब्रह्मवादिनां माता लोके समस्त संशयाञ्छेत्तुमत्राऽवतीर्णाऽस्मि । तेनैतन्मया कथितम् । वाङ्मये मन्मध्ये सूरयः परं पुराणममलं पदं पश्यंति । वारिमये च सोदका महानद्यश्च परमानंदमधुनिष्यन्दनिर्भराश्च सरन्ति । एवं द्विधैव सरस्वती ताप पाप निवारिणी प्रथिता ।

श्रुत्वैतद्राजा मुनिराजं मानवचरित्रमपृच्छत् । सोऽब्रवीत् पुरा बदरिकाश्रमे ब्राह्मणो वैवस्वतमनुस्तीव्रतपश्चक्रे । अथैकदा चीरिणीतीरे भयात् कम्पमानो मत्स्यः कृपानिधिं तमभ्येत्य प्रोवाच । दयालो ! बालं माम् विपुला मत्स्याः खादंति । तस्मान्मां त्रातुमर्हसि । तच्छ्रुत्वा करुणाकुलो मुनिः स्वच्छेऽनएडजेंभसि तं चिक्षेप । ततः कालेन तत्र वृद्धिमुपागतं तं वापीं नीत्वाऽनंतरं सुवाहिनीन्निनाय । अथ तत्र विपुलाकारं वीक्ष्य मनुस्तं समुद्रे प्राक्षिपत् । ततः कदाचित् तत्रस्थो मत्स्यस्तमभाषत । महात्मन् ! अयमेकार्णवीभवद्विश्वः कालः समुपस्थितः । सर्ववीजभृता त्वया सप्तर्षिभिः सह नावि स्थातव्यम् । प्राप्तेऽवसरे शृंगवानहं तत्रस्थितं त्वां समेष्यामीत्यभिधाय तिरोदधे । अथ मुनिरपि तत्कथनं विचिन्तयन् स्वाश्रममयासीत् । ततः समुल्लसत्स्फारतरंगगणभीषणे जलीभूतपुरग्राम गिरीन्द्रभुवने च कालेन शांतेषु सलिलेषु मनुस्तपसैव प्रजाः ससर्ज । ततो राज्ञा कथं त्वया सर्गान्ते सर्वं दृष्टमिति पृष्टोऽनेकयुगविध्वंससाक्षी मुनिरुवाच । येयं किल द्वादश साहस्री युगसंख्या श्रुता । तत्सहस्रं ब्रह्ममहस्तदन्ते च तमो वर्तते । ततो विपर्यये प्राप्ते प्रलये जगद्बहुसूर्यार्दितं ससागरक्षितीश्वरं भस्मसाद्याति । लोके वातनिर्दारिते पुष्करावर्तकावृते शनैरेकार्णवी भूते स्वयं विश्वसृजि च सुप्तेऽहं पुरा तस्मिन् सलिलसंप्लवे

निरालम्बो भ्रान्त श्रान्तश्च न कुत्रचिद् विश्राम्यामि । ततो न्यग्रोधशाखाग्रपर्यन्तस्थितमीश्वरं पद्मपत्राक्षं बालमुकुन्दमपश्यम् । अथ कृपया वदने प्रवेशितोऽहं विव्हलतामेत्य तज्जठरे सनदीसागराम्बरामद्राक्षम् । किम्बहुना । तत्र पद्मभुवा सह चतुर्विधसर्गमपि दृष्टवान् । राजन् सोऽयं चतुर्भुजो देवः केशवस्तव सम्बधीति मुनिवचनं समाकर्ण्य सर्वे तं श्रीकृष्णचन्द्रं पुनः पुनर्ववंदिरे ।

अथ महीभुजा पृष्टो मार्कण्डेयो भावि कलियुगविचेष्टितमब्रवीत् । कलौ ब्राह्मणा वेदविद्यां विहाय लुप्तक्रियाचाराः सर्वभक्ष्याः शूद्राणामपि च दासतां यास्यंति । ब्राह्मणेति समाहूता लज्जा मवाप्य क्रुद्धा भविष्यंति । येन केनाऽपि प्रकारेण धनाशया शूद्रेभ्यः स्पृहयिष्यंति । दस्युचरिता राजानो दुर्बलार्दने बलिनस्तत्परित्राणेचाऽसमर्था भूत्वाऽल्पसंपदो भविष्यंति । राजवर्गिणः प्रभुतामवाप्य साधूनुत्सादयिष्यंति । नृपतिचेटका अमंदनर्म चटुका दुष्टचित्ता दुर्व्यसनपोषकाश्च भविष्यन्ति । राजवल्लभाः प्रजाकष्टं विस्मृत्य परधनजनशरीराणि बलादपहरिष्यंति । कायस्था वाचा धर्मसंकोचकारिणः कर्मणा चोत्कोचजीविनो भूत्वा मूषिका इव दमां सुषिरां करिष्यंति । वैश्या दिनतस्करतामवलम्ब्य कूटविक्रयातिकुसीदग्रहणाभ्यां सहसा वृद्धिमवाप्स्यंति । शूद्रा अपि मिथ्या ब्रह्मवादिता मवलम्बमाना ब्राह्मणैः सह संबन्धान् कृत्वा स्वाधिपत्यं दर्शयिष्यंति । केचिच्छूद्रा ग्रामपुराधिपतामवाप्य धर्मसंदेहे निर्णायका मंत्रतंत्र दीक्षागुरवश्च भविष्यंति । केचिद् वृषला जपव्रतधराः सदा स्रुक्स्रुवपाणयश्च मंत्रपूर्वकं हविर्हुताशे प्रक्षेप्स्यंति । वशीकरणसादराः शिष्यवित्तापहारकाः पानासक्ताश्च येषां गुरवो भविष्यन्ति । मुग्धा लोकाः पाखण्डिभ्यो दीक्षां ग्रहीष्यंति । वृद्धा लब्धसर्गा, बालाः सुरतलंपटा, दीर्घरोगा मुनयो, निरामयाः पापशीलाश्चटीसक्ताजटाभृतः, श्रमणाश्च कलात्रिणो मिलिष्यंति । नार्यस्त्यक्तगृहकृत्या राजमार्गावलोकिन्यः पत्यौ विद्वेषमेष्यन्ति । विटानालोक्य सोत्सुकाश्च भविष्यंति । कन्या बलाद् बन्धुबधूरोदनारब्धमंगलाः शिशवश्चाकाल कुसुमाकारा व्रतशालिनो भविष्यंति । चिकित्सका व्याधिसंधारणोपायजीविका हि शास्त्र विधिमुत्सृज्य कृतान्तकिंकरा इव विचरिष्यंति । यत्र यत्र धूमस्तत्र तत्र बन्हिरेतावति कृतश्रमाः क्षणिकविज्ञानवादिनो विद्वत्पूजामवाप्स्यंति । यज्ञक्लेशासहिष्णवो यज्ञदान व्रतसत्यानि मिथ्योपायैः प्रकल्पितानि विधास्यंति । पथि तृष्णार्ताय ये पानीयमपि न दास्यंति । तेभ्यः को नाम क्षुधितो जनो भोजनं लप्स्यते ? युगविपर्यये प्रजा भ्रष्टाचारा भविष्यंति । यत्र नृणां मिथो भार्याविनिमयो मैत्री मुग्धद्रोहो विदग्धता सुमनपाप

पराक्रमो भविष्यति । यदि कश्चिद् दैवाद् धर्मपरो भवेत्तर्हि तेनैव दुर्निमित्तेन तस्यायुः क्षयो भविष्यति । भाण्डजीविनो द्रव्येषु चतुर्गुणे दाने प्ररूढेदत्तशुल्का एव कुमार्गे यास्यंति । लोलुपा न्यासापहरणदक्षाः स्वान्नेषु मंदरुचयो दीप्तवन्ह्यश्चपरान्ने आकंठमुदरस्फोटं भोद्यन्ते । दशवत्सरा मनुजाः सप्तवर्षासु नारीष्वपत्यानि जनयित्वा ह्रस्वा ह्रस्यबलायुषश्च भविष्यंति । ततः सर्वजगदमर्यादं विध्वस्त निखिलक्रियं म्लेच्छसमाकीर्णं च भविष्यतीति किल्विषैराकुले परां कोटिं च याते कलौ शम्बलग्रामे श्रीद्विजेन्द्रः कर्कितनयो विष्णुयशा इति विख्यातः प्रादुर्भूय म्लेच्छानुत्साद्य च भुवं प्रत्यानयिष्यति । ततो मधुमासवत् पुनः कृतयुगे प्रवृत्ते प्रफुल्लधर्मकुसुमा मही सर्वगुणाढ्या भविष्यति । प्राणिनश्च सर्वे सुखमवास्यंति ।

राजन् ! बुभूषता त्वया भूमिदेवाः सदा पूज्याः । तथा बालदुर्बलानाथाश्च सततं रक्षणीयाः । भगवान् विप्रः पावकः क्षणादरिं दहति । तस्मात्कदाचिद् विप्रावमाननां मा कृथाः । पुरा सूर्यवंशे ससागरमहीशास्ता परीक्षिन्नाम राजा बभूव । स मृगयारसिकः कदाचिद् वने जवातुरंगेन दूरं हृतोऽतिक्लममयासीत् । सोऽथ तत्र सरसि स्नात्वा गतश्रमः पल्लवासने समुपाविश्य विलोलहंसै र्व्यजनै र्वीज्यमान इव व्यराजत । अत्रान्तरे बालानिलालोलवेणीवलयशालिनी पुष्पोच्चयाकुला गायंती च काचित्कन्या सहसा तीरमवाप्याऽतिष्ठत् । सोऽथ मदनोद्यानसुंदरीन्तां दृष्ट्वा मन्मथ सायक समाकृष्ट स्तामुपसृत्य भजमामिति प्रोवाच । ततो नवप्रणयशालिना तेनोक्ता लज्जानतविलोचना सा प्रत्यवदत् । राजन् ! सुरस्त्रीचित्तविलोभनं त्वां निर्जन देशनिवाससमये न तु सेवितुं शक्नोमि । निशम्यैवं तथेत्युक्त्वाऽतिसंतुष्टो राजा तया सहितः स्कन्धावारमवाप्य निजपुरं जगाम । ततः स प्रधानामात्यकल्पिते देवोद्याने तया सह रममाणो बहुतिथं कालं क्षणवद् यापयामास । अथैकदा सा तस्मिन् केलिकानने कलहंससितास्मितां सरसीं दृष्ट्वा पतिनिदेशेन तत्र स्नानुमवतीर्णा ममज्ज न चोन्ममज्ज । तत स्तद् विरहोदग्रवन्हिव्याप्ततनू राजा निस्सारितजलामपि वापीं विधाय मण्डूकांस्तु ददर्श । परन्तां न प्राप । सोऽथ शोकाविष्टस्तैरेव गृहीतां तां मत्वा सर्वमण्डूक निःशेषबधनिश्चयं चकार । तत स्तद्गिरा सेवका यदा जलतीरेषु सर्वमण्डूकमण्डलं जघ्नु स्तदा कुलक्षयार्तो मण्डूकराजस्तापसविग्रहं धृत्वा नृपमभ्येत्य च सर्वजलौकसां जीवरक्षां ययाचे । एवमभ्यर्थ्यमानोऽपि नृपतिर्यदा जीवहिंसातो न विरराम । तदा मण्डूकपतिर्विषण्णो भूत्वा राजानं प्रोवाच । महाराज ! सा

सुशोभनेति विख्याता मदीया कन्याऽस्ति । तया के न विडम्बिता इति निगद्य राजसमक्षं तामाहूयाऽवदत् । पुत्रि ! विद्युच्चपलया त्वया विवशोऽयमायासितः । अयि ! हृतात्मनो भूमिपालान् वंचयित्वा त्वमब्राह्मण्यं प्रदर्शितवत्यसि तस्तवसुता अनृतव्रताभविष्यन्तीत्यभिधाय तां तस्मै नरेन्द्राय प्रादात् । ततस्तस्मिन् स्वालयं गते प्रमदनिर्भरो राजा तां चन्द्रवदनामवाप्य पुनः सुधयैव नवीभूतं जगदमन्यत । अथ गच्छता कालेन तस्यां तस्य नृपते र्दलबलशलाश्चेति पितृतुल्यपराक्रमास्त्रयस्सुता बभूवुः । ततो राजा परीक्षित् संप्राप्तयौवनं शलं राज्ये धृत्वा तपश्चर्यार्थं तपोवनं जगाम । अथ कदाचित् संप्राप्तराज्यः शलो रथमारुह्य मृगयार्थं वनमयासीत् । तत्र मृगमनुसरँस् तूर्णं प्रयाहीति सारथिमवादीत् । निशम्यैवं सूतः प्रत्यवदत् । राजन् ! नैषमृगस्त्वया प्राप्तुं शक्यः । यतोऽयं मृगो याम्याश्वावप्यतिक्रम्य वर्तते । तच्छ्रुत्वा कौतुकाविष्टो राजा तमपृच्छत् । सारथे ! तौ हयौ क्व कस्य च विद्येते । सत्यं वदेत्याग्रहेण पृष्टोऽसौ राज्ञा भीतः शनैरुवाच । महाभाग ! तौ मनोजवौ हयौ वामदेवमुनेराश्रमे निवसतः । सोऽथ गत्वा मुनिराजमश्वयुगलं ययाचे । तच्छ्रुत्वा मुनिः कृतकार्येण दातव्याविति कथयित्वा तस्मै प्रादात् । सोऽपि मुनिदत्तौ हयौ रथे योजयित्वा ततः प्रतस्थे । अथ संप्राप्तहरिणो राजा ताभ्यां निजां पुरीमवाप्य राजार्हावेतौ न मुनियोग्याविति मतिमकरोत् । अथ कदाचिन्मुनिविसृष्टवामदेवशिष्येणैत्य याचितो विभवमोहितो राजा यदा लोभमवलम्ब्य तुरगौ न ददौ । तदा क्रुधाज्वलन् स्वयं वामदेवः समभ्येत्य तमुवाच । राजन् ! तुरगौ प्रयच्छ । एतदाकर्ण्य राजोवाच । ब्राह्मण ! त्वां शिक्षिता वृषभाः किंवा मद्वितीर्णरासभा वहन्तु । तौ हयौ तु राजयोग्यौ न ब्राह्मणार्हाविति ब्रुवाणं नृपतिं मुनिक्रोधसमुद्भवा निशाचरा जघ्नुः । एवं शलेहते मलिनाशयो दलो राजा बभूव । ततो मुनिः कालेन तमपि समुपसृत्य हयावयाचत । तच्छ्रुत्वा स याचमानाय तस्मै धनुराकृष्य विषदिग्धं शिलीमुखं प्राहिणोत् अत्रान्तरे ।

स एव शरो वामदेवगिरा प्रतीपं गत्वा दलस्य बल्लभं पुत्रमवधीत् । एवमन्तःपुरे श्येनजिति राजकुमारे हते नृपपत्नी तमेव मुनीश्वरं शरणं प्रायात् । सोऽथ पुनर्द्वितीयं सायकमुत्स्रष्टुमुद्यतं दलं मुनिर्दृष्ट्यैव चित्रार्पितमिव चकार । ततो ब्राह्मणकुलजातया राजपत्न्याऽनुनयैः प्रसादितो मुनी रुषो विरराम । अथ तयाऽर्थितो महात्मा राज्ञे वरं प्रादात् । तेन राजा ब्रह्मदोषोद्भवपापान्निवृत्तो बभूव । ततो नम्रशिरसा राज्ञा पूजितो मुनिस्तद्दत्तौ तौ हयौ समवाप्य तद्विसृष्टः स्वाश्रमं न्यवर्तत । राजन् ! एवं ब्राह्म-

कोपानलैर्नृपसंपदो वनानामिव मुहूर्तेनैव स्मृतिशेषा विधीयंते ।

अपि त्वत्तोऽपि कश्चिद्दीर्घायुरिति महर्षिभिः पृष्टो मार्कण्डेयोऽभ्यभाषत । आसीत्पुरेन्द्रद्युम्नाख्यो राजा । स यज्ञात् स्वर्गमवाप्यापि कालेन क्षीणपुण्यो दिवोऽपप्तत् । सोऽथ जंगमो मेरुरिव स्वर्गच्युतः कालेन गुल्फप्रमाणा ह्रस्वत्वमागताः प्रजा विलोक्य दिक्षु वृद्धान् स्वकीर्तिं पप्रच्छ । अपि वः कश्चिदिन्द्रद्युम्नमहीपतिं स्मरति ? एतदाकर्ण्य ते तमूचुः । महाशय ! स राजाऽस्माभिः कथास्वपि न श्रुतः । तच्छ्रुत्वा दुःखितः स पार्थिवोऽभ्येत्य मामप्यपृच्छत् । मुने ! कच्चिन्मामिन्द्रद्युम्नं महीपतिं जानासि ? निशम्यैवं भूपवचनं तमहमभ्यधाम् । राजन् ! सप्तकल्पप्रमाणोऽपि त्वामहं न स्मरामि । अस्ति हिमवत्कंदराश्रयो मत्तोऽपि दीर्घायुः प्राकारकर्णाख्योलूकः । सचेत् त्वां जानाति । परं तद्गिरिवर्त्म सुदूरं कथमहन्त्वां दर्शयामीति मयाभिहितो राजा तं दिदृक्षुर्हयोभूत्वा विषमहिमवत्तटे मामुवाह । ततस्तूर्णं तमभ्येत्य पृष्टवानहम् । रजनीखग ! अपि भूपमिन्द्रद्युम्नं स्मरसि ? तच्छ्रुत्वा स्मयात् सोऽब्रवीत् । स महीपतिर्न मया दृष्टो न च काऽपिश्रुतः ? अत्राऽतिदीर्घायुर्नाडीजंघाख्यो बकोऽस्ति । जाने स तं जानाति । निशम्यैवं तेनैव सह सरस्तीरनिकेतनं गत्वा तमहमपृच्छम् । महाभाग ! इन्द्रद्युम्नाभिधो महायाज्ञिको लोकेऽस्मिन् ।

कश्चिद्राजा त्वया श्रुतः ? सोऽवदत् । वृद्धेनाऽपि मया स भूपालो नाऽकर्णितः । सरस्यस्मिन् मत्तोऽपि चिरजीवितोऽकूबराभिधः कच्छपोऽस्ति । शंके । स कदाचिद् भूमिपं जानाति । ततोऽस्माभिः सह स खेचरः कूर्मराजमुपसृत्य तमिन्द्रद्युम्नस्मृतिं प्रत्यपृच्छत् । तच्छ्रुत्वा भयविप्लुतः स कूर्मराजोऽब्रवीत् । अहं तं यज्विवरं सम्यग् जानामि । येन यज्ञचित्यासु बहुशोऽहं निषेवितः । इदमिन्द्रद्युम्नाभिधं सरो यद् गोदानवारिभिः पवित्रितमिति नाम्नि संकीर्तिते नृपयशसा सहैव विमानमादाय देवदूतः समाययौ । सोऽथ प्रोवाच । यावज् जगति यशःपीयूषालिखिताऽक्षरावली श्रूयते । तावदशरीरोऽपि पुरुषो जीवति । ततस्स सोलूकं मां स्वस्थाने विनिधाय कीर्तिपताकेन विमानेन दिवमुत्पपात । एवमाकर्ण्य विस्मितपाण्डवः कथं कुवलाश्वो धुन्धुमारत्वमागत इति मुनिं पप्रच्छ । ततो मुनिराजोऽब्रवीत् । पुरा मरुधन्वसु महामुनिरुत्तंकाभिधोऽभवत् । सोऽतितपसा देवाधिदेवं हरिं प्रसादयामास । अथैकदा भक्तवत्सलो भगवाँस् तस्मै प्रत्यक्षदर्शनं प्रादात् । ततः सोऽभिवाद्य कृतांजलिस्तं तुष्टाव । अथ ततस्तोत्रतुष्टो विश्वेशस्तं कृतकृत्यं विधाय समादिदेश । महामुने ! त्वया देवकार्यंकार्यम् । मधुकैटभपुत्रो धुन्धुस्तुत्रैलोक्यकंटकोऽस्ति । त्वमिक्ष्वाकुकुलजातेन राज्ञा तं मारयिष्यसीत्यभिधाय भग-

वान् विष्णुः सहसैव तिरोदधे । अथोत्तंको हरिं ध्यायन्नानंदनिर्भरो बभूव । ततोऽतिविपुलकाले याते सूर्यवंशे वृहदश्वाख्यो महेन्द्र कल्पो नृपो बभूव । तस्य जयन्तोपमः कुवलाश्व सुतोऽभूत । अथ वृहदश्वसूतं कुवलाश्वं राज्ये निधाय भगवदाराधनार्थं तपोवनं प्रतस्थे । अत्रान्तरे महामुनिरुत्तंक स्तं पृथुविक्रमं समेत्य प्रोवाच । राजशार्दूल ! त्वं विप्रवद् वनं गन्तुं नार्हसि । यतः प्रजासंरक्षणं नाम भूभुजां परमतपोऽभिधीयते । दिनेष्वेतेषु महासुरो धुन्धुः प्रत्यहं भुवनं क्लिश्नाति । अतः पूर्वं तं हत्वाऽनंतरं काननं व्रज । पुरा मधुकैटभौ निद्रितशेषशायिनो नाभिकमलाधूननमकुरुताम् । तदनन्तरे महापद्मे कंपमाने त्रस्ते च विधौ प्रबुद्धपुंडरीकाक्षस्तमदर्शत । ततो भगवान् प्रहस्य तौ महासुरावबादीत् । वीरौ ! युवयोस्तुष्टोऽहं मे वरं गृह्णीतम् । तच्छ्रुत्वा तौ प्रत्यवदताम् । आवांवरदौ न खलु याचकौ । यांचायोग्यास्तु भवद्विधा एव । निशम्यैवं केशवः क्षणं विमृश्याऽब्रवीत् । तथाऽस्तु । अहमद्य वराद् भवदन्तको भवेयम् । तच्छ्रुत्वा तावब्रूताम् । एवमेव । परमसंवृते निराकाशे च नौ बधोऽस्तु । अथ वैकुण्ठस्तावूर्वोश्चक्रनिष्कृत्तमस्तकौ चक्रे । तत्सुतोऽयं धुन्धुर्निर्जितनिर्जरो सरिताजलाधितटे उज्जालकाख्यदेशे बालुकान्तर्गतः शेते । सम्प्रत्यसौ तपसा त्रैलोक्यं दग्धुमिच्छति । किम्बहुना । प्रतिसंवत्सरं तत्र तच्छ्वासः प्रवर्तते । येन सप्ताहं साब्धिधराधरा धरा प्रकम्पते । धूलिमीलितं नष्टालोकं च जगद् भवति । तपस्यतो मे दिव्याश्रमोऽपि संतप्तबालुकापूर्णः शुष्कपादपश्चाऽभवत् । राजन् ! समरदुर्जयं तं दैत्यं जहि । लोकपरित्राणादन्यदिक्ष्वाकुसंततेर्व्रतं नास्ति । तच्छ्रुत्वा सोऽब्रवीत् । मुनिवर ! मा भैषीः । मत्सुतः कुवलाश्वस्तं हनिष्यसी त्यभिधाय तपोऽभिलाषी वृहदश्वो बदरिकाश्रमं जगाम । तते रणोत्सुकःकुवलाश्वः सहस्रपुत्रसमेतः सैकतप्रदेशं चखान । अथ निखातेऽब्धितटे स बलोत्कटं दैत्यं ददर्श । ततः कुवलाश्वसुतगणप्रेरितनानाशस्त्रवृष्टिभिरर्दितः स निःश्वासैरेव तत्सैन्यं क्षणाददहत् । अथ धुन्धुकुवलाश्वयोर्दिव्यास्त्रत्रासदुःस्सहं युद्धमभवत् । ततो ब्रह्मास्त्रेण राजा तं ददाह । एवं धुन्धुवधात् कुवलाश्वो धुन्धुमारसंज्ञामवाप्य कृतकृत्यो देवपूजितश्च स्वपुरीं प्रायात् ।

ततो राजाऽपृच्छत् । प्रभोऽधुना सतीप्रभावं श्रावयेति युधिष्ठिरवचनं श्रुत्वा मुनिरभाषत । पुरा कौशिको नाम तपःस्वाध्यायनिरतो ब्राह्मणो विपुलशाखिनोमूलेऽतिष्ठत् । अथैकदा तन्मूर्ध्नि विहंगशकृतः श्वेतबिन्दुर्न्यपतत् । एव मालोक्य रुषाकुलो ब्रह्मचारी यावत् कोपारुणैर्दृष्टिपातैरूर्ध्वं पश्यति तावद् वृक्षाग्रे स्थिता बलाका सहसा गतजीवता भूत्वा न्यपतत् । ततो द्विजस्तां पतितां दृष्ट्वा

पश्चात्तापाभिभूतोऽकार्यकारितां शोचन्नाऽऽत्मक्रोधं पुनःपुनर्निनिंद । सोऽथ मंदायमाने दिवसे ग्रामं गत्वा कामपि द्विजकुटुम्बिनीं भिक्षां ययाचे । ततस्तिष्ठेति तयोक्तः स यावन्मुहूर्तं विलम्बते । तावत्तस्याः क्षुधार्तपतिः समागच्छत् । साऽथ साध्वी भिक्षुकमुत्सज्य पाद्यपूजासनादिभिर्भर्तारं पर्यचरत्। ततः कृतकृत्या सा भिक्षां समादाय निर्ययौ । अथ कौशिकश्चिरप्रतीक्षणरुषा तां बभाषे । अयि गर्विते ! विना विचारं कथं मे भैक्ष्ये विघ्नं कृतवत्यासि ? यतोऽविलंबितो निषेधो भिक्षातोऽप्यधिकलाभोऽभिधीयते । त्वं ब्रह्मण्यकुले समुद्भूयाऽपि ब्राह्मणानव लिम्पासि ? किम्बहुना । मत् कोपान्महेन्द्रप्रमुखा अपि न भवंति । एवं समाकर्ण्य विनतानना पतिव्रता प्रोवाच । विप्र ! यैरम्बुधिरपेयः कृतस्तान् ब्राह्मणानहं जाने । किन्तु सर्वात्मना मे भर्ता पूज्यः । ततोऽन्यत् परायणं नास्ति । स्त्रीणां दिव्यज्ञानं तु पतिशुश्रूषयैव प्रवर्तते । द्विज ! त्वयाऽद्य क्रुधा सा वराकी बलाका दग्धा । तद्विपाश्चितस्तव सर्वथा न युक्तम् । पुसां किल शरीरस्थः शत्रुः क्रोधः । यस्य च मोहधूमचयैरन्धकारिता स मुग्धो हिताऽहिते न पश्यति । सर्वभूतेषु करुणा विषयेषु वैराग्यं शमदमादिषु च शक्ति रेव ब्राह्मण्यं कथ्यते ! अहो ! त्वं विद्वानपि धर्मतत्वनिश्चयं न जानीषे । सूक्ष्मा धर्मगति र्हेलया न ज्ञायते । आस्ति मिथिलायां पितृसेवारतो व्याधः । स यतव्रतस्ते धर्मं प्रवक्ष्यति । यन्मयोक्तं तत् क्षम्यताम् । निशम्यैवं साध्वीवचनं जातकौतुको विप्रः क्रोधं परित्यज्य मिथिलां ययौ । सोऽथ जनसंकुले पराहतमांसं विक्रीणानं तं दृष्ट्वा यावद् वक्तुमिच्छति तावद् व्याधस्तं समालोक्य सहसाभ्येत्य च ज्ञातं मयातिसादरं प्रोवाच । सखे ! सत्या प्रेषितस्त्वमिहायातोऽसि । मम गृहमागम्यताम् । सर्वधर्मरहस्यं ते वक्ष्यामि । तच्छ्रुत्वा स ब्राह्मण स्तेन सहितस्तद्गृहमगात् । ततो व्याधो विगतक्लमं शुभासनासीनं च तं जगाद । द्विज ! बहुशाखस्प धर्मस्य संक्षेपः श्रूयताम् । पितृशुश्रूषणरतोऽहमहिंसाव्रतमास्थाय निन्द्यामपि निजां वृत्तिं न त्यजामि । यः स्वधर्मपालयन् गृहाश्रमे वर्तते । स शुचिः सदाचारोऽभिधीयते । ये कृतापकारेऽप्यक्रोधाः कृपालवः सुखदुःखेषु च समानास्ते शिष्टा धर्मभाजनतां यांति । बहुशो विचार्यमाणोऽपि धर्मनिर्णयोऽयं समुपलभ्यते । यतश् चोदनाविहिते मार्गे हिंसाऽपि धर्मतामायाति । यज्ञेषु पशुर्हिंसैव परमधर्मो निगदितः । किं बहुना । पावकप्रमुखा देवा अपि सततं मांसप्रियाः श्रूयंते । लोके न्यस्तकर्माणो

यतयोऽपि पद्भ्यां चलन्तो पिपीलकादीन् मृद्नंति । शयाना वा सूक्ष्मकीटकान् निघ्नंति । ब्रह्मचारिन् ! इहलोके परत्र च मनः शुद्धिकृतं फलं कर्मव्यंजकं प्रोच्यते । कर्मणो हि मानसेन प्रयत्नेन विचित्रता भणिता । पापा धनाढ्याः साधवो निर्धनास्तुल्यनक्षत्रमंगला दृश्यंते । महाकुलेषु चौरा नीचवंशेषु च विद्वांसः प्राप्यंते । वासनाचेष्टितस्य शरीरिणः पृथक् पृथक् कर्मबंधाज्जरामरणदौर्गत्यविपदो भवंति । निर्लेपो निष्प्रपंचश्च परमात्मा न पश्यतीत्युक्त्वा विस्मयाक्रान्तं तं मंदिरान्तरं च नीत्वा वृद्धौ पितरौ दर्शितवान् । ततो विनयादभ्यधात् । सखे ! पश्यैतौ दैवतधिया पूजितौ मया मातापितरौ । एतद्भक्त्यैव ज्ञानलोचनत्वमहं प्राप्तवानस्मि । एवमाकर्ण्य राजा मुनिमग्निवंशं षण्मुखसंभवं च पप्रच्छ । ततो मुनिरुवाच । पुरा मंदायमानमहसि पावकेऽगिरामुनिरग्नित्वमकरोत् । अंगिरसो बृहस्पतिः । बृहस्पतेः शंयुः । शंयोर्भरद्वाजः । भरद्वाजाद्रथप्रभुः । रथप्रभोर्निश्च्यवनः । निश्च्यवनाद्विपापः । विपापान्निष्कृतिः । निष्कृतेः स्वनः । स्वनाद् विश्वजित् । विश्वजितो विश्वभुक् । विश्वभुजो गोपतिः । गोपते र्वडवा । बडवातो घोरः । घोरान्मन्युः । मन्यो र्दिव्यरूपः । दिव्यरूपाद्धन्वी । धन्विनः कामः । कामादमोघः । अमोघादुक्थः । एवं तेषां च विपुले वंशे बहवोऽग्नयः संभूताः । येषु त्रिविधकर्माणि पृथक् पृथक् प्रतिष्ठितानि । लोकेऽस्मिन्नाग्निवंशस्मर्ता धनधान्यवान् भवति ।

पुरा देवासुरसंग्रामे दानवाञ्जयिनो वीक्ष्य महेन्द्रो निजसेनार्थं नायकं चिन्तयन् विविक्तं मानसं गिरिं गत्वाऽतिष्ठत् । ततः सोऽकस्मात् करुणाक्रन्दनं श्रुत्वा तत्राऽगाद्यत्र केशिना हृता दिव्यकन्या गजाकृष्टाकदलीव वेपमानाऽऽसीत् । अथ शतक्रतुर्युद्धेन तं जित्वा विद्राव्य च कन्यकां परिचयं पप्रच्छ । सा च पृष्टा तमेवमब्रवीत् । देवराज ! अहमस्मि देवसेनाख्या ज्येष्ठा प्रजापतिदुहिता । महासुरोऽसौ साभिलाषां तां हृत्वा बलान्मामपि हर्तुं प्रार्थयते । परमहं नैनमभिकामये । शचीपते ! तस्मान्मे बलिनमग्र्यं पतिं समादिश । पिताऽपि पुरा मामाह । तव पतिरेकवीरो भवितेति तद्वचनमाकर्ण्य पूर्वं तु मघवा दर्शहोमाग्निसंयुक्तौ शशिभास्करौ ददर्श । ततो देववृन्दानां वक्त्रं हुताशनं मत्वाऽस्मात्तो वीरो जायतां सोऽस्या बलाधिकः पतिरित्यन्तर्गणयन्निन्द्रो ब्रह्मलोकमगात् । अथ त्रिकालज्ञोविरंचिस्तं शक्रं विलोक्य प्राह । शक्र ! मया चिन्तितोऽसौ

ऽवश्यं भविष्यतीति वेधसोक्तो विडौजाः स्वपुरीमयासीत् । अत्रान्तरे हुताशनः सप्तर्षिप्रियाः समवलोक्य मदनातुरो बभूव । ततो मुनिभार्याभिलाषः कथं मे युक्त इति ध्यात्वाऽधिकतापमगमत् पावकः । अथ कृशानुः स्वविग्रहं त्यक्तुं काननं प्रायात् । ततोऽग्निपत्नी स्वाहा दिव्यज्ञानेन सर्वरहस्यं विज्ञाय तद्रूपात्तं समभ्ययात् । अथ पूर्वमंगिरसः पत्न्याः शिवाया रूपं धृत्वा स्मराक्रान्तपावकमका मयत । ततः सत्वरा सा पाणिभ्यां तद्वीर्यं समादाय गारुडीरूपं विधाय च श्वेतपर्वतमगच्छत् । ततो मुनिपत्नीनां मिथ्या दोषकथा कांचिन्मास्तु । इति निश्चित्य सा शरवणमगात् । तत्र सुदुर्गमे हेमकुण्डे कृष्णभुजंगमव्याप्ते च तद्वीर्यं तत्याज । ततस् साऽन्यमुनिपत्नीरूपं तु धृत्वा वन्हिं पर्यचरत् । परन्त्वरुन्धतीरूपं धर्तुं न शशाक । एवं तत्राग्नितेजसि स्वाहया षट् कृत्वः स्कन्ने सहस्रकिरणोपमः षण्मुखो द्वादशभुजः स्कन्दः समभवत् । ततः क्रमशो वर्धमानो बलान्ननाद । ततस् तन्नादेन भुवनत्रये कम्पिते चित्रैरावतौ नागौ भयादुत्तस्थतुः । सोऽथ बालएव रौद्रं धनुः समादाय शंखं दध्मौ । ततः शक्त्या श्वेतपर्वतशृंगमुन्मथित्वा शरैर्भूधरा-न्दारयत् । अथैकदा क्रौंचाद्रेरपि बाणैर्विवरावलीं चकार । येन कैलासवासिनो हंसाः सुमेरुं गच्छंति । एवमालोक्य तद्वनस्थानि सत्वानि मिथो बभाषिरे । अहो नु ! काम-मत्तेनाग्निना विप्लवोऽयं कृतः । अत्रान्तरे जगद्धितैषिणी स्वाहा गारुडीरूपं धृत्वा स्क-न्दं समेत्य प्रोवाच । पुत्र ! अहं ते जननी पावकपत्नी स्वाहाभिधानाऽस्मि । एव-माकर्ण्य विदितवृत्ताः सप्तर्षयोऽपि देवीमरुन्धतीं विना स्वपत्नीस्तत्यजुः । ततो विश्वा-मित्रस्तत् सर्वं योगबलेन विज्ञाय प्रीतिपूर्वकं तमुपसृत्य च शिशोश्चूडादिकाक्रियाश्चक्रे । येन स मुनिः सर्वप्रियोऽभवत् । अत्रान्तरे सेन्द्राः सुरास्तं शिशुं दुर्जयं ज्ञात्वा भयात्तद्व-धाय मातृगणं विसर्जयामासुः । अथ ता लोकमातरस्तमधृष्यमवेक्ष्य भीताः शरणं गत्वा च तस्य मातरो बभूवुः । ततः षडाननः शूलधारिणीं क्रोधजां धात्रीं नाम देवीं ररक्ष । अथ स्वयमग्निर्नैगमं छागरूपं धृत्वा तं बालं रमयामास । ततो लोहिताब्धितनया तं परिष्वज्य सुतवत् पालयामास । विलोक्यैवं सर्वा मातरः प्रसन्ना बभूवुः । अत्रान्तरे विविधभूतसंघपरिवारितं तं हन्तुं स्वयमिन्द्रदेवः सुरवृन्दसमेत ऐरावतमारुह्य समा-गच्छत् । अथ गुहस्त्रिदशानागतान् दृष्ट्वा मुखैर्ज्वालापटलमत्युग्रमुत्ससर्ज । ततस्तदु-द्भ्रान्तेन शिखिना दह्यमाना देवा भयादिन्द्रं परित्यज्य तमेव शरणं जग्मुः । अथेन्द्रः कोपं कृत्वा षडास्यं वज्रेण कुमारं दक्षिणपार्श्वे बिभेद । अत्रान्तरे तस्य वज्रहतगात्रात्

तद्विधोऽपरो विशाखदेवो बहुशो घोराः स्कन्दपार्षदाश्च समभवन् । ततो भीतः सुरेशस्तत्पराक्रमं शंसन् तमेव शरण मगात् । अथ पंचम्यां श्रीर्गुहाकारमाविवेश । तेन सा तिथिः श्रीपंचमीति लोके विश्रुताऽभवत् । ततः सुरगणान् पुरस्कृत्य देवराजस्तमुवाच । प्रभो ! त्वमेव शक्रतां धृत्वा त्रिदशराज्यं भजेति शक्रेण प्रार्थितः कार्तिकेयो वृत्रघ्नं मानयन् देवसेनाधिपत्यमभजत् । अत्रान्तरे भगवान् गिरिजासखः स्वाहासमेतं हुताशनं पुरस्कृत्य तत्राजगाम । ततोऽन्तः प्रविष्टया पार्वत्याऽतिशक्तिमानभूत् स्कन्दः । अथ खण्डेन्दुमुकुटो महादेवस्तस्मै कांचनमालिकान्दत्वा तन्मूर्ध्नि विजयोष्णीषं च बबन्ध । ततः कुमारो महेन्द्रसमर्पितां शशिमुखीं देवसेनां परिणीय व्यराजत । अत्रान्तरे षडपि मुनिपत्न्यो गुहशरणमवाप्य दिवि कृत्तिका बभूवुः । सोऽथ जगत्संहारकामस्य मातृगणस्याषोडशाद्वर्षाद् बालान् हिंसापदमभ्यधात् । ततस्तत् पार्षदास्ते घोरा दुर्ग्रहाग्रहाः पूतनाः पिशाच्यश्च कुंभाण्डीसूतिकाभुजोऽभूवन् । अपरं च देवगंधर्वयक्षाणा मन्ये च पुरुषग्रहा माहेश्वरनरं विना सहसोन्मादं कुर्वन्ति । अथ स्कन्दप्रसादात् स्वाहा वन्हेस्त्यंतवल्लभाऽभवत् । ततः शक्तिधरः षष्ठ्यां देवासुरयुद्धे तारकासुरं जघान । तेन षष्ठी तिथिर्महिमानमवापेति कथयित्वा मार्कण्डेये विरते सानुजो धर्मजोऽति विस्मयाविष्टो बभूव । कुमारसंभवकथा लोके सर्वकल्याणकारिणी प्रथिता ।

अथैकदा कृष्णमहिषी सत्यभामा कथान्तरे विजनदेश मवाप्य पाण्डववधूं द्रुपदात्मजामपृच्छत् । सखि ! यदेते पाण्डवाः समानमनसस्तव वदनप्रेक्षिणस्तन्मे चित्रं प्रतिभाति । यूनां तेजस्विनां दृष्टकामिनीभोगसंपदाञ्चाचित्तसंवननं भुजंगग्रहणोपमं मन्ये । कृष्णे ! महौषधिकृतैरंजनैर्वा युक्तिजै र्विलेपनैः किंवा मंत्रविहितस्नानै रथवा मणिसूत्रकैर्वद्धैः सौभाग्यसिद्धिमवाप्तवत्यसि ? संप्रति मामपि तं सौभाग्याधिगमोपायमुपदिश । येनाऽहमपि बहुवल्लभमेतं माधवं सेवे । एतदाकर्ण्य ईषदाकुंचितैकभ्रूव्यंजितां रुषं दधती प्रच्छन्नस्नेहगौरवात् कृष्णाऽवदत् । सत्ये ! सद्भावमनालोच्यैव वत ! निन्दितं भाषसे । पतिव्रता नारी कुहकेषु कथं मतिं क्षिपेत् ? सखि ! मंत्रबलात् प्रीति र्द्रोहोऽभिधीयते । वशीकरणसंविधिर्हि विषदानप्रकारः कथ्यते । वश्यकामाभिर्योषिद्भि कृतं गूढमौषधं किमंगे भोजनैर्वापि भर्तॄणामसून् हरेत् । श्रूयते तैस्तैः कुहकैः स्त्रीभिः पाखंडिसेवया विश्वस्तपतयो जडोन्मत्तान्धमूकतां नीताः । योषिद्भिः केचित् क्षुद्रचूर्णकैः पुंस्त्वात् प्रच्याविताः । परे कुष्ठिनो विहिताः । अन्ये हतभाग्याश्च कृताः । सखि ? पाण्डवेषु मे संवननक्रियां शृणु । नित्यं भर्तृसेवारताऽहं परं दैवतन्न जाने । विजने नैका तिष्ठामि । पतिताभि रसा-

ध्वीभिर्भिक्षुकाभिश्च न कदापि मंत्रये। गृहचिन्तां परित्यज्य सकौतुका न भवामि। प्रासादाद् द्वारदेशाद्वा राजमार्गं न पश्यामि। भर्तृवाक्यं सादरं शृणोमि। तत्कथां च कथंचिदपि न क्षिपामि। सदैव शुद्धवस्त्रा सालंकारा सुगन्धा च वर्तमाना मंगलानि भजे। गृहाचारैरवंचिताऽसंवृतमसंस्पृष्टं विप्रकीर्णमुपेक्षितं च गृहे नाहंकरोमि। क्रुद्धमाशीविषमिव सामृतं शशांकमिव पतिमुपचरंती न कदाऽप्यन्यमानसा भवामि। धर्म जन्मनोऽन्यासनेऽष्टाशीति सहस्राणि द्विजानां सदा महार्हं राजभोजनमश्नंति। रत्नवलयास्त्रिंशद्दास्यो नृपाज्ञया प्रत्येकं तान् परिचरंति। यतिमनीषिस्नातकानां सहस्राणि सदा कांचनपात्रेषु राजसत्कृतं भुंजते। किंबहुना। दासीनां दशायुतानि पात्रहस्तान्यर्थिनो विविधैर्भोगैर्दिवानिशम् भोजयंति। सदोत्स्थिताऽहं निःशेषमेतच्च चिन्तायामि। आगोपालाङ्गनं सर्वं भृत्यवर्तनैः पुष्णामि। सत्यभामे! भर्तृषु सर्वदैवैतन्मम संवननम्। तवाऽप्येष उपदेशः केशवाराधनेऽत्युपयुक्त इत्यभिधाय द्रौपदी विरराम। अथ हृषीकेशः सानुजं युधिष्ठिरं समाश्वास्य सत्यभामासमेतो द्वारकां प्रययौ। अत्रान्तरे धृतराष्ट्रो वने पाण्डवान् दुःखितानाकर्ण्य कृपया भृशं पर्यतप्यत। ततः सौबलराधेयौ लक्ष्मीमदोद्धतं नृपं समभ्येत्य हृदयप्रियं वाक्यमवोचताम्। राजन्! विभवशालिनां तया श्रिया किम्? या विषांजनशलाकेव शत्रुनेत्रयोर्न क्षुभ्यति। लोके कोऽन्यो धन्यतरस्तस्माद् यःप्रौढविभवो विषमस्थान् रिपूननेनैव शरीरेण समीक्षते। एतच्चिरसंभृतमीप्सितं निशम्य दुर्योधनस्तावनवदत्। महाशयौ! युक्तमेवैतत्। किन्तु वृद्धः पक्षमेनं नाऽनुमन्यते। नाऽन्यः कश्चिदुपायो येन स्वाभीष्टं द्रष्टुं वयं वनं व्रजामः। एतदाकर्ण्य दुर्योधनवचः ससौबलः कर्णो निशामेकां चिन्तयित्वा प्रातरेव तमभ्युपेत्य प्रोवाच। राजन्! मयाद्य धिया तद्गमनोपायो दृष्टः। यद् विपुलगोधनं द्रष्टुं घोषयात्रा विधीयतामितिसूतपुत्रेणोक्तो जातहर्षः सुयोधनो धृतराष्ट्रमुपसृत्य तं घोषयात्रानुज्ञामयाचत। तच्छ्रुत्वा सोऽब्रवीत्। पुत्र! गम्यताम्। परं तत्रैकः संशयोऽस्ति। यद् घोषाददूरे काननौकसां पाण्डवानामाश्रमो वर्तते। तत्र लक्ष्मीमदान्धेन त्वया ध्रुवं कोपितास्ते सानुगं त्वान्दहेयुः। एवमाकर्ण्य शकुनिः प्राह। महाराज! तपस्विभिस्तै र्दृष्टैः किम्? वयं तु मृगयार्थिनो घोषयात्रापदेशेन तत्र गच्छामः। इतिकैतवात्तेनोक्तो धृतराष्ट्रो विनिःश्वस्य गम्यतामिति सुयोधनमादिदेश। ततः प्रयाणपटहाकुलं सैन्यं पुरस्कृत्य प्रणतभूपालान् दक्त्रिभागे विलोकयन् राजा

गजमारुह्य प्रतस्थे । अथ कर्णशकुनिदुःशासनप्रभृतयोऽपि गजारूढास्तमनुसस्रुः ततो गजाश्वरथसैन्यसमेतो नरपतिश् छत्रचामरादिराजचिन्हैः सुविभूषितो हरिणीदृशां गीतंशृण्वन् घोषपाली मासाद्य रम्यासु वनस्थलीषु महिष्या सह विजहार । अत्रान्तरे विचित्रपुष्पाभरणा मुग्धा बल्लवयोषितस्तं मन्मथोपमं दृष्ट्वा ऽतिशयेन कौतुकवत्यो बभूवुः । एवं तत्र सुचिरं विहृत्य गोधनं च लक्षयित्वा राजा मृगयार्थं द्वैतवनान्तिकमयासीत् । तस्मिन्नेव दिने तत्र युधिष्ठिरो मुनि मण्डलं पुरस्कृत्य राजर्षिसत्रे दीक्षितो ऽभवत् । ततो दीर्घव्यायामैः श्रान्तवाहनो दुर्योधनः सरस्तीरे निवेशः क्रियतामिति सेवकानादिदेश । अथ तदाज्ञाकारिणो भृत्याः क्षिप्रं द्वैतवनसरोवरं गत्वा गन्धर्वैरभितोवृतं च समालोक्य किं कर्तव्य विमूढा बभूवुः । अत्रान्तरे प्रियासखश्चित्रसेनः कुवेरभवनादेत्य तस्मिन् दिव्यसरोवरे जलक्रीडां कर्तुमारभत । अत्रान्तरे सुयोधनानुगास्तूर्णं तान् समेत्य बभाषिरे । खेचरा ! अपसर्पत । चतुरर्णवमेखलाभूमिर्यस्याग्रमहिषी सोऽयं श्रीमान् राजा दुर्योधनो विहर्तुमत्रायातः । तच्छ्रुत्वा सर्वे गंधर्वानुचरा विहस्य तान् प्रोचुः । वत ! वो धार्ष्ट्यम् । किंवा मोहोऽथवा निर्लज्जतैषा ? किंबहुना । पुरंदरोद्यानलीलाविस्रंभभागिनो वयं मानुषगिरा विहारवसुधामिमां कथं त्यजाम इति गंधर्ववचनं निशम्य ससंरम्भा नृपसेवकाः समभ्येत्य तमेवार्थं राज्ञे निवेदयामासुः । ततो नृपःकोपतः कर्णादिप्रमुखान् सचिवान् पुरस्कृत्य स्वयं तं देशमभ्येत्य च गन्धर्वान् समयोधयत् । अथ कर्णकार्मुकनिर्गतशरैर्गन्धर्ववाहिनी क्षणाद्विद्युत्खचितेवाऽभवत् । ततो दुर्योधनोऽप्यर्धचन्द्रैर्व्योमचारिमुखानि छित्वा भूतले न्यपातयत् । तदा तद्रणाजिरं कमलाकरोपमां दधौ । ततो निखिलमही गंधर्वमयीव बभूव । अथ तदुत्सृष्टशरैः कुरुराजकटके स्फुटिते कर्ण एवैको मेरुरिवाऽचलस्तस्थौ । एवं रणे कर्णस्य परमाद्भुतधैर्यं विलोक्य सैनिकाः पुनः संरब्धगन्धर्वान्पर्यवारयन् । तस्मिन्नवसरे तेषां दशभिर्दशभिर्गन्धर्वैः सह तुमुलं युद्धमभूत् । ततस्तं खेचराः क्रोधं कृत्वा कुरुवाहिनीं विद्राव्य सकर्णं सुयोधनं च विरथं विदधिरे । अथ स्वयं चित्रसेनस्तत्रागत्य मानि महीपतिं सुयोधनं जीवग्राहं जग्राह । एवं तस्मिन्नरपतौ हृतेऽन्यगंधर्वास्तदनुजानपि नीत्वा स्वशिविराणि जग्मुः । विलोक्यैवं क्रोशन्त्यः कटकयोषितः सानुजं धर्मनंदनं शरणमयासिषुः । अथ वृद्धामात्यनिवेदितं तद्वृत्तमाकर्ण्य भीमसेनः प्रहसन् प्रोवाच । अहो ! केनाऽपि नो गूढवयस्येन स्वैरममृतवर्षणं कृतम् । किंबहुना । यद्गदागाण्डीसाध्यं कार्य मासीत् । तत् स्वयं खेचरैः कृतम् । निशम्यैवं धर्मसूनुर्विजयाग्रजं जगाद । भीम ! विषम-

स्थेषु निकारगणनां मा कृथाः । बन्धूनां मिथो वैराणि भवंति च न भवंति । किन्तु व्यसनकाले सतां भेदो न लक्ष्यते । या प्रीतिः शत्रोरभयदानेन संजायते । तां वर्णयितुं मे वाणी न समर्थाऽस्तीति सत्यमवगच्छ । संप्रति विचक्षुषो धृतराष्ट्रस्य प्रियपुत्रं विमोच्य गान्धर्वतंत्राद् भवद्भिर्यशो लभ्यताम् । निशम्यैवं धर्मराजवचनं जातहर्षो वृकोदरो धनंजयेन सह यमौ च पुरस्कृत्य तं देशमगमत् । अथाकर्णांचितगाण्डीवमण्डलान्तरानिर्गताः शरा गन्धर्वशालिशलभाश्चेरुः । एवमालोक्य भृशसंरब्धा गन्धर्वाः सव्यसाचिनः स्यन्दनं छेत्तुमुद्यता अभूवन् । ततो भीमनाराचनिर्भिन्नपृथुविग्रहाः कनकसन्नाहास्ते सुमेरुशेखरा इव धरण्यां पेतुः । अथ क्षणेन गंधर्वैः काननान्तरे पूरिते तन्मायया कृत्स्नं जगत् सान्धकारमदृश्यत । ततो धनंजयोऽनलास्त्रेण गंधर्वाणां दशलक्षाण्यवधीत् । अत्रान्तरे गदापाणिश् चित्रसेनः स्वयं तत्रागत्य मायया पाण्डुसुतानयोधयत् । ततः किरीटी सायकैस्तन्मायां छित्वा दिवि शेखरान् रुन्धानो विमोहं विदधे । अथार्जुनश्चित्रसेनं विव्हलं दृष्ट्वा वयस्यवधशंकया निजास्त्राणि संजग्राह । ततो लब्धावसराश्चित्रसेनः पार्थं प्रोवाच । सखे ! तवेयं चेष्टा विपरीता । यद्योद्धुं व्यवस्थितरिपुं परित्रायसे ? एष-राजमदमत्तःसुयोधनो वने कृशान् युष्मान् द्रष्टु मायातः । मया शक्राज्ञया बद्धः । किं कुर्मो वयम् । यःकर्णः कत्थनः सोऽपक्रान्तो युद्धाकुलैरस्माभिश्च न लब्धः। तच्छ्रुत्वाऽर्जुनस्तंसुहृदं प्रीत्या प्रसाद्य धर्मराजगिरा पशुरेषस् त्यज्यतामित्युवाच । एवं गन्धर्वपतिः शक्रसुतेन याचितो युधिष्ठिराग्रे त्यक्त्वा कौरवान् दिवं प्रययौ । ततस्तस्मिन् प्रयाते सहस्राक्षः स्वयं तत्रागत्य युधि पाण्डवैर्निहतगंधर्वान् पीयूषनिर्झरैर्जीवयामास । अथ धर्मनंदनो लज्जानतमुखं कौरवं प्रोवाच । राजन् ! पुनरेवंविधं साहसं मा कृथाः । एवं तेन विनयात् प्रार्थितोऽपि कुलिशेनेव ताडितो दुर्योधनो रसातलं विशन्निव मौनमवलम्ब्य ययौ । ततः स संघट्टितां सेनां सासूयमवलोकयन् निःश्वासम्लानवदनो व्रजन् मूक इवाऽभवत् । अथ लज्जितो राजा मार्गे प्रच्छायविजनदेशमासाद्य मुक्तवाहनोऽतिष्ठत् । अत्रान्तरे वरूथिनीं दृष्ट्वा समायातःकर्णो वृत्तान्तमविदित्वैव ध्यानमुक्तं सुयोधनं प्रोवाच । कुरुपते ! दिष्ट्यात्वया गंधर्ववाहिनी विजिता ? दिष्ट्या कुशलिभिर्भ्रातृभिश्च संगतिर्जातेतिकर्णवचनमाकर्ण्य पाणिसंसक्तललाटःक्ष्मां विलोकयन् दीर्घं निःश्वस्य कौरवोऽब्रवीत् । कर्ण ! असत्कथानाभिज्ञेन त्वया यदुच्यते । तत् किं मे हृदये शल्यं नास्ति ? तस्मिन्रणे वयं बलशालिभिर्गन्धर्वैर्बद्धाः । युधिष्ठिरादेशाच्च धनंजयाद्यैर्मोचिताः। अस्माकं भुजान् धिक् मानं धिक् पराक्रमं च धिक् । येषां च शस्त्रपरिग्रहो मरणप्रकारो विद्यते। यद् भये त्रपावतःसस्मितः

शत्रुः परित्राणम् । मित्र ! यदत्र भेषजं तत् त्वमेव जानीषे । किं कुर्मो वसुन्धरैषा रन्ध्रं न ददाति । यदि नियतावधयः प्राणा न प्रयांति तर्हितु भ्रष्टमानदर्पाणां सन्यास एव परमौषधमस्ति । लक्ष्मीरधुना क्षमताम् । राज्यस्य चाऽयमंजलिः । गतजीवस्य मालेव मानहीनस्य संपदः संति । मयाऽद्य दुःशासनो राज्ये नियुक्तः । अद्यप्रभृति युष्माभिर्मत्स्नेहतुल्याऽस्यापि समुन्नतिर्विधेयेत्यभिधाय कुशान् समास्तीर्य च तपसा देहत्यागाय कृतनिश्चयो ऽतिष्ठत् । एवमालोक्य तत्पादयोः पतित्वाऽश्रुपूर्णनयनो जगाद । तात ! मामैवं साहसं कुरु । नाऽहं वत्सःशकटभारमिव राज्यभारं वोढुं समर्थं इतिब्रुवाणं दुःशासनं प्रशंसन्कर्णोऽब्रवीत् । राजन् ! भ्रातृवचनं श्रुत्वा धैर्यं धारय । पंडिता दैवविहिताद् विप्रियान्ताद्विजंते । शोकःशोकमनुबध्नाति हर्षश्च हर्षम् । मानभंगे प्राणपरित्यागः प्रतिक्रिया नास्ति । किन्तु मानिनः प्रतीकाराय दीर्घजीवितं वांछंति । जयपराजयौ शौर्यस्थैरेव पर्यायैर्दृष्टौ । नह्यसुप्तः स्वप्नमायाविलासितं प्रपश्यति । श्रीमान् वर्णाश्रमगुरुर्दैवाद् व्यसनमागतस्तत्रका चिन्ता ? सततमात्मानं रक्षेदितिशास्त्रवचनं मत्वा शोकस्त्यक्तव्यो भवता । अपरं च । पाण्डवा युष्माकं दासाः । अतः स्वामिरक्षणं तेषां परमोधर्मः । राजन् ! नाऽत्रविचारणाकार्या शीघ्रमुत्तिष्ठ । निष्कंटकं राज्यं च भुक्ष्व । जीवद्भिरेव जेतारो विजिताः पुनर्दृश्यंते । निशम्यैवं कर्णवचो यदा राजा न किमप्युवाच । तदा शकुनिरभ्येत्य सकोप इव तमभ्यधात् । राजन् ! यो हर्षशोकाद्भुतायासैर्बाल इव समाकृष्यते । स गुर्वीणां संपदां भाजनं कथं नाम । यदि बन्धुस्नेहात् सुचरितैः पाण्डवै रक्षितोऽसि । तर्हिहर्षस्थाने विमूढवत्कथं शोचसि ? सांप्रतं युधिष्ठिराय प्रीतिपुरस्सरं राज्यार्धं दत्त्वा मनसः शल्यमपकारं समुद्धर । महाजनाः परकृतं स्वल्पमप्युपकारं गिरितुल्यं मत्वा यथाशक्ति प्रत्युपकारं कृत्वैव विश्राम्यंति । एवं गान्धारराजेन प्रबोध्यमानो दुर्योधनोऽवमानविषावेगदग्धः किंचन नोवाच । अत्रान्तरे पातालस्था दैत्यास्तं त्यक्तोत्साहं शोकाविवशं च ज्ञात्वा भृशदुःखिता बभूबुः । ततस्त्रिदशोत्साहशंकितास्तेदुर्योधनबलादाने घोरामिष्टिं प्रचक्रिरे । अथ निशि यागानलोद्भूतां कृत्यां विसृज्य तं पातालमानीय च शोकतप्तं बभाषिरे । कौरव्य ! ग्लानिं मा भज । युधि शात्रवान् जेतासि । लक्ष्मीः सोत्साहैः प्राप्यते । क्लीवैःकिंवा विषादिभिर्नोपलभ्यते । त्वं तपस्तुष्टेन भगवता शूलिना नो दत्तोऽसि । न त्वं सामान्यो राजा किन्तु देव्याःदत्तः केलिपुत्रकोऽसि । पुरा भगवती ते वपुषः पूर्वार्धं वज्रसारं परं च कौसुम विदधे । वयं त्रिदशान्विजिगीषवस्त्वदर्थं सदैव समुद्युक्ताः स्मः । नरकोभौमःकर्णमात्मना प्रविष्टः । अपरं च भीष्मद्रोणकृपादयोऽप्यस्मदाविष्टदेहाः परमनैर्घृण्य

मवाप्य पाण्डवैर्योत्स्यंते । संशप्तकगणाः सर्वे धनंजयं हनिष्यंतीत्यभिधाय दैत्यास्तं तत्रैव नीत्वा तत्यजुः । अथाज्ञाततत्कथाः सौबलादयस्तं दृष्ट्वा नानोत्साहवाक्यैः प्रसाद्य ससैन्यं हस्तिनापुरं निन्युः । दैवीमाया दुरत्ययेति सत्यैषा लोकोक्तिः ।

अथाऽन्येद्युर्भीष्मः सभास्थितं तं समुपसृत्य प्रोवाच । भूपाल ! दिष्ट्या पुनः कुशली दृष्टोऽसि । अपि त्वया राजन् ! सरलचेतसां पाण्डवानां सौभ्रात्रमानृशंस्यं च स्वयं दृष्टम् ? अपि शूरमानिनः कच्छासंवृतवस्त्रस्य कर्णस्य गंधर्वसमरे पलायने जवो दृष्टः ! आस्तामेतेन नः किम् । साम्प्रतमत्रैवं क्रियताम् । राजन् ! पाण्डवैः सह पृथ्वी भुज्यताम् । एतदाकर्ण्य राजा दैत्यावलीवचनं स्मरन् कर्णं पाणिनावलम्ब्य सभामण्डपान्निर्ययौ । अथ गांगेये याते सुयोधनः पुनः सभामेत्य तैः सह स्वैरं पार्थवैरं चिन्तयामास । ततः स राधेयेन संमंत्र्य दिक्षु रिपुव्रजं जित्वा धर्मराजजिगीषया यज्ञे मतिमकरोत् । अथैकदा पुरोहितमाहूय राजा जगाद । भूदेव ! त्वयाऽहं राजसूयेन साम्राज्यं प्राप्तुमिच्छामि। धार्तराष्ट्रेणैवमुक्तः पुरोहितस्तमुवाच । राजन् ! युधिष्ठिरेजीवति क्रतुर्न शक्यः । यतः सम्राट्शब्दो युगपद् द्वितीयं नोपसर्पति । तत्तुल्यमपरं यज्ञं च कर्तुमर्हसि । भुवि हेमलांगलकृष्टायाः संरंभः क्रियताम् । इति पुरोहितेनोक्ते रत्नसंचये संभृते भूमिपालेषु संप्राप्तेषु राज्ञः सत्रं प्रावर्तत । तस्मिन् क्रतौ दीक्षितेन राज्ञा सावज्ञं प्रेषितो द्विजो वने मुनिसन्निधौ पाण्डवान् गत्वा प्रोवाच । नृपचक्रचूडामणी राजा कौरवो यजते । सखे ! तस्मिन् राजसमागमं द्रष्टुमागम्यताम् । एतद् दूतवचनमाकर्ण्य युधिष्ठिरोऽब्रवीत् । दिष्ट्या राजा सुयोधनो धर्मेऽभिरमते। वयं वनेचरा वनवासावधावनिस्तीर्णे कथं नाम कुरुराजनगरं प्रविशामः ? तच्छ्रुत्वा पाण्डुपुत्रेषु दृशा महीं विलिखित्सु मानमुद्वोढुमशक्तो वृकोदरो व्याजहार । यत्र मत्क्रोधः पावको धार्तराष्ट्रः पशुस्तत्र रणयज्ञे वयं सभासदो भविष्यामः। इति भीमवचसा नृपदूते प्रत्यागते विपुलदक्षिणे यज्ञे संपूर्णेऽखिलभोगैः सत्कृतेषु राजसु च प्रतियातेषु राधेयसौबलसमेतो दुर्योधनो ननंद । अथाऽधिरथिस्तमब्रवीत् । राजन् ! मा त्वरय । युधिष्ठिरे हते त्वया च राजसूये प्राप्ते पुनर्निवृत्तोऽहं भविष्ये। किम्बहुना समरेऽर्जुनं नाहत्वा पादशौचमहं विधास्ये । हते पार्थे सानुगान् पाण्डुसुतान् हतान्ज्ञास्यसीति कर्णप्रतिज्ञां निशम्य सानुजो दुर्योधनो मोहाद्धस्तगतं जयं मेने । अत्रान्तरे द्वैतवनस्थो युधिष्ठिरः स्वप्ने कुलक्षयभयान्मृगैः सास्रुनयनैर्विज्ञप्तः । देव ! वयं युष्माभिः सततं बाणैः स्वल्पशेषाः कृताः । महाराज ! तदस्मद्दयया काननान्तरं गम्यताम् । एतदाकर्ण्य प्रबुद्धः कौंतेयः करुणां कृत्वा द्वैतवनमत्यजत् । ततः सर्वसम्मत्या तृणविन्दुसरस्तीरं गत्वा च

तत्र स्वावासं रचयामास । ततो मृगाश्चाऽकुतोभयास्तत्र वसंति स्म ।

अथ संवत्सरावशेषे वनवासे राजा तत्र साक्षात् सत्यवतीसुतं ददर्श । ततस्तं विधिवत् संपूज्य पाण्डव आत्मानं कृतार्थममन्यत । ततो मुनीन्द्रः सानुजं राज्यपरिच्युतं तं दृष्ट्वा करुणया प्रोवाच । राजन् ! नातप्ततपसां शरीरिणां सुखमस्ति । लोकेऽस्मिन् सत्वनिरता दातारः शान्ताश्च सुखभागिनो भवंति । एतदाकर्ण्य राजा मुनिं सादरं पप्रच्छ । भगवन् ! दानतपसोर्गुरुलाघवं कथ्यताम् । एवं नृपतिना पृष्टो मुनीश्वरो व्याजहार । सति धने दानं तदभावे च तपः प्रशस्यते । अर्थो हि नाम सततं पुंसां बहिश्चराः प्राणाः । मुमूर्षुभिरपि तत् त्यक्तुं न शक्यत इति सत्यम् । किं बहुना । अर्थार्थिनो नराः करवालेषु पतंति । मकरालयं विशंति । सर्वं च दुष्करं कुर्वन्ति । तस्मात् संसारे सर्वसम्पदान्निधानं दानं हि गण्यते । पुरा कुरुक्षेत्रे शिलोंछसर्वस्वो मुद्गलोनाम विप्रो बभूव । स बहुकुटुम्बको यज्वाऽपि व्रीहिद्रोणं समाहृत्य पक्षे पक्षे सर्वदा एकाहं दत्तशेषं च भोजनं चक्रे । किं बहुना । स्वयं शक्रोऽपि देवगणैः सह प्रतिपर्व शुद्धात्मनस्तस्य बहुमानतो हविर्भागं जग्राह । अथैकदा पक्षान्ते कृतकृत्यस्य तस्य भोजनवेलायां दिगम्बरोऽतिथिर्दुर्वासा बभूव । सोऽथ सर्वप्रकारमन्नं ताद्वितीर्णं भुक्त्वा शेषेण निजविग्रहं लिप्त्वा च स्वाश्रमं जगाम । तस्मिन् गते निराहारोऽपि शान्तिमवलंब्य पक्षान्ते पुनराप्ताय तस्मै स्वं भोजनं प्रादात् । एवं स षट्कृत्वः सर्वं वितीर्याऽपि विमलमानसोऽतिष्ठत् । एवमालोक्य तत्रत्या मुनयस्तं धर्मपीयूषैः स्नातमिव मेनिरे । अथ तुष्टे मुनिवरे तस्य सत्वं प्रशंसति विमानेन देवदूतः समभ्येत्य तमब्रवीत् । मुद्गल ! त्वया तपोदानदमैः स्वर्गोऽर्जितः । स्पृहणीयचरित्रस्त्वमागत्य धिष्ण्यं समारोह । तच्छ्रुत्वा स सत्ववान् देवदूतं पप्रच्छ । कीदृशः स्वर्गः ? पूर्वं तद्रहस्यं विज्ञाय ततो यथोचितं करिष्यामि । निशम्यैवं देवदूतोऽब्रवीत् । सखे ! स्वर्गेऽपि पृच्छसीति चित्रम् ? किन्तेऽद्यावधि कर्णपथं स्वर्गसुखं नायातम् । समस्तरम्याणां कोशः सर्वसम्पदान्निधानम् पुण्यकर्मद्रुमफलं च स्वर्लोक इति विद्वद्भिः कथ्यते । तत्र सुकृतं तु भुज्यते । परं न किमपि क्रियते । एवं मूलभोगान्नूतनानर्जनाच्च तत् क्षयं याति । एतद्दूतवचः श्रुत्वा मुद्गलो विमृश्योवाच । साधो ! नियतक्षणभंगिना स्वर्गेणाऽलम् । अहं तु शाश्वतमव्ययं धाम प्रार्थये । एवमाकर्ण्य देवदूतस्तिरोहितोऽभवत् । व्योमचारिणश्चसर्वे मुहुर्मुहुर्मुद्गलं प्राशंसन् । ततः समाधिनिरतः स सुखदुःखयोः समानभावमवलंब्य वीतरागत्वान् निर्वाणं पदं लेभे । राजन् ! सत्ववंत एव सिद्धिमवाप्य कृतार्था भवंति । त्वमप्येवं धर्मपरायणः श्रेयः समवाप्स्यसीति निगद्य वेदव्यासः

स्वाश्रममयासीत् । अथ भगवति व्यासे गते पाण्डवास् तृणविन्दूपाश्रये धौम्यसहितां द्रौपदीं विन्यस्य मृगयाव्यपदेशेन कानने विचेरुः । अत्रान्तरे सिन्धुराजो जयद्रथस् तेन काननवर्त्मना विवाहार्थं साल्वान् व्रजँस् तत्र समागच्छत् । सोऽथ मुन्याश्रमद्वारि कमलत्विषा पाणिना कदम्बशाखामालम्ब्योत्थितां पूर्णेन्दुवदनां कृष्णां विलोक्य स्मरोल्लासितः शिवीनां नृपमभ्यधात् । सखे ! 'नयनानंदकौमुदी केयम् ! किं बहुना । यद्दर्शनेनाऽपि मदनानलो जृंभते । इमां हरिणेक्षणां दृष्ट्वा मे विवाहेनालम् । वदनेन्दुना विबद्धे हृदयांभोजे प्रविष्टेयं मे जन्मान्तरेष्वपि न निर्यास्यतीति व्यक्तमेव । संप्रति तत्र गत्वा जानीहि कस्यैषा कामिनी ? विजने वनेऽत्र किं करोति ? निशम्यैवं जयद्रथवचनं कोटिकाश्वो महीपतिस् तूर्णं रथादवरुह्य स्वयं तत्र गत्वा तामपृच्छत् । शशिमुखि ! कुन्तलैः परिकलितललाटा त्वं का ? अहमस्मि सुरथसूनुः कौटिकाश्वो नाम शिवीश्वरः । अयं च व्यजनधवलफेनः सिन्धुनाथात्मजो जयद्रथः । एतदाकर्ण्य लज्जिता सा प्रोवाच । भद्र ! निर्जनेऽस्मिन् वने मादृशीभिः सह तव मेलनं न जातु युक्तम् । परंतु त्वामभ्यागतं ज्ञात्वा मे वाक् प्रसरति । भ्रातः ! अहं द्रौपदी पाण्डवानां कलत्रमस्मि । एवमाकर्ण्य राजपुत्रस्त्वरिततरमुपेत्य सर्वं वृत्तं सिन्धुराजाय निवेदयामास । सोऽथ पांचालपुत्रीमुपगम्य प्रोवाच । वरतनु ! इयं कर्णमूलायता ते ललितदृष्टिर्मन्मथीयेषु पीयूषवृष्टिःपतिता । सम्प्रति मे पृथ्वी भवत्याः सपत्नीभावमनुभवतु । विधाताऽपि व्यर्थनिर्माणखेदं च परिहरत्विति भूपवचनं श्रुत्वा याज्ञसेनी प्रोवाच । वत ! कालशक्तिमोहितस्त्वं विषं पिबसि ? किं वा पादप्रहारैः सुप्तमाशीविषं प्रबोधयसि ? यद् रिपुवनदहनानां पाण्डवानां प्रियाम्मामवृतलज्जं भाषसे । अरे ! निखिलभुवनरक्षामंगलोद्योगदीपोऽजातशत्रुस्ते श्रुतिपथं किन्नायातः ? अथवा वकहिडिम्बकिन्दीरमदमर्दनो मारुतिरपि तेऽपरिचितः ? अस्तु तावत् । परं कपटशवरवेशानुव्रताभवानी त्रिपुरहररणाग्रे यं निःशंकमल्लं वीक्ष्य कान्तसंदेहदोलामलमत । तं विजितरुद्रं पार्थमपि किन्नजानासीतिब्रुवाणां राजकुंजरः स करेणुः कदलीमिव वरारोहान्ताञ्जहार । अथ शंकितां तां रथं समारोप्य व्रजति सैन्धवे सदाचारः श्रुतिमिव धौम्यः पद्भ्यामनुययौ । अत्रान्तरे पाण्डुसुता दुर्निमित्तानि विलोक्य शंकिताः स्वाश्रमं निवृत्य च वल्लभां हृतां शुश्रुवुः । अथ ललितौजसि सैन्धवे याते समापततस्तान् दृष्ट्वा तेजसा तर्जयंतीव द्रौपदी भूपं जगाद ।-एते भुजशालिनः पाण्डवा मां संप्राप्ताः । यदि शक्यते तर्हि तु कोदण्डप्रणयो बाहुः क्रियताम् । एषोऽशनिस्वनो गाण्डीवनिर्घोषः श्रूयताम् । किम्बहुना । समरेऽधुना मुहुः

पतितात्कलितैर्भूपशिरोभिः सव्यसाचिनः कन्दुकक्रीडा दृश्यताम् । इति ब्रुवाणायां तस्यां गाण्डीवधन्वनो भल्लैर्महीभुजां यशांसीव कृत्तानि छत्राणि पेतुः । ततस्त्रिगर्तशिविसिन्धुषु सहसा विप्रकीर्णेषु भीमगदाघातैः कृतान्तनगरोत्सवो बभूव । अत्रान्तरे युधिष्ठिरस्त्रिगर्तेशं सुधन्वानमर्धचन्द्रेण हत्वा तमनीकमपि व्यगाहत । नकुलोऽपि कृपाणेन कुंजरघटा विपाटयन् पृषद्काभ्यां क्षेमंकरमहामुखौ जघान । ततः ससंरम्भो मारुतिरभिद्रुत्य क्षुरप्रेण कौटिकाश्वस्य व्यालोलकुण्डलं वक्त्रमपाहरत् । अथ धनंजयो द्वादश सौवीरान् शिबिसहितान् द्राक् कृतान्तस्य पूर्वोपायनतां निनाय । एवमसृग्वसामत्तभूतवेतालसंगते वर्तमाने रणे भीतो जयद्रथो दुद्राव । ततो द्रौपदीमुत्सृज्य तस्मिन् ससैनिके भग्ने काल इवाकुलो मारुतिस्तमनुससार । एवमालोक्य कृपानिधिर्युधिष्ठिरो गान्धारीजामाता दुःशलापतिरयं रक्षणीय इति भीमसेनमुवाच । निशम्यैवं कोपवती कृष्णा सासूयमवदत् । अहो ! दारापहारेऽपि महीपति र्वीतक्रोध इति महद्वैचित्र्यम् ? मानम्लानिकरं समरे च वशमागतं रिपुं नीतिज्ञो नैव मुंचतीति प्रेयसीवचनं श्रुत्वा जयद्रथवधोत्सुकौ भीमपार्थौ तमनुसंसर्पतुः । अत्रान्तरे धर्मजो यमाभ्यां सह कृष्णां समादाय निजाश्रमं ययौ । एवमालोक्य तत्रत्याः सर्वे मुनयोऽतिसंतुष्टा बभूवुः । अथ श्वेताश्वो जवात् क्रोशमात्रं प्रयातस्य सिन्धुराजस्य घोटकानलक्षितशरैर्जघान । ततो रथमुत्सृज्य पद्भ्यां विद्रुतं तं विहस्य धनंजयः प्रोवाच । नृप ! पलायनपरो भूत्वा कुलं मा मा कलंकय । किमनेनैव वीर्येण कुलांगना जिहीर्षसि ? एवमर्जुनेन सोत्प्रासमुच्यमानोऽपि सैंधवोऽगणितश्वभ्रो दुद्राव । विलोक्यैवं मारुतिः सावेगं तमभिद्रुत्य केशेष्वाकृष्य भूतले निष्पिष्य च गाढमरत्निना जघान । ततो भीम्मो विवाहार्थिनस्तस्य लडच्चूडामणिस्रस्तमंगलोष्णीषशेखरं शिरः पदाहनत् । अथ फल्गुणस्तज्जीवितोच्छित्तये समुद्यतं भीमं दृष्ट्वा दुःशलाभर्ता त्यज्यतामित्युवाच । तच्छ्रुत्वा भीमस्तं गले दृढं प्रपीड्याऽवोचत् । किं करोमि । विप्राचारो युधिष्ठिरस्तवानिष्टं न वांछति । पशो ! एष संत्यज्यते । परं दासोऽस्मीति पूर्वं वदेत्यभिधायार्धचंद्रेण तस्य पंचशिखं शिर श्चक्रे । ततो मारुति र्विषमश्वासं दासोऽस्मीतिवादिनं तं कृष्णायुधिष्ठिरयोरग्रे नीत्वा तत्याज । अथ सावज्ञं युधिष्ठिरेण विसृष्टो भुग्नवदनो जयद्रथो लज्जाविलुलितैः पदैर्जगाम । ततस्स गंगाद्वारमासाद्य तपसा वृषभध्वजं तोषयामास । ततः प्रसन्नादिन्दुशेखरात् सानुगान् पंचाऽपि पाण्डवान् जयेयमिति वरं ययाचे । तच्छ्रुत्वाऽऽशुतोषस्तं प्रोवाच । विजयं विनाऽन्याँस्तु त्वं वारयिष्यसि । यतः स हि

विष्णुना स्वयं रक्ष्यते । एवं शर्ववरं प्राप्य सिन्धुभूपतिः स्वनगरं ययौ ।

अथ धर्मात्मजो जायां सांत्वयित्वा मार्कण्डेयमपच्छत् । भगवन् ! पुरापि भवता कश्चिन्नरो दृष्टः ? य एवं विधानां दुःखानामहमिवास्पदमभूत् । किंबहुना । यत् सैन्धवसदृशेन राज्ञा पत्नीपराभवोऽप्यकारि । एतदाकर्ण्य पुराणमुनी राजानमभ्यधात् । राजन् ! शृणु । श्रीरामचन्द्रस्त्वत्तोऽप्यधिकदुःखमवाप्तवान् । पुराऽयोध्यायामजसूनुर्दशरथो नाम राजा बभूव । तस्य कुलाचारगुणोज्ज्वलाः कौसल्यासुमित्राकैकेय्यस्तिस्रो देव्यो बभूवुः । अत्रान्तरे मुनिराजपौलस्त्यविश्रवसः पुत्रो दशग्रीवो महातपसा त्रैलोक्यमजयत् । ततो धर्मसेविनाऽनुजविभीषणेन निवारितोऽपि कुंभकर्णखरादिभिः सह देवान् जिगाय । ततोऽग्निमुख्यैस् त्रिदशैरर्थितस्तद्वधे विधिर्मर्त्याहृतेऽबध्योऽसौ मद्वरादिति तानुवाच । अथ विधातृगिरा विष्णुश्चतुर्विधं विग्रहं कृत्वा दशकण्ठवधार्थं सानुगो भुवमवातरत् । ततः स देवः श्रीरामभरतलक्ष्मणशत्रुघ्नात्मना श्रीमतो रविवंशशिरोमणेः पवित्रचरितस्य दशरथस्य पुत्रतामगात् । अथैकदा सलक्ष्मणः स यज्ञरक्षार्थं विश्वामित्रेण नीतो दिव्यास्त्राण्यवाप्य ताटकां राक्षसीं हत्वा च धर्मं ररक्ष । ततो मारीचसुबाहुप्रभृतीन् राक्षसान् शतयोजनीं क्षिप्त्वा रामो मिथिलाधिपतियज्ञे शिवचापं विलोकयितुं च जनकपुरमगात् । सोऽथ तच्छांभवं धनुराकृष्य भङ्क्त्वा च तच्छुल्कलाभां जनकनंदिनीमवाप । ततः स तामादाय स्वनगरीं व्रजन् पिनाकिचापदण्डखण्डनात् कुपितभार्गवमजैषीत् । अथैकदा दशरथो जयशालिने पुत्राय स्वराज्यं दातुमुद्यतोऽभवत् । एतदाकर्ण्य मंथराभिधाना दासी गर्भचेटिकावर्गाद् भरतमातरं गत्वा तां घोरविद्वेषविषव्याकुलमानसां चकार । ततः सा कैकेयी तद्वचसा वने प्राग्वितीर्णेन वरेणैकेन सभार्यस्य राघवस्य विवासनं द्वितीयेन च भरतराज्याभिषेकमयाचत । अथ सत्यधनो दशरथस्तयार्थितो गुणगणारामं रामं जीवितेन सह तत्याज । ततः सानुजो राघवो दण्डकारण्ये दिव्याश्रमं विधाय तत्रैव न्यवसत् । अत्रान्तरे तत्रागतेन भरतेनाभ्यर्थितोऽपि निजराजलक्ष्मीं न जग्राह । ततश्चीरजटाधरो भरतो मूर्ध्ना तत् पादुके समादाय नंदिग्रामे फलाहारमात्रेण जीवन् क्षमामपालयत् । अथ कदाचिद् दशमुखस्वसा वने रामं दृष्ट्वा शूर्पणखा सहसा स्मरतापिताऽभवत् । साऽथ तत्संगमे विघ्नं सीतां ज्ञात्वा तामेव हन्तुमुपाययौ । एवमालोक्य लक्ष्मणः कोपात् तां विकर्णनासां चकार । ततःसा जनस्थानं गत्वा खरं समानीय च तं रामप्रतापाग्निपतंगतान्निनाय । साऽथ जलधेः पारे लंकामेत्य निशाचरवृन्दमध्यस्थं क्रोधान्धं दशकन्धरं विदितवृत्तान्तं चक्रे ।

ततो दशग्रीवोऽतिमायिना मारीचेन सह संमन्त्र्य राघववल्लभां हर्तुं दण्डकारण्यं प्रययौ । अथ रावणाज्ञया मारीचो हेमहरिणो भूत्वा कनकचर्मलुब्धया जानक्या याचितं रामं जहार । ततो राघवेषुणा ताडितोऽनिलजवः स विद्रुतो हा लक्ष्मण ! हालक्ष्मणेति विक्रोश्य जीवितं तत्याज । अत्रान्तरे जानकी गगने रक्षःकूटात्समुत्थितमार्तप्रलापं श्रुत्वा शंकितचित्ता सद्यो लक्ष्मणं विससर्ज । ततो भिक्षुवेशो दशाननो विजने वित्रस्तामेकाकिनीं तामभ्येत्य मन्मथाक्रान्तो हरिणेक्षणां जहार । अथाविष्कृतस्वरूपेण तेन ह्रियमाणा सा साध्वी वीरराघवं लोकपालांश्च चक्रन्द । ततः कृपालुगृध्रभूपतिर्जटायुरभ्येत्य सीतारक्षणार्थं दशग्रीवमयोधयत् । अथ तच्चंचुचरणापातविध्वस्तरथसारथी रावणः कृपाणेन तं लूनपक्षमपातयत् । ततो लंकेश्वरस्तं शत्रुं हत्वा लंकां समासाद्य च सीतामशोकवाटिकायां निदधौ । अथ शापबंधादनीश्वरोऽयं वलाद्धर्षयितुं तान्न शशाक । ततोऽन्येद्युर्नित्यं पराङ्मुखीन्तां सीतासतीमुपसृत्य प्रणयं ययाचे । अत्रान्तरे प्रतिनिवृत्तोऽपि रामो लक्ष्मणमागतं दृष्ट्वा मृगकूटं मारीचं च विज्ञाय सीताहरणमशंकत । सोऽथ सीताप्रियतमो वैदेहीरहितमाश्रमं विलोक्य लक्ष्मणेन समाश्वासितोऽपि धैर्यं न दध्रे । ततो विरहक्षामस्स वीरः काननमासाद्य ऋष्यमूके पंचकपिवरान् विलोकयामास । सोऽथ सानुगं हनूमन्तं विदितोदन्तं कृत्वा सुग्रीवेण सह सख्यं चकार । ततो रामः सुग्रीववैरिणं बालिनं हत्वा सीतान्वेषणसंविदा सुग्रीवस्य राज्यं समादिशत् । अथ वानरराजेन विसृष्टे कपिमण्डले हनूमान् दिशो विचेतुं मकरालयमुल्लंघे । ततो लंकोद्याने रुद्धां शशिमुखीं सीतां दृष्ट्वा लंकां च दग्ध्वा शत्रून्निहत्य च रामं प्रतीपमभ्याययौ । अथ कपिचयावृतो रामस्तस्माद् वृत्तान्तं विज्ञाय जलनिधौ सेतुं बद्ध्वा लक्ष्मणं च पुरस्कृत्य लंकां ययौ । अत्रान्तरे विभीषणो दुर्णयान्धं दशाननं परित्यज्य समरे रामसैन्यानामग्रणीर्बभूव । ततःल्पवगरक्षसां घोरे समरे प्रवृत्ते भूतानां कोऽवि त्रैलोक्यकंपनो विभ्रमोऽभवत् । अथ रामकोदण्डनिर्गता विशिखावली यमवर्त्मनि राक्षसजीवानां सेतुतां ययौ । ततो धूम्राक्षप्रहस्तप्रकम्पनमेघनादकुंभकर्णादीनां विनाशे जाते रघुनंदनो ब्रह्मास्त्रेण निर्जितामरं स्वयं विनिर्गतं च रावणं जघान । अथ विभीषणाय तद्राज्यं दत्त्वा सीतामवाप्य च कृतार्थो वभूव । ततो हनूमन्तं पुरस्कृत्य वीरराघवः पुष्पकेणायोध्यां प्रययौ । सोऽथ भरतेन संगम्य निहतकण्टको यज्वा वत्सराणामेकादशसहस्राणि पृथ्वीं जुगोप । राजन् ! जनानुरागी त्वमप्येवं व्यसनोदधिं निस्तीर्य सानुजो निजराजलक्ष्मीमवाप्स्यसीति सत्यम् ।

एवं मुनिभाषितं श्रुत्वा युधिष्ठिरोऽपृच्छत् । ऋषिराज ! इयं मत्कार्ये विपुलं पराभवं प्राप्ता । अप्येतादृशी काचित् पतिव्रता त्वया दृष्टेति पृष्टश्चिरंतनोमुनिर्ध्यात्वा राजानमवदत् । राजन् ! पुण्यं सतीवृत्तं शृणु । पुरा मद्रेष्वश्वपतिर्नाम राजा बभूव । यस्य सत्यदानादयो गुणा एव विभूषणमासीत् । सोऽथ जपहोमपरायणस् तपसा गायत्रीं समाराध्य तद्वरप्रभावाल्ललितलोचनां सावित्रीं नाम पुत्रीमवाप ! ततो लावण्यपेशलाकारा कान्तिपल्लवा कामलतिका सा कालेन वसंतमिव यौवनमवाप । अथ सामान्यभूपती राजसूयश्रियमिव स्वतेजसा दीप्यमानान्तां न कश्चिद्याचितुं समर्थोऽभवत् । ततः पितावृद्धकंचुकिरक्षितान्ताम् स्वयं भर्तारमन्वेष्टुम् राजर्षितपोवनं प्राहिणोत् । अथ प्रतिनिवृत्य पितरं वक्तुमागता सा तत्सभाग्रस्थितिजुषा, देवर्षिनारदेन विलोकिताऽऽसीत् । ततः स मुनीश्वरस्तां विलोक्य मद्रराजमभाषत । राजन् ! तवेयं सुता दूरादिवैत्य किमपि वक्तुकामा प्रतिभातीतिवादिनि मुनीन्द्रे भूपतिः सुतां प्रोवाच । पुत्रि ! भगवतोऽग्रे यस्त्वया वृतः स कथ्यताम् । निशम्यैवं पितृवचो नतानना सा बभाषे । तात ! वृद्धसाल्वराजो विचक्षुर्वने तपः समाचरति । तस्य द्युमत्सेनाख्यः पुत्रोऽस्ति । स च मया धिया वृतइति तयोक्ते देवर्षिस्तामभ्यधात् । साधु साधु । स सत्ववान् नाम राजपुत्रो नूनं गुणाढ्योऽस्ति । स केलिसदनं कलानां पाणिदर्पणं विद्यानाम् । किमन्यद् वंशविभूषणं ते जामाता सर्वथा समुचितः । किन्त्वेष वर्षशेषायुरिति विचिन्त्य मे मनो दूयते । नारदेनेति गदिते संतप्त इव भूपतिर्दीर्घायुषमन्यं पतिं वृणिवति तनयामभाषत । तच्छ्रुत्वा सा प्रोवाच । तात ! कुलीना कन्या द्विर्न प्रदीयते । दानांशविवाहेषु विपश्चितामेकदैव वाक् प्रसरति । एवमाकर्ण्य भूपालस्तां निश्चितसंकल्पामब्रवीत् । वत्से ! नारदवचनं नान्यथा भवतीतिमत्वा तत्प्रतीकारमवश्यं कुरु । ततः शुचिव्रता सा तथाऽस्त्विति व्याहृत्य यत्र सत्ववानासीत् तत्र पित्रा सह सत्वरमगात् । राजाऽपि सत्ववंतं दृष्ट्वा प्रससाद ।

ततः पिता शुभेऽहनि नवयौवनभूषणान्ताम् सत्ववते प्रादात् । अथ सत्ववान् जनकार्पितां सावित्रीं समवाप्य विजयिस्मरराजस्य यौवराज्यमिव लब्धवान् । ततस्सापतिव्रता तपोवने भर्तुः श्वसुरस्य च परिचर्यापरा मुनिवचश्चिन्तयंती कालं निनाय । एवं परिवत्सरे याते दिनत्रयावशेषे च समये श्वशुरेणाऽभ्यर्थ्यमानाऽपि त्रिरात्रोपोषिता बभूव। ततस्तस्मिन्नारदाभिहिते दिने प्रत्यासन्ने साल्वराजसुते स्वयं फलार्थिनि वनं गते श्वशुराज्ञया सती साऽपि वियोगे समुपस्थिते भर्तुमाहितसंकल्पा शनैः शनैस्तमनुससार । अथ सत्ववान् फलान्यादाय काष्ठाग्रं पाटीयित्वा च श्रमाच्छिरोरुजं भेजे । ततः श्लथांगस्स

निर्जने जायाङ्के शिरो धृत्वा नेत्रे निमील्य निश्चलश्चिरमतिष्ठत् । अथ सावित्री सुप्तस्य पत्युरुत्संगसंगतं मुखं निमेषदोषशून्येन चक्षुषा सुचिरमपिवत् । अत्रान्तरे बद्ध-मुकुटं श्यामलं पीतवाससं पाशभुजगव्यग्रहस्तं पुरःस्थितं पुरुषमद्राक्षीत् । साऽथ पत्युः शिरः शनैर्भूमौ निधाय तं रक्तनयनं शिरसाऽभिवाद्य प्रोवाच । भगवन् ! महसां राशिस्त्वं कः ? किं च कर्तुं समीहसे ? अमुना देववपुषा त्वां परमं दैवतं मन्ये । इत्युक्ते राजसुतया स देवः सत्ववतो वक्त्रे पाशं क्षिपन् प्रोवाच । साल्वराजस्नुषे ! यमोऽहम् । तवेमं वल्लभं नेतुं स्वयमागतोऽस्मि । यतः सत्वशीलेषु शुद्धेषु च किंकरा नहि प्रभवंति । एवमभिधाय सत्ववतः कायात् पाशेनांगुष्ठमात्रपुरुषमाकृष्य दक्षि-णान्दिशं प्रतस्थे । ततो दृढव्रता सा स्वदयितं गतश्वासमवेद्य पथि यममेवाऽन्वयात् । विलोक्यैतद् यमस्तां प्रोवाच । बाले ! कार्पण्येन कृतम् । शीघ्रमितो निवर्तस्व । तच्छ्रुत्वा सत्वशालिनी सा न न्यवर्तत । ततःसा पुनः पुनः प्रणम्याऽब्रवीत् । लोके सत्वशीलानां न्यस्तकर्मणां व्रतिनां धर्म एवैकः प्रमाणम् । देव ! स च त्वं मूर्तिमान् विद्यसे । एवमुपपन्नं तद्वचो निशम्य वैवस्वतोऽवदत् । पुत्रि ! एकं भर्तृजीवितं मुक्त्वा-मेऽन्यं वरं गृहाण । एतदाकर्ण्य सा जगाद । देव ! श्वशुरो मम चक्षुष्मान् भूत्वा वय-सा सह राज्यं लभताम् । निशम्यैवं देवस् तथेत्युक्त्वा भर्तृजीवं विना पुनरपि वरान् गृहाणेत्यवोचत् । ततःसा पितुः पुत्रशतं श्वशुरस्य वंशवृद्धिमात्मनश्च तनयं तं ययाचे । यमोऽपि तान्तथास्त्वित्यूचे । अथ तेन निवर्तस्वेति प्रोच्यमाना साऽब्रवीत् । प्रभो ! इदमग्रेसरं भर्तृहृदयमसागरोत्थं पीयूषमद्रव्यं व्यसनौषधम् ममैव । तन्मह्यं प्रयच्छ । सद्भिः किल समागमः सर्वार्थसिद्धिप्रदो लोके विश्रुतः। सद्भ्यो भयं न जायते । सन्तः सदा स्वप्रतिज्ञां पालयंति । सत्संगतिर्नाफलास्ति । किंबहुना । सतां स्वभाव एव कृपा-स्तीत्युक्ते राजतनयया रविनंदनस् संतोषाद्वरं विततार । येन सा भर्तारमजीवयत् । अथ धर्मराजस्तस्मै सभार्याय वत्सराणां शतचतुष्टयीमायुर्दत्वा व्योममार्गेण स्वलोकं जगाम । ततः सुप्तोत्थित इव प्राप्तजीवः स सत्ववान् प्रियां पुरः समवलोक्य स्वप्नवत् सर्वमीक्षितं प्रोवाच । ततो द्युमत्सेनः संप्राप्तचक्षुर्बंधूसखं पुत्रमवाप्य मुनिभिः सह तद्वृत्तं शुश्राव । ततस्तेषां प्रहृष्टानां सावित्रीं च प्रशंसताम् ते वैवस्वतवितीर्णा वराः सफलतां ययुः। राजन् ! पुरैवं सावित्र्या वंशद्वयं तारितमिति कथयित्वा मुनीश्वरो मार्कंडेयो विरराम ।

अत्रान्तरे रत्नमंदिरे महार्हशयने शयानं वंदिभिर्दानंनिधिं कर्णं क्षीयमाणायां क्षपा-यांगीयमानं विप्राकृतिर्विवस्वानवदत् । कर्ण ! यत् किमपि सौहार्दादुच्यते । तत्सावधान-

तया श्रृणु । अद्य फल्गुणहितासक्तः सुरपतिः स्वयं त्वामभ्येत्य दिव्यकुण्डले वर्म च याचिष्यति । यदि मौर्ख्यात् सर्वं सुधामयं त्वं प्रदास्यसि । तर्हि निरायासं वैरिवश्यो भविष्यसि । प्राणैरपि यशोऽर्थिनं त्वामहं जाने। किंबहुना। सूर्योपस्थानसमये यस्य नाऽदेयं किमपि नास्ति । वत्स ! कीर्त्यादयो गुणा जीवतामेव शोभंते । गतासोः साधुवादैः किम् ? यो नेक्षते न च शृणोति । तस्मात् प्राणरक्षकेन त्वया नैतद्देयम् । यतो नृणां शरीरोपेक्षणम् चतुर्वर्गस्य हि मूलोच्छेदः । अहमस्मि सहस्रकिरणः । प्रीत्या तव हितं वांछामि । यतस्त्वं मां विना नान्यद् दैवतं जानासि । एतदाकर्ण्य कर्णश्चण्डमहसं प्रोवाच । देव ! धन्योऽहं यस्य हितं त्वं साक्षादुदीक्षसे । प्रत्यक्षदेव ! सर्वस्वदातॄणां गुरूणामहं शिष्यः । अतो याचकाशाविघातं तु स्वप्नेऽपि द्रष्टुं न शक्नोमि । तच्छ्रुत्वा दृढव्रतं तं दिनमणिरुवाच । वीर ! पूर्वं शक्तिमादाय ततो वज्रिणे कुण्डले देहीत्यभिधाय तिरोदधे । अथ प्रातः प्रवुद्धः कर्णः स्वप्नवृत्तान्तं पुनः पुनश्चिंतयामास । ततः सूर्योपस्थानकाले भगवान् साक्षात् पुनरपि तदेवाऽभ्यधात् । अत्रान्तरेऽभिषिक्तं कृतदेवकार्यं हुतानलं च तं कांचनदानकाले सहस्राक्षो द्विजाकारस्तत्रागत्य स्वस्तीत्युक्त्वा कृतांजलिमूचे । कर्ण ! प्राणप्रदानेऽपि याचकानां पुरःस्थितं जंगमं कल्पपादपं त्वां को न स्तौति ? किम्बहुना । रत्नवर्षिणा येन समुद्रोऽपि विमुद्रः कृतः । सहजे सुधामये वर्मकुण्डले मे प्रयच्छ । त्वया विना ह्येवंविधेषु दानेषु कः समर्थोऽस्ति ? निशम्यैवं द्विजवचनं कर्णः शस्त्रेण विग्रहादुत्कृत्य कुण्डले वर्म च तस्मै प्रादात् । येन वैकर्तनाख्यो लोके प्रसिद्धोऽभवत् । ततः साक्षात् तुष्टेन पुरंदरेण प्रदत्तामेकवीरवधायैव शक्तिमवाप्य कृतार्थो बभूव । अथ द्वादशे वर्षे पूर्णे वने कर्णकथां श्रुत्वा युधिष्ठिरः शक्तितुल्यां महाचिन्तामुवाह । अत्रान्तरे द्वैतवनं प्रविष्टः कश्चिद् द्विजः पाण्डवानवादीत् । महाशयाः ! हरिणेन शृंगाग्रलग्नां ममात्मजां रक्षत । निशम्यैवं विप्रवचश्चण्डसाहसाः पाण्डवास्तूर्णं तं मृगमुपाद्रवन् । ततः कुरंगाकृष्टास्ते परिश्रान्ता गिरिभुवो निकटतटभागे न्यग्रोधमवाप्य तच्छीतलच्छायायामुपविश्य कथमतिनिर्वृतिलवमयासिषुः ।

अथ राजा नकुलमादिदेश । महाभुज ! तरुमारुह्य जलाशयमवलोकय । ततस्तूणीरेण जलमानीय पिपासितं माम्पायय । एवमाकर्ण्य प्रस्थितो नकुलः स्फटिकावदातं सरोऽभिपत्य केनाऽपि भूतेन निवार्यमाणोऽपि ततः पयः पिवन् जीवितमुत्ससर्ज । एवं सहदेवधनंजयवृकोदरा अपि युधिष्ठिरेण विसृष्टाः प्रश्नोत्तरदानेऽसमर्था भूत्वा व्यसवो बभूवुः । ततः स्वयं धर्मराजस्तत्र सरोवरमन्विष्य वज्रपीडितान् गिरीनिव तान् विलोक्य चकितो बभूव । अत्रान्तरे कश्चिदलक्ष्यो वचनमुच्चचार ।

राजन् ! प्रश्नानमुंचता मम पानीयं न पेयम् । यः कोऽप्यनादृत्य मद्वाक्यं जलं पिबेत्सोऽसूँस्त्यजेत् । महीपाल ! अहं बकोऽस्मीतिमृषा । यक्षोऽस्मीति सत्यम् । पूर्वं मम प्रश्नान् भिन्धि । ततोऽम्बु पिबेति तेनोक्तो राजा ब्रूहीति तमवदत् । तच्छ्रुत्वा सोऽपृच्छत् । क ईयते ? केऽस्य चराः । कोऽस्तं याति ? क्वचाऽसौ तिष्ठति ? राजोवाच । प्रजापतिप्रेरितबिम्बमीयते । तस्य रवेश्चराः सुराः । धर्मस्तमस्तं नयति । सत्येऽस्य प्रतिष्ठा वर्तते । यक्षोऽवदत् । लोके को वदन् स्पृशन् जिघ्रन् पश्यन् शृण्वंश्च न जीवति ? नृपोऽब्रवीत् । यस्य देवतातिथिपितृसेवका नाश्नंति । स जीवन्नपि मृतोपमो निगद्यते । निशम्यैवं पुनर्यक्षोऽब्रवीत् । भूमे गुरु किम् ? माता । दिवः प्रांशु किम् ? पिता । पवनाच्चतुरं किम् ? मनः । देहिनां च प्रभूतं किम् ? एका चिन्ता ।

अथ निर्निमेषं कः शेते ? मत्स्यः । निश्चलः कः ? अण्डकम् । कस्य हृदयन्नास्ति ? दृशदः । कोजवाद्वर्धते ? नदी । ततो यक्षो जगाद । धन्यं किम् ? दाक्ष्यम् । धनं किम् ? श्रुतम् । लाभः कः ? आरोग्यम् । सुखं किम् ? संतोषः । सदाफलः कः ? धर्मः । किं नियम्य न शोचंति ? मनः । किन्न जीर्यते ? सत्संधिः । नरः किं त्यक्त्वा सुखं लभते ? राजोवाच । मानलोभस्मरक्रोधान् परित्यज्य मनुष्यः सुखमेधते । राजन् ! मृतः कः ? निः स्वः । राष्ट्रं कथं नश्यति ? सुनृपाभावात् । श्राद्धं मृतं किम् ? अश्रोत्रियम् । यज्ञः कथं मृतः ? अदक्षिणः । दिक् किम् ? साधवः । अन्नं किम् ? धेनुः । अमृतं किम् ? जलम् । विषं किम् ? यांचा । श्राद्धावरसरः कः ? गुणवान् ब्राह्मणः । एवमाकर्ण्य पुनर्यक्षोऽब्रवीत् । राजन् ! कृपया पुरुषलक्षणं कथय । तच्छ्रुत्वा राजोवाच । यस्य पुण्यात्मनो यशोगानं रोदसी व्याप्य जृंभते । स पुरुषोऽभिधीयते । निशम्यैवं विस्मितो यक्षस्तोषाद्युधिष्ठिरं प्रोवाच । राजन् ! भ्रातॄणामेकतमस्तव संमतो मद्रराज्जीवत्विति वाक्यमाकर्ण्य राजा देहत्यागार्थमुद्यतोऽभवत् । ततः क्षणं ध्यात्वाऽब्रवीत् । अस्तु तावत् । मे पुत्राधिकः प्रियो भ्राता माद्रीसुतो जीवतु । इति धर्मात्मजस्य सत्व मानृशंस्यं च विदित्वा यक्षो निद्रां निवार्यैव सर्वान् भ्रातॄनजीवयत् । अथ प्रत्यक्षीकृतविग्रहः स भ्रातृलाभप्रमुदितं पाण्डवं धर्म्यं जयमवाप्नुहीत्यवदत् ।

महामते ! मद्वरात् सानुजस्त्वमज्ञातवाससमयं तरिष्यसि । अहं तव जनको धर्मोऽस्मि । मयाऽद्य तवेयं श्रुतिशालिनी विमलामतिर्दृष्टा । दर्शनेन तव संप्रति मम माण्डव्यशापविरतिर्जाता । एवं पार्थो वरमवाप्य वनवासावधिकष्टसागरं समुत्तीर्य च धौम्येन सार्धं श्रौतस्मार्तकर्मपरायणोऽतितरां व्यराजत ।

इति श्रीगद्यभारते वनपर्वसमाप्तिमगात् ।

॥ ओंनमः शिवाय ॥

# अथ गद्यभारते विराटपर्व प्रारभ्यते ।

ततः पाण्डवा ब्राह्मणाय निजाभरणीं दत्वा मिथः संमंत्र्य च विराटनगरं गन्तुं निश्चिक्युः । अथ कौतुकाकुलः किरीटी युधिष्ठिरमपृच्छत् । राजन् ! मत्स्यपतिगेहे प्रच्छन्नः किं करिष्यसि ? यः पुमान् पृथिव्यां ख्यातयशा नरेन्द्रमुकुटमणिश्च वर्तते । तस्य छन्नां स्थितिं वन्हेर्वस्त्रावगूहनं मन्ये । तच्छ्रुत्वा राजोवाच । वत्स ! मा चिन्तय । मत्स्यराजसभाया महं स्वनाम कंक इति रक्षित्वा तत्रत्यसभास्तारो भविष्यामि । ततो युधिष्ठिरेण पृष्टो भीमोऽभ्यभाषत । भूपस्य तस्य बल्लभाख्यः सूदोऽहंभविष्यामि । अथ-बीभत्सुः प्रोवाच । तत्राहं बृहेन्नडेति विख्यातः कन्यानां कलागुरुर्भविष्यामि । ततः नकुलोऽब्रवीत् । ग्रंथिक संज्ञयाऽहं ख्यातिमवाप्य तुरगाध्यक्षतां प्राप्स्यामि । अथ सहदेवो जगाद । अहं तंतिपालाख्यो गोपातित्वमङ्गीकरिष्यामि । ततो द्रौपद्युवाच । वेशकर्मकोविदाऽहं विराटपत्न्याः सैरिन्ध्री भूत्वा प्रच्छन्ना तत्र वत्स्यामीति कथयित्वा विरराम । एवं मिथो मंत्रयित्वा मुनीश्वरान् समामंत्र्य च गंतुं प्रवृत्तेषु तेषु धीमान्धौम्योऽभ्यभाषत । यजमानाः ! सेव्यैर्युष्माभिरसौ भूपतिरवधानेन सेव्यः । यतो राजसेवासमाधिस्तु धीमतामपि दुर्ग्रहो गणितः । महाशयाः ! त्यक्ताभिमानस्पर्द्धाः सुख-दुःखयोः समाना योगिनः सेवकाश्च महोच्चपदं लभंते । राज्ञोऽहं दयित इति कदापि न चिन्तयेत् । यतो राजधीर्बलोल्लोला प्रथिता । लोके वेश्यानां नृपाणां च प्रियो नरो-नास्ति । अहं भूपकृपापात्रोऽस्मीति विचिन्त्य तदर्हं भूषणं न भजेत् । यतः लुब्ध-नृपाः प्रवाहाश्च बद्धमूलानपि पातयंति । अन्तरंगोऽपि राजसेवकः सूचनामदत्वा न प्रवि-शेत् । यत एषां मनांसि दिनानि च श्वः श्वो नवीभवंति । पण्डितोऽहमस्मीति बुद्ध्वा प्रभून् सहसा नोपदिशेत् । लोके मत्तभूपालाः कुंजराश्च नांकुशं सहन्ते । यथाऽनेक-विकटाटोपप्राणिसंघट्टकारिणो वेतालाः काठिन्येन कस्यचिद् वशवर्तिनो भवंति । तथा भूपाला अपि प्रयत्नशतैः सिध्यंति । निर्विशंकः कोऽप्यवहेलया राजानं नोपसेवेत । क्रुद्ध-केसरिणा कृतकंठग्रहः को हसेत् ? कुटिलनृपो भोगिवत् पुरः स्थितं निर्दहति पार्श्वस्थितं

वेष्टयति । पश्चात् स्थितं च चिंतयति । अतो राजसेवकेन सावधानता धार्या । लोकेऽस्मिन् सर्पदष्टा मणिमंत्रौषधैः स्वस्था विलोकिताः । परंतु नृपदृष्टिविषदष्टाः स्वस्थाः पुनरुत्थिता न श्रुता न च विलोकिताः । ये तृष्णातरलिता राजानमुपसेवंते । ते ज्वालाजटालेभ्यः कटाहेभ्यस्तैलं पिबंतीत्यहंमन्ये । क्षुद्रक्षितिपाः सेव्यंते । यदेतत् कूपलंघनोपमम् । येषां प्रकोपो निधनमनुग्रहस्तु स्मितमात्रम् । चाटुकारा नृपादेशं श्रुत्वा चित्तानुरंजनार्थं कृतमित्येव वदंति । धूर्तैरेवंविधैरेव राजसंपदो भुज्यंतइति निगद्याग्निहोत्राणि समादाय पाण्डवपुरोहितो धौम्योऽलाक्षितरीत्या पांचालपुरं प्रायात् ।

अथेन्द्रसेन प्रभृतयः सूताः कौंतेयशासनाद् रथैः परिच्छदं नीत्वा वृष्णिपुरीं जग्मुः । कृष्णासखाः पाण्डवाश् छन्ना व्रजन्तो मत्स्यपते रलकोपमां पुरीं प्रापुः । अथ ते लम्बमानशवेन दुरासदे शमीस्कन्धे निजायुधानि छादयित्वा ररक्षुः । तत्रत्या लोकाः पूतिकंगन्धमाघ्राय शवमत्राऽऽबद्धमिति मत्वा च दूरादेव तां शमीं विवर्जयामासुः । ततस्ते जयजयंतविजयजयत्सेनजयद्रथाश्चेति मुहुः संज्ञां कृत्वा गूढवेशाः पृथक् २ प्रययुः । अथ मणिमयाक्षधृत् कौंतेयो राजधानीं प्रविश्य शनैः सभास्थितं मत्स्यराजमुपाययौ । ततः कोऽसीति महीभुजा कौतुकात् पृष्टः स्वयशो दंतकिरणैः प्रदर्शयन्निव सोऽब्रवीत् । राजन् ! पूर्व महं पाण्डवमहीपतेः प्रियसभास्तारोऽभवम् । जात्या ब्राह्मणो नाम्ना च कंक इति ख्यातः सार्थाद् भ्रष्टो जीविकार्थमत्र समागतः । तच्छ्रुत्वा प्रहृष्टो विराटस्तमभाषत । मित्र ! त्वमत्र ममापि द्यूतसहायो भव । यतस्त्वयि मे मनः प्रसीदति । इदमनायासं मम राज्यमियमनपायिनी राजलक्ष्मी च त्वया निजवद् भुज्यतामित्युक्त्वा मत्स्यराजेन मानितो युधिष्ठिरोऽतिष्ठत् । ततो राजा समागतं दर्वीखण्डलांछनं बल्लभोऽस्मीतिवादिनं च तं प्रधानसूदं नियुद्धागाररक्षकं च विदधे । अत्रान्तरे कृष्णाऽपि विराटमाहिषीं सुदेष्णामभ्येत्य महाराज्ञि ! वेशज्ञाऽहमतः सैरन्ध्रिकापदं मह्यं प्रयच्छेत्ययाचत । अथमहिषी तां ललिताकृतिं विलोक्यावदत् । सुभ्रु ! वपुषाऽनेन त्वं मद्गृहे कथं स्थास्यसि ? अयि ! तवैतल्लोकातिशायि रूपमवलोक्य योषितोऽपि यदा पौरुषभावमवलंबन्ते । तदा पुरुषाणां तु का कथा ? ललिते ! सा त्वं पुंविमोहनं मनोभुवश्च जैत्रमस्त्रमसि । कथय विभवमत्तभूपालगृहे त्वं कथं चरिष्यसि ? अलं विस्तरेण । तव सर्वातिशायि लावण्यविभ्रमाभरणां च तनुं निरीक्ष्य नरेश्वरो मान्न भजिष्यतीति सत्यमवगच्छ । तच्छ्रुत्वा तरलेक्षणा याज्ञसेनी प्रोवाच । देवि ! मा शंकस्व । मम पंचगन्धर्वाः

पतयः संति । ते सदैव मां त्रायन्ते । जीवत्सु वीरेषु तेषु नहि कश्चित्कालचोदितः क्रोष्टा सिंहवधूमिव मां स्प्रष्टुमर्हति । निशम्यैवं तन्मूर्त्या वशीकृतेव सा राजवल्लभा तां मानिनीति कृताभिधाम् सैरन्ध्रीं चक्रे । ततो वृषलक्षणकोविदः सहदेवो विराटमासाद्य तद्गोपालाधिपतां भेजे । अथाऽपरेऽन्हि वेणीकृतशिरोरुहः षण्ढवेशी च किरीटी ललनायोग्यं भूषणं धारयन् वृहन्नडास्मीति वदँश्च राजानं समभ्यायात् । अथ देवकल्पोऽसौ नृपतिना संपूजितो विराटदुहितुरुत्तराया नृत्यगीतकलागुरुरभूत् । ततोऽश्वशिक्षा विशारदो नकुलो भूपतिमभ्युपेत्य तुरंग रथाधिपतां च प्रापत् ।

एवं राजसत्कृतेषु प्रच्छन्नचारिषु वसत्सु पाण्डवेषु चत्वारो मासाः प्रययुः । अत्रान्तरे ये ये महामल्लाश्च नाना दिग्भ्यो नगरोत्सवयात्रायां मत्स्यराजनिवेशनं समाययुः । तेषां मध्ये स्वभटयशश्चंद्रतिरस्कारविशारदो जीमूतनामाख्यो मल्लेन्द्रोऽपि समाययौ । ततः पातितानेकमल्लस्य रंगाग्रे च वल्गतस्तस्य तेजोमुद्रितो न कोऽपि प्रतिमल्लतां लेभे । अथास्मिन्नवसरेऽलब्धसमरे च लज्जितो मत्स्येशो भुजशालिनं बल्लभं बद्धकक्ष्यो युद्ध्यस्वेति समादिदेश । ततोऽसौ भीमो राजाज्ञया द्विपो द्विपमिव बंधैर्मल्लमयोधयत् । अथ तयोः सगर्जितैः प्राज्यभुजाघातविनिष्पेषैर्नृपगृहोद्यानशिखिनां ताण्डवोत्सवोऽभवत् । ततो मारुतिर्जवाज् जीवंतं शविणं तं समुत्क्षिप्य शतावर्तं भ्रामयित्वा च महीतले निष्पिपेष । अथ निष्पिष्यमाणस्य तस्य स्रोतोमुखैः प्राणवन्हेरर्चिष इव रक्तच्छटा निश्चेरुः । तत आपातिनि तस्मिन् महामल्ले हते नरेश्वरो भीमाय विपुलं धनं प्रादात् । अथ मदोद्धतान् नागान् कोपितांश्च मृगेश्वरान् संमुखं कुर्वतां तेषां दशमासाः सुखेन विराटभवने प्रययुः ।

अथैकदा विराटसेनानीः सुदोष्णाभ्राता च कीचकः स्वसुरंतःपुरे आबद्धवेणिकां कृष्णामपश्यत् । सोऽथ लोचनोल्लेखलावण्यरसायनतरंगिणीं वीक्ष्य सहसोत्कम्पिता कृतिरुत्क्रान्तमर्यादश्चाभवत् । ततो मलिनाशयः स पवनेन दीपवद् दोलायमानो भगिनीमेत्य प्रोवाच । स्वसः ! इयमनवद्यांगी मनः सारंगवागुरा का ? एवमाभाष्य मन्मथग्रस्तोऽसौ पार्षतीमभ्येत्याऽवदत् । अहोनु सुभगे ! तव रूपं मम नेत्रसंवननम् । सुमध्यमे ! तवेयं लावण्यवाहिनी तनुः कान्तगाढालिंगनविभ्रमं विना न शोभते । सुंदरि ! अनभ्यासहताविद्या निःसंभोगा वरवर्णिनी त्यागरहिताः संपदश्च कस्य मानसे शल्यं न ? सुभ्रु ! त्वं मदन्तः पुरयोषितां सीमंतिनीपदं भज । कामकार्मुकग्रहोऽयमपि श्लाघ्यतां व्रजतु । निशम्यैवं कोपकंपिता सैरन्ध्री प्रत्यवदत् । अहो ! दुर्णयभाजस्ते

मतिर्दुर्निमित्तायते । अहं परवधूरगम्या । त्वं मोहादिदं पेशलं वयः शरीरमैश्वर्यं च स्मृतिशेषं मा कृथाः । किं वहुना । कालाकृष्टा हि नरा मर्यादां त्यक्त्वा परदारेषु धनेषु च मतिं कुर्वते । पंचगन्धर्वा मम पतयो विद्यंते । ते नित्यमलक्ष्याः साक्षिणश्च मे पराभवं न सहंते । तच्छुत्वा काममोहितः कीचको विहाय लज्जां सुदोष्णायै स्वाभिप्रायं सत्वरं न्यवेदयत् । अथ सा स्मरतापितं भ्रातरं विलोक्य प्रोवाच । गच्छ स्वगृहान् । अहं ते पार्श्वं सैरन्ध्रीं प्रेषयिष्यामि । मन्ये सा मद्वचनमंगीकरिष्यति ।

भ्रातः ! मया सुरार्थं प्रेषिता सा मिथ्या कृतोत्सवं त्वां यदा समुपसर्पेत् । तदा त्वया तथा सान्त्वनीया यथा विमुखी न भवेदिति रहः स्वस्रा कृताश्वासः स यथाकथंचित् स्वगृहं ययौ । ततो भ्रातृवत्सला सुदोष्णा न व्रजामीतिवादिनीं सुरार्थं सैरन्ध्रीं वलात् प्राहिणोत् । साऽथ सायान्हे व्रजन्त्येकाकिनी सहस्रकिरणं शरणमयासीत् । ततो भगवान्दिनेशस् तच्छरीरे रक्षायै दीप्तमभिमानमिव राक्षसं निदधे । अथ कीचको मनोरथाभ्यस्तां समागतां तां विलोक्य स्वप्नेऽरुणां मालामिव समवाप्य जहर्ष । ततः स समुत्थाय नवोद्भिन्नां श्मश्रुलेखां कपोले कलयन्निव भामिनीन्ताम् सादरमभाषत । अयिबालकुरंगाक्षि ! प्रणयिनं माम् भज । रूपं यौवनाभरणं वयश्च शृंगाराभरणं सुखं कान्तपीताधरं वपूरतिनर्मकृशं कवरी च केलिस्रस्ता हरिणीदृशां सौभाग्यं प्रथितम् । सुभ्रु ! मन्मथो मान्यताम् । पानभूमयः सेव्यन्ताम् । यतः पीनस्तनाभोगा यौवनसंपदश्चिरं नहि तिष्ठंति । वरारोहे ! रोहिणीरमणस्मेरच्छायां स्वच्छोत्तरच्छदाम् त्वदर्थमुपकल्पितां च शय्यां पश्य । मृदुभाषिणि ! रत्नाभरणवासांसि विभवो जीवितं च मे सर्वं यथेष्टं स्वाधीनं क्रियतामित्युक्ते स कोपसंतापलज्जादुःखाकुलाशयां तूर्णं च व्रजंतीं तामंशुके स जग्राह । साऽथ तेजस्विनी बलात्समाधूय पापभारादिवश्रान्तं तं धरण्यामपातयत् । ततः शरणार्थिनी सा विराटराजसभायां यत्र युधिष्ठिर आस्ते तत्र वव्राज । अथ कोपकम्पितः कीचको जवात् तामभिसृत्य केशेष्वाकृष्य च दीप्तामात्मश्रियमिव पदा जघान । ततोऽलक्ष्यराक्षसो द्रौपदीकायान्निर्गत्य कीचकं नष्टचेतसं च कृत्वा भूमावपातयत् । अथ सभास्थितो भीमसेन एवं कांतापराभवं दृष्ट्वा कोपादुद्भ्रान्तकृतांतदहनद्युतिर्बभूव । ततो युधिष्ठिरो जगत् संहारसन्नद्धचेतसस्तस्यांगुष्ठनिपीडनादज्ञातवाससमये संज्ञां विदधे । अथ मनस्विनी कृष्णा सभाद्वारं समभ्येत्य वाष्पाम्बुपक्ष्मणा नेत्रविभागेन भीमं समीक्ष्य च जगाद । अहह ! यद्वैरिपदं श्रितः शक्रोऽपि सुखं न शेते । तद्वधूं समुद्दर्पकीचकः पदा पस्पर्श । खलोऽयं भगिनीभाग्यविभवाद् राजवल्लभतामवाप । यदि कीचको

राजापि स्यात्तथापि किं कीर्तिमुपेक्षते ? निंदिताचारोऽयम् दस्यूनां वा पशूनां भणितः । यन्नज्ज्जामुत्सृज्य परवधूमीहत इति ब्रुवाणायां तस्यां विराटो हेलयाऽवदत् । सैरन्ध्रि ! युवयो रहः कलहकारणं केन विज्ञातमिति मत्स्यराजेनोक्ते जनैः कीचके च भार्त्सिते स्विद्यन्नलाटफलको युधिष्ठिरः शनैरवदत् । सैरन्ध्रि ! गच्छ स्वगृहम् । त्वं वृथैव नो द्यूते विघ्नं करोषि । यदि ते पतयः सन्ति । तर्हि तु ते तूर्णमेव तव समीहितं विधास्यंति ।

ततो मन्युसमाकुला पांचाली भुजंगीव निःश्वसंती सुदोष्णामुपसृत्य तस्यै सर्वं वृत्तं च न्यवेदयत् । साऽथभामिनी कीचककरस्पृष्टा स्नात्वा वाससी च प्रक्षाल्य निशि महानसे सुप्तं भीमं प्रययौ । ततः कुचपुरस्सरा सा कृष्णा भुजाभ्यां भीमं गाढं परिष्वज्य कृतासनपरिग्रहं च प्रोवाच । नाथ ! धर्मसुतवत् त्वमपि सर्वस्वं विहाय किं सुखं शेषे ? संतप्तपुरुषः को नु वैरमनिर्यात्य श्वसन् स्वपिति ? हेकीचक ! मन्युपारदिद्दक्षयाऽहं तवकरस्पर्शविकीर्णवरकुंतलां तनुमेतां बन्हौ न क्षिपामि । प्रभो ! हिडिम्बकालदण्डस्य तव दोर्दण्डस्य घोरे प्रियापरिभवे कथमुपेक्षणं युक्तम् ? यो गाण्डीवधन्वाऽऽखण्डलारातिमखण्डयत् । तस्य पराक्रमः किं ममैव परित्राणे न पर्याप्त इत्युक्त्वा वाष्पाम्बुनिर्भराप्लावितस्तनी कृष्णा भमिसेनव्यसनोदधिं नवतां निनाय । अथ शोचन् वृकोदरो वाष्यानलाकुलां राजपुत्रीं तां दृष्ट्वा गद्गद्गिरा प्रोवाच । अहो ! मर्यादामानसारा वयं कालविपर्ययात् प्रसादभीता भूत्वा वैश्यवृत्तिमवलम्बमानास्तिष्ठामः । मानहीनानामस्माकं बलं धिक् इमौ भुजौ धिक् अयिमानिनि ! येषां शस्त्रपरिग्रहोयम् स्त्रीविवाहादौ शोभारक्षकः । किं बहुना । यदि राजा युधिष्ठिरो ब्राह्मणवद् घृणी न स्यात्तदा कः पुरुषो जीवन् प्रियापरिभवं सहेत ? भामिनि ! इतो गत्वा त्वं मद्गिरा मिथ्यासंगमे संविदं कुरुष्व । प्रच्छन्नोऽहमर्धरात्रौ नृत्यशालायां स्थितः परस्त्रीकामुकं तं तदसृङ्मत्तशिवाकंठग्रहोचितं करिष्य इति भीमसेनेनोक्ते पार्षती तथेत्याभाष्य गुप्तरीत्या सुदोष्णानिवेशन गत्वा च सुष्वाप । अन्येद्युः सा पुनः संगमार्थिनं कीचकं प्रोवाच । भद्र ! त्वयाऽहं मोहात्सजने कथं प्रार्थिता । अद्य निशि निर्जने कन्यानृत्यभवने त्वां प्रतीक्षमाणा स्थास्यामि । न कदापि विपर्ययः स्यात् । एवमाकर्ण्य तत्प्रत्यभ्युपगमात्स स्वरूपविभवयोः सफलतां मन्यमानः परां निर्वृतिमाजगाम । ततो मनस्विनी कृष्णा कीचकेन संविदमादाय रहो मारुतिं गत्वा च तं विदितवृत्तान्तं विदधे । अथ संगमोत्सुकः कीचको दिनक्षयमाकांक्षी अहिना दष्टपाद इव क्षणं स्थातुं न शशाक । सोऽथ मदनमोहितः कदाचिदाकाशे दृष्टिं कलयति । कदाचिन् नेत्रे निमीलति । कदाचिदुपविशति ।

कदाचित्तिष्ठति । ततस्तदायुषा सह कमलोज्ज्वलेऽन्हि क्षीणे निधनदूतिकायां क्षपायां च समागतायां मुग्धोऽतितरां जहर्ष । ततोऽसावपुनः संगमाय यदा माल्यकर्पूरविशेषकालंकारानुपयुयुजे । तदा धूमवर्तिका तं कालांगुलीवद् व्यभिचारान्निवारयामास । अथ केशवलयावद्धकुसुमामोदलोलुभा मधुकरा इव कृष्णाः कर्मलवा स्तमनुजग्मुः । ततः पूर्वमेव प्रच्छन्ने भीमसेने प्रविष्टे कीचकोऽपि प्रसन्नतया रहो रंगभवनं प्राविशत् । अथ विलासिनस्तस्यात्युत्कटगंधमाघ्राय कोपाद् गन्धद्विप इवातिभैरवो भीमोऽभवत् । ततोऽतिसंतुष्ट कीचकस्तत्रस्थितां कृष्णां मत्वा समुपसृत्य च करेणान्ध इव स्पृशन् प्रोवाच । सुभ्रु ! औत्सुक्यादविलंबित एवाऽहं त्वां समुपागतः । पश्य । नैष मेऽधिको भूषापरिग्रहः । किं बहुना । वरांगना निरलंकारमपि मां प्रशंसंति । यतः स्वभावसुभगो जनो विदग्धानां हि तोषाय भवति । एवं बहुविधैः प्रियवाक्यैरात्मानं शश्लाघे कीचकः ।

तच्छ्रुत्वा भीमसेनो गंभीरगृहकोणेषु हुंकारैरिव पूरितां मंथरां गिरमादधे । अहोवत ! त्वं सुरूपोऽसि । सुभगोऽसि । बधूप्रियोऽसि । अतएव हि कुलागनां हर्तुं प्रगल्भस इति चित्रम् । शून्यविभूषण ! ते रूपविषये विवादो नास्तीति सत्यम् । परं क्वापि त्वयैवं विधः स्पर्शोऽनुभूतश्चेत्तदुच्यताम् मित्युक्त्वा ज्याघातकिणकर्कशं यमगेहार्गलागुरुं च भुजं तत्स्कन्धे विदधे । सोऽथ विलोलमाल्येषु केशेषु च कीचकमाकृष्य महानिलो द्रुममिव तद्विपुलंदेहं चकर्ष । ततस्तयोर्भुजस्तंभायुधे समरे प्रवृत्ते रात्रावदृश्यानामपि भूतानाम्महाविस्मयोऽभवत् । ततः कीचको भीमभुजाघातस्फुटितांगदनिर्गतैः स्फुलिंगैः पादपः खद्योतैरिव विरेजे । अथ कीचकेन मुष्टिभिस्ताड्यमानस्य च मारुतेः कुलिशाभिहतगिरिरिव भीषणो रवोऽभूत् । ततस्तयोश्च रणनिर्घातैः सनिर्घोषैश्चपातनैर्भुवनवासिनामकाण्डभूकम्पशंका बभूव । अथ भीमो विनदन् कंठं निपीड्य रक्तोद्गाराकुलाननं निष्पिष्य निर्जीवं कृत्वा च तं तत्याज । ततः स तद्गात्राणि जठरान्तर्निवेश्य मांसपिण्डोपमं निर्विभागं वपुर्व्यधात् । सोऽथ गूढवृत्तान्तं तं द्रौपद्यै विनिवेद्य गतविक्रियो महानसं च गत्वा सुष्वाप । अथाऽपरेन्हि लोकाः सैरन्ध्रया हर्षाद् दर्शितं निहतकीचकं च विलोक्य विस्मयविषादसंत्रासान् प्रापुः । ततस्तद्भ्रातरोऽनुगाश्च सैरन्ध्रीकृतमुत्पातं विज्ञायाऽतिदुःखिताः कोपात्तामुपाद्रवन् । अरे ! अस्याः पतिभिरेवाऽयं हतः । अत एवेयं कृत्याऽपि बधमर्हतीत्यभिधाय राजपुत्रास्तां चिताग्निना दग्धुं निन्युः । ततः सा सांकेतितनामाभिर्निजबल्लभान् क्रोशंत्यापि कीचकबान्धवैराकृष्टा शरणं न लेभे । अथ भीमसेनः प्रियाक्रन्दं श्रुत्वा प्राकारमुल्लंघ्य मार्गपादपं च गृहीत्वा तत्सहायार्थमगमत् । ततः कीचकास्तमन्तकमिवायान्त

वीक्ष्य सहसा गन्धर्वभयशंकया कृष्णां परित्यज्य पलायिताः । अथ भीमो दशव्यामेन शाखिना तान्हत्वा बल्लभामाश्वास्य च स्वैरं स्वगृहं ययौ । ततो राजाऽपि गन्धर्वहतान् विज्ञाय दुःख विवशो भयात् सैरन्ध्रीं किंचन नोवाच । अथ भ्रातृवत्सला सुदेष्णा राजवचसा तामूचे । सैरन्ध्रि ! त्वं गच्छ । नेदानीं तव वास इहोचितः । तच्छ्रुत्वा सा याज्ञसेनी विनयादेव बभाषे । देवि ! पार्थिवो मम त्रयोदशाहानि क्षमताम् । वीरगन्धर्वाः पूर्णे संवत्सरे स्वपदमवाप्य मां नेष्यन्ति । तैर्युक्तश्च विराटनृपो जयमवाप्स्यति । निशम्यैवं विराटमहिषी महीपतेः किंचिदायासं शंकमाना भिया सैरन्ध्रीं किंचिदपि नोवाच ॥

अत्रान्तरे धार्तराष्ट्राः याँश्चरान् प्रेषयामासुस्ते प्रत्यागत्य पाण्डवा विनष्टा इति तेभ्यो निवेदयामासुः । अथ चारेण गन्धर्वहतान्कीचकान् विज्ञाय त्रिगर्तपतिःसुशर्मा कौरवेश्वरं व्यजिज्ञपत् । राजराजेश्वर ! पूर्वं विराटस्य यो बलवान् कीचकः पृतनापतिरासीत् । स सानुजो बलवत्तरैर्गन्धर्वैर्निशि निहतः । महाराज ! दृप्तराजकुलच्छिदस्त्रिगर्तजयिनश्च यस्य सिंहनादेन समरे नृपद्विपा न चलंति । तद्विहीनधनाढ्यमत्स्यराजलक्ष्मीं तरसा त्वमाहर्तुमर्हसि । राजन् ! कुलवैरिणस्तस्य सर्वगोधनमादायाऽहं तु सेनाकृष्टिं विधास्यामि । पश्चात्तत्र दूरं मां समभिद्रुते जयश्रिये महाबलेन त्वया गजबंधुरो मत्स्यपुरबंधः कार्यः । एतदाकर्ण्य कौरवपतिस्तामेव संविदमादाय कर्णादीन् पुरस्कृत्य च निखिलबलैर्निर्ययौ । अथ पाण्डवाज्ञातसमये संपूर्णे गोपालो सभास्थितमत्स्यराजमभ्येत्य प्रोवाच । देव ! त्रिगर्तराजेन तव गोधनं ह्रियते । कीचकाविरहितमत्स्यानां नवपराभवोऽयमुपस्थितः । तच्छ्रुत्वाऽभिमानी विराटो रथमारुह्य गजघटाघंटाटांकारबधिरादिशश्चकुर्वन् प्रच्छन्नपाण्डवैश्चतुर्भिः सह निर्ययौ । सोऽथ पृथुकार्मुको गर्जद्विराटजलदस् त्रिगर्तसेनामासाद्य विशिखावली ववर्ष । ततो मत्स्यराजस्तैः सार्धं रथकुंजरवर्तिविपादिवीरसहस्रं कीर्तिशेषतामनयत् । अथ शंखमादिराश्वसूर्यदत्तास्तत्सुतास् त्रिगर्तवाहिनीं विविशुः । ततस्तेषां हेमपुंखैः शरैर्विद्युल्लोलैरसिभिः संहारपिशुनैरस्त्रैश्च गगनं सदिग्दाहमिवाऽभवत् । ततः कालखड्गेन निर्धूते कटके संध्यारुधिरकर्दमे दिनमस्तक इव प्रयाते भास्करे दिशो द्विपमदस्फारविस्फारतिमिरैः समरत्रासान्मुक्तकेश्य इवाकुला बभूवुः ।

ततस्तत्र रथिकृत्तशिरांसि तालपक्वफलानीव सशब्दं पेतुः । अथ शोणिताम्भःप्रवाहैः सैन्यरजसि प्रशांते योधा विमलतारकालोके सुखं युयुधिरे । ततः शिवचूडामणिश्चन्द्रो व्योमद्विपेन्द्रस्य कर्णशंख इवोदियाय । तदंशुभिः पूरिता दिशः संमुखावहपातिशरयशोभिरिव शुशुभिरे । रणेऽस्मिन् विलोक्य वीरगतिप्राप्तान् खेचराः पुष्पाण्यवर्षन् ।

ततः प्रमदोद्भूतवेतालरक्षसां कुंभिकुंभपालैः पानकेलयो बभूवुः । अथ सानुज-सुशर्मा शरवर्षि विराटमभ्येत्य बाणै स्तं विरथं विधाय च जीवग्राहमग्रहीत् । अथ रणाद्विरथमादाय रंहसा गन्तुमुद्यते सुशर्मणि बले च भग्ने युधिष्ठिरो भीममुवाच । वत्स ! त्वं पश्य । योऽस्माकं चिरमाश्रयः स मत्स्यपतिः पश्यतां शूराणां सुशर्मणा मद्गुनेव नीयते । अयं मानाभिजनसुभुजानां कृतज्ञः कालो यशः कुसुममाधवश्च संप्राप्तइति निगद्य सानुजो राजा जवात्तमभ्येत्य च बाणैः सुशर्मभटसहस्रमवधीत् । ततो भीमनकुलसहदेवा अपि सरथिभटसप्तशतीं हत्वा त्रिगर्ताधिपं चाक्रमन् । ततो भीमसेनोऽभिसृत्य सुशर्माणं मापेष्य पूर्वतद्रथं तत श्चरणेन च तत्सारथिं जघान । अथ भीमो विराटं मोचयित्वा प्रहारैर्मूर्छितात्मनस् त्रिगर्ताधिपशिरः पादेनालोडयामास । ततो भीमो बधार्हमपि प्राप्तं तं युधिष्ठिरगिरा दासोऽस्मीत्यनुवादिनं कृपया तत्याज । अथ प्रहृष्टो विराटो लज्जाविकुंठवदने सुशर्मणि प्रयाते पाण्डवान् बभाषे । अहो ! कंक-प्रधानैर्भवद्भिर्यदहं विजयीकृतः । तस्मान् मत्सहितमिदं राज्यं यथेष्टं ह्रियताम् । निशम्यैवं मत्स्यपतिवाक्यं प्रसन्नपाण्डवाः सर्वे कृतमिति प्रत्यवदन् । ततो विश्रांतसैनिको राजा स्वपुरे विजयोत्सवं समादिश्य तां रात्रिं तत्रैव तस्थौ ।

अथ प्रभाते गोकुलाधिपो नगरं समभ्येत्यान्तःपुरस्थं मत्स्यपतितनयं च प्रोवाच । राजकुमार ! भुजशालिना त्वया राजा सदा वीरपुत्राभिमानित्वं वहति । संप्रति तस्मिन् युद्धाय निर्गते शत्रुकुलबधव्यग्रे च शून्येऽस्मिन्नगरे किन्न भवान् राष्ट्रपतिः ? एष राजा दुर्योधनो विपुलबलार्णवैर्यशसा सह सर्वं वो गोधनं हरति । किं बहुना । यस्मिन् प्रसर्पति भूमिर्गजवाजिमयी नभश् छत्रध्वजमयं दिक्चक्रं च चामरमयं जातम् । उत्तर-कुमार ! मानिनः कुरुनाथस्य तत्सैन्यं समरे त्वां विना को द्रष्टुमप्युत्सहते ? साम्प्रतं पराक्रमैकसचिवस्त्वं कुरून्प्रति प्रत्युद्गच्छ । निशम्यैवं गोपतिवचो वैराटिरुत्तरो जनन्या वधूनां च सन्निधाविदमभ्यधात् । गोकुलनिरीक्षक ! कुरुनाथसैन्याम्बुदो गर्जितसिंह-नादैस्तावदेव धनुर्धत्ताम् । यावदुदंचदुग्रकल्पान्तवातप्रतिमो वैराटिर्नैवाभ्युपैति । यदि मे बलानुरूपः सारथिर्भवेत्तदा त्वहं रणाग्रे सहसा कुरुमानसानि धनंजयोपागमशंकितानि कुर्यामित्युक्ते राजपुत्रेण कृष्णाऽन्तर्विहस्य प्रोवाच । महाराजकुमार ! तव-स्वसुर्यो नृत्याचार्यो वृहन्नडेति विख्यातः । स पूर्वं खाण्डवदाहे सव्यसाचिनः सारथिर-भूत् । येन प्रचण्डगांडीवखंडिताखंडलद्विषो यंतृत्वमङ्गीकृतं । तेन किं भवत्सारथ्यं न क्रियते ? क्षिप्रमुत्तरां विसृज्य तं सारथ्येऽर्थयस्व । पत्न्या इवास्याः प्रणयवचनं स न

न करिष्यति । निशम्यैवं सैरन्ध्रीवचो राजपुत्रो रभसान्निजामनुजां विसृज्याशु वृहन्नडामानिनाय ! ततो निवेदितस्ववृत्तेन वैराटिनाऽर्थितो जयो यथाकथंचित् सारथ्येऽभ्युपगमं विदधे । सोऽथ ग्रामीणवत् कनकोज्ज्वलं कवचं विचित्रचेष्टाभिराबबंध । तद्विलोक्य सर्वान्तःपुरस्थाः कन्याः पुन पुनर्जहसुः । ततः स्मितपल्लविताधरा विराटतनया रथारूढं ध्वजांशुकं समुत्क्षिप्य प्रोवाच । वृहन्नडे ! समरे त्वया जितकौरवाणामंशुकावली मत्केलिपुत्रिकाहेतोर्हर्तव्येति ब्रुवाणां तां पार्थस्तथेत्युक्त्वा राजपुत्रे समारूढे रथे तुरंगान् समचोदयत् । अथ तेन प्रेरिता जवशालिनस्ते वाजिनः क्षिप्रं क्षोणीमस्पृशन्त इव धावन्तो विजयमसूचयन् । ततो वैराटिर्नगरपर्यन्तश्मशाने शमीपर्यन्तमासाद्य विपुलरजो दृष्ट्वा च प्रोवाच । अहो ! भीष्मद्रोणकृपकर्णद्रौणिदुर्योधनदुःशासनैरभिगुप्तं शस्त्राकुलं सागरोपमं च कुरुराजसैन्यं नाऽतिदूरम् । यत्र पर्वताकारा गजा पवनोपमावाजिनो मंदिरतुल्या रथाः व्याघ्रसमानाः सैनिकाश्च दृश्यंते । वृहन्नडे ! सहस्ररश्मिप्रतिविम्बदीप्त कृपाणदावानलदुर्निरीक्ष्ये महारथव्याधशरान्धकारे च सेनावने हरिणोऽहं किं करोमि ? हंहो तावज्जवेन निवर्तस्व यावद् दृप्यद्द्विपघोरगर्जैः करालवेल्लत्करवालधारः शत्रुरकाल मेघश्च मां न पिनष्टीति कातरराजपुत्रवाणीं निशम्य दन्तद्युतिव्यंजिततारहारा वृहन्नडा तं सस्मितमवादीत् । भूपपुत्र ! वीरगणमध्ये तव संगररंगभंगाद्वयं लज्जमहे । यतो यशो हि कल्पांतशतैकसाक्षि । जीवितं च कुंजरकर्णलोलं भणितम् । सखे ! ऽशस्त्रपूतपुरुषास्तु मंदानिलांदोलितपारिजातलतावधूनर्तितनंदनानि कांतासमेतसुरमंदिराणि च न लभंते । वीर ! त्वं मातुरुत्तरायाश्च पुरतस्तथाविधां प्रतिज्ञां कृत्वा पलायनोत्साहपुरःस्थितोऽसीति चित्रम् । कातराणां ह्रीमानाचिन्ता न भवतीत्यक्षरशः सत्यम् । निशम्यैवं वृहन्नडावाक्यं पृष्ठे पततीं कुरुराजसेनां पश्यन् विस्रस्तहस्तच्युतचापदण्डः सोऽब्रवीत् । सुसारथे ! या कीर्तिर्देहनाशादुत्सर्पति । ताम्मूलविनाशिनीं दुःखदां च धिक् । द्रविणेन देहं विक्रीय कोनु देवकुले यात्रोत्सवं करोति ? तया कीर्त्या किं क्रियते । या लोके स्वयमेव न श्रूयते न च विलोक्यते ? गतासोः कंठेकृता कांचनपद्ममाला किन्नाम गुणं करोति ? चकितावलाग्रे गृहे को नाम सुखेन संग्रामचर्चां न वदेत् ? परं रणावकाशास्तु मत्तासिपाताहतदंतिदंताटंकारघोरा हि भवंति । को नाम समरे भीष्मद्रोणकृपकर्णान् सहेत । येषां पुरः साक्षाद् वज्रधरोऽपि शौर्यप्रतिमां न विभर्तीति मन्ये । एवमुक्त्वा शुष्कास्यविलोलनेत्रो वैराटी रथादवतीर्य तूर्णं जगाम । अथ पार्थो वेगात् तमनुससार । कौरवास्तं विचित्ररूपं दृष्ट्वा विमर्शशून्याः स्वनेन जहसुः । ततो भीष्मद्रोणकृपा मिथः

प्रोचुः । स्त्रीवेशधारी प्रलम्बबाहुश्चैष पार्थः । समरेऽयं शरौघैरवश्यं क्रोधविषं विमोक्ष्यतीति प्रतीयते । अथ पार्थेन केशैर्गृहीतो मत्स्यसूनुः कृपणं जगाद । वीर ! मां विमुंच । तेऽहं कांचनदंतिरत्नरथानुगं द्रविणं ददानि । ततो जिष्णु र्विक्रोशतस्तस्य वचनं निशम्य सस्मितं जगाद । त्वं मे तुरगान्नियच्छ । अहं ते रिपुबलं विद्रावयिष्यामि । उत्तर ! अस्मिन्नुच्छ्रमीस्कन्धानिकुंजकुंजे पाण्डवायुधानि संति । तेभ्यो भुजसंनिभमर्जुनचापं मे प्रयच्छ । सखेऽत्र विलंबमानशवे विशंकां मा कृथाः । असौ हि गूढमायास्ति । निशम्यैवं वैराटिर्धैर्यं धृत्वा च पलाशिलीनीन्तां शमीमारुरोह । ततस्तत्र जांबूनदचित्रभांसि धनूंषि दीप्तानसिसायकांश्च दृष्ट्वाऽतिसंतुष्टो बभूव । सोऽथ तानि विमुच्य जग्राह । ततोऽसावर्जुनगिरा ससायकं कार्मुकं परिज्ञाय पार्थाय प्रादात् । शेषान्यायुधानि तु तत्रैव स्थापयित्वा शमीस्कन्धादवततार । अथोत्तरो निःश्वस्यापृच्छत् । वीरवर ! सुरेन्द्रतुल्यास्ते पंचाऽपि क्वगताः ? तच्छ्रुत्वा स्मयमानः सोऽब्रवीत् । सखे ! कंकद्विजो युधिष्ठिरः । सूदोभीमः । किरीट्यहम् । गोतुरगाधिपौ नकुलसहदेवौ । पार्थः अर्जुनः श्वेताश्वः जिष्णुः बीभत्सुः धनंजयः सव्यसाची कृष्णः कपिध्वजः फल्गुण एतानि ममैव नामानि । वत्स ! धैर्यं भजस्व । ममास्त्रजालैर्दीर्यमाणां कुरुराजसेनां पश्य । असौ पणनिर्मितोऽज्ञातवाससमयोऽस्माकं भवद्वेश्मनि सुखेन निस्तीर्ण इत्यर्जुनेनाभिहिते प्रहृष्टो वैराटिस्तूर्णं कांचनजालबद्धं रथमारुह्य तुरंगानचोदयत् । ततोऽप्रमेयः सर्वभूतानुगः कपीन्द्रोध्वजे सन्निविष्टिगतः । यत् प्रभाभिर्गगनं सवाडवोद्गारमर्णवांभ इव बभूव । ततो धुतचापदण्डोऽर्जुनः शंखमध्मासीत् । अथाशनिनिःस्वनेन नादेन संमूर्छिते मत्स्यसुते पार्थः समाश्वास्य महास्त्रचक्रं ध्यात्वा च गाण्डीवमाचकर्ष । अथ द्रोणाचार्यो ज्यास्फालनोत्थैर्वज्राद्रिनिष्पेषगभीरघोषैर्भुवने कम्पिते कुरुनाथमुच्चैर्जगाद । राजन् ! विमर्दशंसीन्यजयावहानि निमित्तान्युपलक्षयामि । कुरूणां रणे शिवा आशिवपरिष्वंगविलासलीलां करिष्यंति । सोऽयं पार्थः कपिध्वजेन रथेन समायातः । एष घनाघनास्फोटपटुस् स्यन्दनघोरघोषोऽस्मत् श्रुतिं पिनष्टि । एते गाण्डिववेगनुन्नाः शीत्कारिणः शराः कर्णपथेन यान्ति । विनिःश्वस्य च धनंजयवनवासखेदं निवेदयंतीव प्रतिभांति । निशम्यैवं गुरुवचो मन्युकृशानुपरितप्तः सुयोधनो भीष्ममुपसृत्य प्रोवाच । तात ! विग्रहोऽयमस्माकं विराटेन सह समुपस्थितः । तत्र हटादिव पार्थो योद्धुमकस्मात् कथमायाति ? यद्यनिस्तीर्णप्रतिज्ञो धनंजयः समायातस्तर्हि का नः क्षतिः । पुनर्वस्तुं वनमेव गमिष्यति । आचार्यस्तु शिष्यप्रीत्या पुनः पुनः पार्थं प्रशंसति । कौरवाणांधनुः शंखरथस्वनाश्चनाऽपूर्वाः । किमुच्यते । गुरुरयं

समरस्थितिं जानाति ? यो रणोत्सवे प्रत्यासन्नेऽपि शत्रुस्तुतिं विधत्ते । वयमधुना पण्डितं करुणानिधिं द्रोणं न पृच्छामः । समरे तु मानिनामुपदेष्टारो निस्त्रिंशा एव भवंतु । नाऽत्रयज्ञे परलोककथा न च प्रायश्चित्त प्रसंगः । पुनः कथं गुरुरुपदिशति । युद्धे तु भुजशालिन एव प्रमाणमिति भूपाले वादिनि गर्जति च सूतपुत्रे गाण्डीवगंभीरनिःस्वनं शृण्वन् भीष्मः प्रोवाच । राजन् ! सत्यपराक्रमैः पाण्डवैर्मासैः सहाधिको नियमितकालः समुत्तीर्णः । घोरवानरकेतनः श्वेताश्वोऽयं समायातः । अद्यापि श्रिया सह तव संधी रोचताम् । एतदाकर्ण्य दुर्योधनोऽब्रवीत् । पितामह ! नैतच्छक्यम् । ततः शांतनवो-दैवपराङ्मुखं मत्वा राजानं पुनर्जगाद । साम्प्रतं सुभटा यत्ता भवंतु । विधीयतां सेनाबंधः । सुसंयता वयं गाण्डीवधन्वना सह युद्ध्यामहे । सेनाचतुर्भागरक्षिता गावो नः पुरं यांतु । मानिनः पूर्वं विवादमूले हि रक्षां शंसंति । राजन् ! त्वमन्येन चतुर्थभागेन समावृतो नागपुरं गच्छ । यतः स्वामिरक्षणमेवजयोऽस्ति । वीर ! कर्णकृपद्रोणिप्रमुखभटैर्वृतोऽहं पर्वतो नदीवेगमिव वीभत्सुं धारयिष्यामीति शांतनवेनोक्ते सुयोधनस्तथा चक्रे । अत्रान्तरेऽनिलालोलपताकोऽर्जुनः पुनराययौ । अथ पार्थस्तूर्णं व्रजन्तं धृतराष्ट्रजं हसन् वैराटिं प्राह । सखे ! यत्र सुयोधनस्तत्र याहि । एष सर्वा गास्समादाय गजाह्वयं प्रयाति । गतेऽस्मिन्नमूलविफलयुद्धेन नः किमिति पार्थेनोक्तो वैराटिः कौरवमुपाद्रवत् । सोऽथ प्रसरत्खुरैः सपक्षैरिव तैरश्वैः प्राप्तः । ततो भीष्माद्या महारथिनो दुर्योधनायैव तूर्णमभिद्रुतं पार्थं दृष्ट्वा निवृत्य राजानं पर्यवारयन् । अथ धनंजयः पुनरेकीभूतां सेनां दृष्ट्वा हृष्टः सन् पुष्करावर्तनिःस्वनं शंखमापूरयामास । ततः शंखध्वनिगजभूतनिनादैश्च जगदाकुलितमिव बभूव । अथ जयो गाण्डीवमाकृष्य ज्याघोषमकरोत् । येनोत्पुच्छास्त्रस्ताश्च गावो जवान्मत्स्यपुरं ययुः । ततस्तासु प्रतिनिवृत्तासु सव्यसाची महीभुजां मृत्युदूतीमिव निरर्गलां शरावलीं प्राहिणोत् । ततस्तदुत्सृष्टैः शुभ्रपक्षैर्बाणैर्द्विपाधिपा बेल्लद्बलाकावलयाः कालमेघा इवाकुला बभूवुः । ततो विकर्णप्रमुखाः कौरवाः शिलीमुखैः पार्थं तूर्णं फुल्लकिंशुकविभ्रमं चक्रुः । अथार्जुनशरासारैस्ते विध्वस्तरथध्वजा गिरिभग्ना अनिला इव क्षिप्रं विमुखा दुद्रुवुः । ततः क्रुद्धः फल्गुणो नाराचैर्भ्राजिष्णुरत्नमुकुटं कर्णमव्यात्सीत् । ततोऽर्जुनसायकैर्वीरशिरः पद्मैश्छादिते भूतले द्विरदाः कमलाकरनिर्वृतीः प्रापुः ।

तत्र रुधिरावर्ते पतितानि नृपशिरांसि समरश्रियः पादन्यासोपलाशंकां चक्रिरे । ततो धनंजयो भग्नेगजघटाबंधे शरेण कर्णभ्रातुर्ललितं शिरश्चकर्त । अथ कर्णो

मृतानुजं दृष्ट्वा तूर्णमाकीर्णसायको धराधराङ्कुर इव तमभ्युद्ययौ । ततो धवलपक्षाग्रा कर्णशरावली क्रौंचभूधरं हंसमालेव पार्थं विवेश । अथाऽर्जुनो वैकर्तनं मनोरथशताभ्यस्तं दृष्ट्वा सोत्कण्ठमिव गाण्डीवं पुनराचकर्ष । ततो गाण्डीवं कर्णपार्थयोर्नैवरणमुखारंभे तारक्रोंकारैर्विस्कारोंकारविभ्रमं चकार । अथ धनंजयः कुंभिकुंभाग्रभेदीभिर्विशिखै रङ्गनृपतेरङ्गानि विदार्य प्रोढमुन्ननाद । तत्र पृथुशीत्कारा ये शराः पार्थेन प्रक्षिप्तास्ते सकंकटं कर्णं भित्वा सानिःश्वासा महोरगा इव वसुधां विविशुः । ततो दंभोलिभिन्नशिखरो धातुस्रावी भूधर इव क्षितजोक्षितः सूतपुत्रो विमुखं प्रति ययौ । ततोऽर्जुनः कृपं समभ्येत्य गुरुगौरवादप्रयत्नश्लथैर्बाणैर्युयुधे । तस्मिन्नवसरे सशक्रे त्रिदशमण्डले समरं द्रष्टुं प्राप्ते नभोऽनेकार्कमिवोद्भासिविमानमभवत् । एवं कपिध्वजः समरे हताश्वं हतसारथिं च कृपं विजित्यैकाकी जवाद् वीरानभिससार । ततो द्रोणः शोणाश्वेन कमण्डलुध्वजवता च रथेन तं समभ्युद्ययौ । अथ पार्थः पूर्वं न प्रहरामीति निश्चित्य विनयात् स्मयमान इवाशु बाणान् प्राहिणोत् । अथाचार्यविशिखव्रातच्छन्ने गगनमण्डले गाण्डीवधन्वना मुक्तशरा नान्तरं लेभिरे । ततस्ताभ्यां दिव्यास्त्रमण्डले समुदीरिते रणत्तारनूपुराः खेचरांगनास्त्रस्ताः प्रययुः । अथ गाण्डीवनिसृतः शरैराचार्ये दुर्लक्ष्यतां याते वरूथिनी सहसा व्यदीर्यत । ततो द्रौणिश् छिन्नवर्मध्वजं पितरं विलोक्य हेमकार्मुककेतुना स्यन्दनेन पार्थमुपाद्रवत् । तावथाचिरोज्झितै र्हेमनाराचसंचयै र्गगन दंतिनो हैमंसन्नाहमिवचक्राते । तत्र निर्विशेषं युध्यमानयोस्तयो र्वीरा द्रोणेर्बाणक्षयं विनाऽन्तरं ददृशुः । ततो जनाः समरे जयमक्षय्यशरं मत्वा तूर्णं द्रोणपुत्रार्थं पत्रिशकटानुपानिन्युः । अथ राधेयो रणे सव्यसाचिना संसक्तमश्वत्थामानमालोक्य धनुराधूय पुनर्ज्यांघोषमकरोत् । ततो धनंजयः शब्दं श्रुत्वा कटाक्षेण च तं निरीक्ष्य पुनः करटिनां घटाविघटयन्नभ्याद्रवत् । अथ क्रुद्धश्वेताश्वः कृष्टकार्मुकं तमभ्युपेत्य प्रोवाच । कर्ण ! सततं यद्विकत्थसे । तदद्य संग्रामे दर्शय । एनं लक्ष्मीजडमविवेकिनं च सुयोधनं विलुंठय सदाऽस्माकं यत् स्पर्द्धसे । तस्यायं निकषक्षणः समुपस्थितः । राजबल्लभ ! यस्यां वयं जिता सा नेयं द्यूतसभा । किन्त्वेषा तु करटिकाकुंठभटेन्द्रसुरता रणभूमिर्विद्यते । सूतपुत्र ! हर्म्येषु पानलीलासु च यत्सुयोधनमवोच स्तदद्य सर्वं कर्मणा कर्तुमर्हसि । वीर ! समरे ते वीरमानिताऽधुनैव दृष्टा । यन्मृतभ्रातरमुत्सृज्य द्रुतं गतवानसीत्युक्त्वा गाण्डीवं दूरं चकर्ष । ततः कृष्टकोदण्डः कर्णोऽपि कोपात् तमभाषत । अहो ! प्रतिभान्वितं सर्वं विसदृशं त्वं भाषसे । प्रायोऽन्तस्तुच्छासु वाणीषु भीरूणां हि प्रगल्भताऽऽकर्ण्यते । पार्थ !

पुरा त्वं सभायां जितोऽद्यापि किमजितोऽसि ? अरे ! जिता एव हि जीयंते । जिताः क्वचिन्न जयंतीतिब्रुवाणं राधेयं धनंजयो हेमपुंखैर्दीवव्याप्तमचलमिवाशु चकार । अथ कर्णशिलीमुखैश्छन्नः पार्थोऽपि विस्रवद्भूरिरुधिरो रक्ताशोक इवाबभौ । ततोऽर्जुनः कर्णशरासनं कनकोज्ज्वलां शक्तिं च छित्वाऽस्य सर्वपदानुगान्मुहूर्ताज्जघान । अथ खलनर्मोपमानेन मर्मभेदिना सव्यसाचिपत्त्रिणाविद्धो राधेयः सहसा मुमोह । ततः सारथिना विन्हलचेतसि तस्मिन् दूरं नीतेऽतिस्मितमुखं वैराटिं विनदञ्जयो जगाद । राजसूनो ! ऽधुना तत्र रथं प्रापय । यत्र रामशरश्रेणीव्रणालंकृतविग्रहः पितामहो विराजते । अहह । एष शान्तनवः शूरः । पुरुषार्थस्य परमावधि र्विद्यते । यद्धेमतालध्वजस्तेजो मूर्तमिवसमवेद्यते । यो दुग्धोदधिरिवोन्नद्धो लोलोज्वलांशुकश्च चन्द्रमण्डलमुद्गतं शुभ्रछत्रं स्वयश इव धत्ते । सखे ! गांभीर्यैर्धैर्याभरणो निःसंरंभपराक्रमश्चैष समरे मामेव प्रतीक्षत इति मन्ये । निशम्यैवं पार्थवचो विन्हलो वैराटिरब्रवीत् । महावीर ! रणे निर्विवरैः शरैर्मेऽङ्गानि दीर्णानि । वसारुधिरगंधेन शंखगांडीवनिःस्वनै दिव्यास्त्रदीप्त्या च मे सर्वेन्द्रियव्यथा जातेतिवादिनमुत्तरं श्वेताश्वस्तूर्णं समाश्वास्य तत्प्रेरितरथेन भीमपराक्रमं भीष्मं प्रायात् । अथ पार्थो नृपकायकुठारेण भल्लेन बाणवर्षिदेवव्रतध्वजं कुरुमनोरथैः समं चिच्छेद । ततः साम्राज्य इव रत्नाढ्ये वीरमान इव समुन्नते तस्मिन् केतौ निपतिते राज्ञाम्महद्भयमाविरभूत् । ततो दुःशासनप्रमुखा हेमपुंखशरैर्जयं नक्तं दीप्तौषधिच्छन्नं नीलाद्रिमिव चक्रिरे । ततो रुद्धसंचारः फल्गुणो नृत्यन्निव सधार्तराष्ट्रैर्महारथैरेत्य युयुधे । तत्र सैनिका निरंतरपतन्तं शरप्रयोगं वीक्ष्य कालैन्द्रजालिककृता मायेयमिति मेनिरे । तस्मिन्नवसरे नृपाणां पतद्भिश्छत्रचामरोष्णीषगजहयैः कोऽप्यपूर्वो व्यतिकरोऽभवत् । ततो रणे विपुला रक्तकल्लोलिनी शोणचंदनालिप्तेव तटिनीपतिं प्रीतये ससर्प । अथ धनंजयशरासारच्छन्ने गगनमंडले पिशिताशिनामकाण्डरजनीप्रीति र्बभूव । ततो रिपुवनेचिरसंभृतं कोपाग्निमुत्सृजन्तं स्फुरद्दिव्यास्त्रदहनज्वालाजटिलकार्मुकं । निवातकवचान्तकं च वीक्ष्य संहारचकिता वाहिन्यः शतधा ययुः । एवमालोक्य स्वयं वीरवरःशांतनवो दिव्यास्त्रमंडलै र्महास्त्रदुःसहं पार्थं सावष्टंभमयोधयत् । ततोऽर्जुनध्वजाग्रे भीष्मचापच्युतबाणैराघट्टितानि भूतानि स्फोटितदिक्तटं नेदुः । अथ श्वेताश्वः कृष्णानिकारवर्मिणो गांगेयस्य मूर्तं यश इव सितच्छत्रमुन्ममाथ । ततो देवव्रतास्त्रविद्धोऽर्जुनो निजव्यथां संस्तभ्य तत्परिहारार्थं पितामहचंडकोदंडं चकर्त । अथ भीष्मभटा अपरधनुषा सायकावलीं

किरंतं गांगेयं द्वितीयं सहस्रांशुमिव ददृशुः । ततः शक्राद्या देवा भीष्मेण सह युदुध्यमानस्य पार्थस्य निष्कम्प्यं शौर्यं पुष्पवर्षैरपूजयन् । अथाऽर्जुनो विशिखैर्गांगेयरथरक्षिणो हत्वा स्वास्त्रजालैस्तदस्त्राणां प्रतिबन्धमिव चकार। तस्मिन्नवसरे धनुष्यानर्जुनो राजभूषणरत्नेषु प्रतिविम्बिताऽनेकैर्विग्रहैरिव कुरुचमूमयोधयत् । अथ चक्रवत् तन्महास्त्रानिलावर्तपरिवृत्तानिभूतानि महीं धनंजयमयीमिव ददृशुः । सोऽत्र विचित्रे संधानादान सौष्ठवे लाघवे स्पर्द्धया कार्तवीर्यस्य सहस्रभुजतामिव ययौ । ततो गांडीवप्रेरिता विशालविशिखावली हंसमाला मानसमिव गांगेयमाविशत् । सोऽथ दशबाणविद्धो रथकूबरं विष्टभ्य वीरोऽपि निजसंज्ञायाः क्षणमीश्वरोऽभवत् । ततः सारथिना तस्मिन् वातजवहयैर्दूरं नीते सानुगः सुयोधनः स्वयमर्जुनं समभ्यायात्। सोऽथ वीरो हेमपुंखेन कर्णान्ताकृष्टसायकेन ललाटतटे पार्थं जघान । ततोऽसौ विस्रवद्रुधिरापीडो धातुचित्रद्विप इव रक्ताशोकमयीं मालां विभ्राण इव विबभौ । अथार्जुनो गांडीवमाकृष्य कुंजराधिपान् भिन्दानो मन्युशरेणाशदुरसि कौरवं जघान । ततो बाणहते तस्मिन् सहसा विद्रुतेऽर्जुनःप्रोवाच । वत भूपाल ! रणभंगे न शोभसे ? पूर्वं तु नरपतिस्ततोऽभिमानवाननंतरं कर्णमित्रं प्राप्य पुनर्लम्बमानायतोष्णीषं जयं च दग्ध्वा कथं पलायसे ? कुरंग इव कातरस्त्वं रणे पराङ्मुखो भूत्वा वंदिभिर्विक्रमाभरणं यशः कथं श्रोप्यसीति पाण्डवेनोक्तः सुयोधनः पुनः समभ्यायात् । यतो मानिनः सोत्प्रासा वैरिवाचो न सहन्ते। अथ ससैन्या भीष्मकर्णकृपद्रोणा मानांकुशपरावृत्तं तं दृष्ट्वा पर्यवारयन् । ततोऽर्जुनः कोपादेकीभूतान् सर्वमहारथान् बहुधात्मानं विभज्यैव समयोधयत् । अथ धनंजयो दयया पुष्पधन्वदयितं संमोहनास्त्रं नृपेषु समदत्त । ततस्तेनास्त्रेण मोहिता द्विरदा अकर्णताला हया निश्चला चमूश्च लिखितेवाऽभवत् । अथ तत्र पार्थेन्दूदये शनै र्दलोपमसैन्ये निमीलिते, राजाम्बुजवने च सुप्ते शिलीमुखा न विचेरुः । तस्मिन् समये निःस्पन्दचामरोष्णीषा निश्चलाश्चते नृपा निवाते सुप्तहंससरोवरोपमां दधुः । ततस्तेषां निद्रामुकुलितवदनांभोजमण्डले श्मश्रुलेखावली वहिर्भृंगभ्रमायितं चक्रे । तत्र तन्द्रानिमीलितदृशां नागानां गण्डमण्डले स्थिता मदघूर्णिता भृंगाली मूर्तिमती निद्रेव सुष्वाप । अथ जयः शंखं समापूर्य ज्याघोषमकरोत् । येन शूरकरेभ्यश्चापयष्टयोऽनायासमेव न्यपतन् । ततः फल्गुण उत्तरावचनं स्मृत्वा वैराटिमुवाच । सखे ! यशस्विनामेषां चित्राणि वासांसि समाहर । अत्रैक एव शान्तनवः प्रबुद्धः स्थितः । विहायैनमन्येषां वासांसि यावदिच्छसि तावदाहर । मित्र ! पूर्वमंगपतेः कांचनत्विषि वासांसि हृत्वा ततोऽभिमानिनः कुरुपतेः कदलीदलनीलानि वसनान्यानयेति पार्थेनोक्तो विराट नृपात्म-

जस्तथाकृत्वा रथमारुह्य च तूर्णं तद्गिराऽश्वानचोदयत् । तत्पश्चाद् भीष्मो बाणै र्जिजन्त- विजयमपूरयत् । सोऽपि परावृत्य तदश्वान् हत्वा हेलयाऽग्रे च गतवान् । अथ पार्थः क्व यात इति वादिनः प्रबुद्धकुरुराजस्य किरीटं छित्वा ततो जगाम । अथ लब्धसंज्ञे कुरुसैन्ये यथागतं च प्रयाते पार्थो बृहन्नडावेशं धृत्वा पूर्ववत् सारथि र्बभूव ।

अत्रान्तरे विजयिविराटो पुरीं प्रविश्य भीष्मप्रमुखान् कुरून्जेतुं यातं तनयं शुश्राव । अहो ! एको बृहन्नडासूतसहायो मम पुत्रस्तान् कुरुपुंगवान् प्राप्य कथं जीवेदिति राजा पुनः पुनरशोचत् । ततो दूतास्तूर्णमभ्येत्य विराटं प्रोचु र्महाराज ! भीष्मप्रमुखान् जित्वा गोवृन्दसमेतराजकुमारोऽत्र समायातीति वाक्यं श्रुत्वा विस्मया- विष्टो राजा स्वपुरे विजयमहोत्सवं समादिदेश । ततो वीरपुत्राभिमानिनि तस्मिन् प्रशंसति सुतमीषत्स्मितसुधाधौतधर्मनंदनो बभाषे । राजन् ! रणे तस्य वैरिनिर्दलनं किमद्भुतम् ? यत्र शत्रुसंहारार्थं कौंतेयो बृहन्नडा स्वयमुपस्थितेति ब्रुवाणं कोपकंपितो विराटः सावेगमक्षेण जघान । ततस्समीपस्था कृष्णा तदाघातसुतरक्तं हेमपात्रेण जग्राह । अत्रान्तरे पथिषु पौरांगनागणैः कुसुमैराकीर्यमाणो वैराटिः पितरं द्रष्टुं समभ्यायात् । सोऽथ राजधानीमासाद्य कक्षान्तरमतीत्यान्तःपुरं प्रविश्य च नरेश्वरं प्रणनाम । ततः स रक्तसंसिक्तकंकं दृष्ट्वा शंकाकुलोऽवदत् । तात ! केनेदमात्मविनाशिना साहसं कृतम् । तत्कलहं श्रुत्वा वैराटिः प्रोवाच । तूर्णमभयंप्रसाद्यतामन्यथा नास्ति कुशलमित्याकर्ण्य यत्नाद्राज्ञा प्रसादितो युधिष्ठिरो जगाद । राजन् ! मया रक्तं क्षान्तम् । भूश्च परिरक्षिता । अन्यथा तु यत्र मम शोणितं पतति । तद्राष्ट्रं न तिष्ठतीति त्वद्धितायैतद् वारितम् । यतस्त्वं हि नः परमाश्रयोऽसीत्युक्ते संहृते च रक्ते छन्नो जिष्णुः सभां प्राविशत् । अथ विस्मया- कुलो विराटोऽपृच्छदुत्तरम् । वत्स ! समरे महारथैः कुरुभिस्ते समागमः कथं बभूव ? निशम्यैतद् वैराटिः प्रोवाच । तात ! रणशालिनः कुरवो मया न विजिताः । केनाऽपि देवपुत्रेण तद् दुष्करं कर्म कृतम् । त्वं द्वित्रादिनैरवश्यं तं वीरं स्वयमेव द्रक्ष्यसीत्युत्तरो- ऽभ्यधात् । अथाऽपरेऽह्नि पुरे कोऽपि नृत्यगीतरसादरो महोत्सवः प्रावर्तत । तत्र गुप्तवेशाः पाण्डवा राजयोग्यं सम्मानमवापुः । ततस्तृतीयदिने धीरास्ते शुक्लवस्त्राणि परिधाय विराटसभामासाद्य च कांचनासनं भेजिरे । ततः फल्गुणस्तद्दर्शनस्मयाविष्टं विराटं प्रोवाच । राजन् ! सभास्तारः कंकोऽयं सर्वमहीपालमौलिलालितशासनो युधिष्ठिरः । एष बल्लभः साम्राज्यविजयी भीमसेनः । अहमस्म्यर्जुनः । एतौ गोतुरंगपती वीरौ नकुलसहदेवौ । इयं च सैरन्ध्री कुवलयेक्षणा कृष्णा । राजन् ! राजार्हमासनं न नामास्मासु समुचित-

मिति पार्थेनाभिहिते वैराटिस्तत्पराक्रमं सर्वमाश्चर्यं च विस्मयशालिने राज्ञे निवेदयामास । ततो भूपालो विनयात्पाण्डवान् प्रसाद्य प्रीत्या धनराज्यशरीराणि च सादरं समर्पयामास । अथ मत्स्यराजेन प्रणयात् प्रार्थितः पार्थोऽभिमन्योः कृते लालिताकृतिमुत्तरां सुतां जग्राह । अथ पाण्डवा रामकृष्णपांचालसौभद्रद्रौपदेयानानाय्य ननंदुः । ततः सबांधवाः सुहृदस्तान्-निस्तीर्णसमयान् ज्ञात्वा हर्षेण तान् द्रष्टुं समाययुः । अथाऽभिमन्युः पार्थार्जितनृत्यगीतां स्वरूपाढ्यां तामुत्तरां परिणीय मत्स्यराजभवने चिरं विललास ।

वनवासावधिमहासिन्धुमुत्तीर्य पाण्डवाः ।
वासुदेवप्रसादेन परमानंदमाप्नुवन् ॥
नारदाद्या मुनिवराः समेत्योचुः पृथात्मजान् ।
यत्र धर्मोजयस्तत्र सिद्धान्तोऽयं सनातनः ॥

इति श्री गद्यभारते विराटपर्व समाप्तिमगात् ।



श्रीमेदपाटदेशस्थमेकलिङ्गं सदाशिवम् ।
चतुर्वर्गफलप्राप्त्यै प्रणमामि निरन्तरम् ॥

॥ ओंनमःशिवाय ॥

# अथ गद्यभारते उद्योगपर्व प्रारभ्यते ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथाभिमन्युविवाहोत्सवे संगतानेकबांधवाः पाण्डवा विविधरत्नोज्वलां विराटसभां विविशुः । तस्मिन्नृत्सुभावसरे हेमासनोपविष्टैर्वृष्णिपांचालपुंगवैर्वीरवरैस्सा सभा त्रिदशशेखरैर्द्यौरिव बभासे । तत्रैकासनोपविष्टौ जनार्दनयुधिष्ठिरौ स्वांशुभिर्वैडूर्यहेमरुचिरां सभां चक्राते । ततोऽचिरान् मित्रोदयेऽभ्युदयशालिनि कौंतेये नृपनेत्रशतपत्राणि विकाशं भेजिरे । अथ कौस्तुभांशुताडिद्घनो घनश्यामो भवनोद्यानीलकंठान् नर्तयन्निव प्रोवाच । यदेतद् राजसिंहानां विदितमपि पुनरुच्यते । तद्दीर्घसंभृतान्तर्मन्युवेगजृंभितं ज्ञेयम् । यद्यपि नृपसमाजेऽस्मिन् कौरवागसां गणना न शक्या । तथापि कृष्णाकचग्रहो येषां केतुभूतःस्वयं प्रकाशते । लोके सामसाध्येऽर्थे सद्भिर्दण्डो नेष्यते । यथा हस्तावचेयेषु पद्मेषु कोहि परशुं प्राक्षिपेत् । श्रुत्वैतत् कैलासधवलच्छविर्हलधरो दंतांशुभिःक्षीरोदइव शीतांशुकलाः क्षिपन्नुवाच । यदेष जगद्बांधवः कमलाधवः प्राह । तदेव हि मतमस्माकं यतःसिद्धयः साम विना क्व मिलंति ? महाराज ! उपायोऽयं सर्वसुखदः सर्वसम्मतश्च ।

प्रायःक्षीणकोशसहाया उपायापायविवेकशून्या मरणारूढा एव च प्रथमं रणे दर्पं कुर्वंति । लोकेऽस्मिन् कःपुमान् सामसाध्यान् परान्हत्वा लक्ष्मीमण्डनदर्पणंयशः पश्चात्तापविनिःश्वासैर्मलिनं कुर्यात् । स्वबंधुबधलब्धा श्रीः प्रवृत्तापि स्वकपोलोद्धृतमांसैः श्लिष्टा कृत्ता नासिकेव न शोभते । क्रूरकर्मार्जिता श्रीरग्निशिखेव पूर्वं स्थित्वा पश्चात् कश्मलकज्जलैस्तमो विधायाशु च विलयं याति । अजातशत्रुगेहेषु कौरवा नन्दन्तु । कौरवेन्द्रहस्तिनापुरे च पार्था मोदन्ताम् । ये बंधुगृहोद्याने परस्परमयंत्रिता भुक्तोत्तरास्थाने सुंदरीनर्मसादितां च यांति । तेऽवश्यं धन्याः । मुग्धांगना मधु रहस्तंत्री मधुरगीतयः सुहृद्बंधुजनैश्च गोष्ठी पुण्यकल्पतरुफलमितिसमाकर्ण्य कोपांचितमुखलोलगण्डतांडविकुंडलः सात्यकिरसित्रणालुठन्मुक्ताहारे वक्षसि पुनः पुनः सितोत्तरीयमुदंचन् प्रोवाच । अहो ! दूरपरिभ्रष्टमानंमसृणमुच्यते । दीनदर्पाणामाक्रान्तिवि

कटा गिरः कुतः ? बधैकभेषजे शत्रौ यन् नृणां मनः स्निह्यति । सा त्वनासादितोदग्र-खड्गभीरुता कथिता । ये प्रतिष्ठया भयं हितव्याजाच्छार्तिं च रक्षंति ते निंद्याः । रणप्रिया वीरास्तेषां वचो न शृण्वंति । शौर्यधमाता हि मानिनः सुहृदामग्रे मृदवः मानिनीप्रणये नताः परावमर्दे च कठिना भवंति । ये जना अनाकृष्टासिचापा विस्मृतप्रथितागसो यां-चाविहितसामानश्चसंति । तेषां राजलक्ष्मीः छिन्नहस्तस्य कंकणवन्निरर्थकास्ति । मंत्रिमंत्रपरित्यक्तमन्युहालाहलो राजभुजगः परैर्बध्यते । यस्य भीरवः प्रमाणम् । यावद् गांडिवं पांडवदोर्दंडपीडां नायाति । तावत् परार्थेषु रूढस्नेहास्ते कौरवा न शाम्यंति । यावत् कर्णान्तगामिभिर्युद्धलक्ष्मीकटाक्षोपमैर्बाणैश्च विद्धा न भवेयु स्ता-वत्ते न कदापि रक्ततामायास्यंति । किम्बहुना । एते क्रोधाग्निसंजाततृष्णा मम शराः कौरवोरसां शोणितं नापीत्वा निर्वृतिं यांति । कृष्णापरिभवक्षांतिस्फूर्ज्जल्लज्जारजोजुषो भीष्मद्रोणकृपा अपि ध्रुवमसृङ्नदीस्नानं वांछंतीत्यभिधाय सात्यकिर्यथाकथंचित् क्रोधं संजहार । अथ तद्वचनास्वादलोलमौलिषु राजसु युधिष्ठिरं प्रतिष्ठाय द्रुपदोऽपि वचः समादधे । सभ्याः ! यद्रामकृष्णा वाहतुः स एवाद्यः सत्क्रमोऽस्ति । सात्यकिर्धन्यो यः शौर्यसदृशमेव वचोऽभ्यभाषत । बुधाः साध्यं स्पष्टमुदीर्य निर्वाच्यतां यांति । शत्रु-कांतास्रैर्विनातु तत्क्रोधनिर्वृतिर्न जायते । राज्ञां दूता विसृज्यन्ताम् । कृतकं साम चाभ्यर्थ्यताम् । स्थानद्वये पादौ दत्वा विचिन्त्यैकं च समाश्रयेत् । शल्यकेकयधृष्ट-केतुसेनाविन्दुभगदत्तजयत्सेनयुधामन्यूत्तमौजसश्च समानीयंतामित्युक्त्वा परमविचक्षणो द्रुपदो विरराम । ततः श्रीकृष्णचन्द्रानुमते विसृष्टदूता नृपान् प्रययुः । अथ द्रुपदो मुरारि-वचसा पुरोहितमनल्पवर्णं समाहूय प्रोवाच । द्विजेन्द्र ! तावत् त्वया गत्वा कौरवेन्द्रोऽसौ सामाभ्यर्थ्यताम् । यावदविलंबेन सैन्यं पूर्णतां नायाति । निगमागमपारगस् त्वमेव विचित्रं लघु सारवद् वक्तुं जानासीति पांचालराजेन विसृष्टः स कुरूनगमत् । तस्मिन्गते मधुरिपुः पाण्डवान् मात्स्यं चामंत्र्याऽपरवृष्णिवीरैः सह द्वारकां ययौ । अथ तद्दर्शनेऽतृप्ताः पार्था मानसं संस्तभ्य वान्धवगिरा बलसंग्रहे महोद्यमं चक्रिरे । अत्रान्तरे दुर्योधनधनं-जयौ रणे साहाय्यं याचितुं युगपद् रत्नभ्राजिष्णुमंदिरां द्वारावतीं ययतुः । ततस्तौ धूप-धूमशिखायितैर्नीलांशुभिर्व्याप्तं लक्ष्मीकेलीगृहमच्युतान्तः पुरं विविशतुः । अथ तत्र क्षीरार्णव इवापरे स्वच्छस्फटिकपर्यंके शयानं केशवं दृष्ट्वा निद्रायमाणस्य शीर्षान्ते कौरवश्चरणाम्बुजयोःपुरश्च फल्गुण उपाविशत् । ततः प्रबुद्धो भगवान् श्लिष्टांजलि-पुटस्पृष्टकिरीटं धनंजयमग्रे दृष्ट्वा यावत् कुशलं पृच्छति । तावदेव शय्योपधानलग्नांसं

सुयोधनमप्यपश्यत् । ततस्ताभ्यां भवान्युद्धे सहायोऽस्त्वित्यभ्यर्थितः परावृत्य कौरवाभिमुखो देवोऽब्रवीत् । पूर्वं तावद् भवान्प्राप्तः । चरमं च श्वेतवाहनः । परंतु पूर्वं संदर्शनात् पार्थ एव मां वृणोति । भूपते ! अहमयोद्धा तुलायामेकस्याम् । द्वितीयस्यांच वृष्णिसेनाऽक्षौहिणी । भागावेतौ समानौ । तत्र त्वमक्षौहिणीं गृहाणेति शौरिणोक्ते सुयोधनो वृष्णिसेनामधिकभागं मन्यमानो विहस्य तथेत्यूचे । ततोऽसौ केशवेनाऽभ्यनुज्ञातः कृतवर्ममुखैर्गुप्तां तां वरूथिनीमादाय हस्तिनापुरं प्रययौ । अथाऽर्जुनोऽपि वचसा त्यक्तसंगरं सारथ्ये च बद्धप्रतिज्ञं हरिं लब्ध्वा पृथ्वीलाभं करामलकवदमन्यत । ततः कृष्णः श्वेतवाहनः श्रीकृष्णं च समामंत्र्याल्पशीघ्रपदानुगो युधिष्ठिरान्तिकं प्रायात् । अत्रान्तरे कौरवस्तुल्यच्छन्नसंमानभोजनै बहुविधैर्नृत्यगीतैर्माल्यरत्नवरांशुकैर्नृपार्होपचारैस्तैस्तैः पथिषु कल्पितैश्च धर्मसूनुसहायार्थमागतं शल्यं जहार । आदौ स तेन सेवितः सहायतां प्रतिपन्ने लज्जाकुटिलकन्धरो युधिष्ठिरं दुःखं ययौ । ततो युधिष्ठिरेण विनयात् पूजितः सोऽभ्यधात् । राजन् ! व्याजसम्मानभोजनैः कौरवेन्द्रेण हृतोस्मि । अथ द्यूते कृष्णापरिक्लेशं वनवासादिकष्टवृत्तान्तं च नरेभ्यः श्रुत्वा युधिष्ठिरदुःखकथान्ते मद्रपोऽवदत् । पुरा शक्रस्त्वष्टृसुतं त्रिशिरसं जघान । ततः क्रुद्धस्त्वष्टा तद्व्रतशंकितः पुनर् वृत्राख्यं सुतमजीजनत् । येन तपोविजितास्सुरा नाहर्निशं शर्म लेभिरे । अथैकदा देवासुरसंग्रामोऽभवत् । तत्र सुरसंहारदीक्षितोऽसौ वज्रिणं हेलया कवलीकृत्यापि निर्विकाराननस्तस्थौ । अथ विधातृदिष्ट्या जृंभया तस्मिन् विनतानने संकोचितांगो देवराजः सहसा बहिर्निर्ययौ । ततो बलनिषूदनो विष्णुं शरणमभ्येत्य तद्वधोपाये मंत्रं समवाप । अथैकदा स तरस्विना वृत्रेण साम्ना सख्यं समादाय तन्निपातने सदा गूढरन्ध्रं चिंतयामास । ततः शक्रो विष्णुशासनमनुसृत्य वज्रगर्भेण फेनेन संध्यासमाधिस्थं वृत्रमवधीत् । एवं तस्मिन्हते घोरब्रह्महत्याक्रान्तो वृत्रहा चक्रवद् भ्रममाणोऽपि क्वचिन्न प्रत्ययं लेभे । ततः पापप्रदीतात्माऽसावतिविपुलं सरो गत्वा मृणालवाले वसतिं कृत्वाऽतिष्ठत् । ततः शून्यसुरालयं दृष्ट्वा समिद्धमुनिसमेताः सुरा वासवाधिकं नहुषं शक्रपदेऽभिषिषिचुः । सोऽथ नवैश्वर्यविमोहितः शचीं प्रार्थयामास । यतो मूर्खा महत्पदमवाप्य न चिरादात्मविनाशं सेवंते । ततो बलिना तेन पुनः पुन र्याच्यमाना सा सती बृहस्पतिं शरणं ययौ ।

ततस्तद्गिरा सा निर्दिष्टस्थानं गत्वा तत्र प्रच्छन्नं मरुत्पतिं ददर्श । अथ प्रेयस्या पृष्टो विषमस्थोऽसौ वृत्तान्तमाकर्ण्य निःश्वस्य च प्रोवाच । कमललोचने ! दुर्मदोऽसौ सहसा विनाशयितुं न शक्यः । साम्प्रतं त्वमितो गत्वा युक्तिमास्थाय च तं मन्मथासक्तं

ब्रूहि । सप्तर्षिस्यन्दनारूढः स्वैरं मा मेहीति भर्त्रा समादिष्टा छन्नचारिणी पौलोमी तूर्णमेत्य नहुषेण तामेव संविदं विदधे । ततो देवराण् नहुषो मुनिरथं कृत्वा त्वरितो व्रजन् सर्पेति चरणाग्रेणागस्त्यमस्पृशत् । ततो मुनिशापेन रथात् पतितोऽसौ सर्पयोनिमवाप । यश्च त्वया पुरा मोचितः । ततो गुरुवाक्यात् पुरंदरो नदीस्त्रीवृक्षशैलेषु ब्रह्महत्यां निक्षिप्य स्वस्थोऽभवत् । अथ देवगुरुकथनादकल्मषो भूत्वा देवराजो निजराज्यमवाप्य दयितया सह ननंद । एवं ये विजयोद्यमे महेन्द्रविजयोपाख्यानं शृण्वंति तेऽवश्यं जयं लभंते । धर्मराज ! अतएव हि मयेदं वृत्तं वर्णितमित्याख्याय मद्रेश्वरो विरराम । अथ विजयैषिणा मद्रराजेनाभिहितं शक्रवृत्तमाकर्ण्य विनयावनतो युधिष्ठिरः स्वैरं व्याजहार । मातुल ! गतं न शोचनीयम् । संप्रति कुरुपक्षाश्रितेनापि त्वया सूतपुत्रतेजोवधविगर्हणां कृत्वाऽस्मद्धितं समाचरणीयम् । तच्छ्रुत्वा तथेति प्रतिश्रुत्य च शल्यो गजगंडालिमण्डलैर्भुवनसंनाहं दिशन् कुरून् प्रति प्रायात् । अत्रान्तरे गरुडध्वजः सात्यकिचेकितानसमेतः पाण्डवान् प्रत्याययौ । द्वितीयेऽन्हि जयत्सेनो मागधः समागच्छत् । ततः केकयधृष्टकेतु कुंतिभोजा विपुलानीकैर्वसुंधरां निस्संचारां कुर्वन्तः समाजग्मुः । तस्मिन् समये ता वाहिन्यस्ते शस्त्रवीचीविशृंखला गजग्राहाः पार्थसैन्याब्धिमवाप्य दुर्लंघ्यतामिव ययुः । अत्रान्तरे प्रवृद्धसैन्येषु पाण्डवेषु युद्धार्थमुत्सुकेषु कौरवेषु च धीरपुरोहितो भीष्मद्रोणकृपकर्णशल्यवाल्हिकसेवितां राजसिंहगुहां प्रविश्य सत्कारं लेभे । सोऽथ सर्वाननामयंपृष्ट्वाऽवसरमवाप्य च प्रतिभोन्मेषनिर्विशंकमतिः प्रोवाच । महाशयाः ! धृतराष्ट्रस्य पाण्डोश्च यथा क्रमप्राप्ता मही तन्नाम लोके विदितम् । अपरंच यथात्मा तथात्मजोऽत्र नास्ति कोऽपि संदेहलेशः । पार्थः पूर्वं स्वेच्छया भवद्दत्तां कृशामपि श्रियं समवाप्य स्वपुरुषार्थेन शुक्लपक्षश्चन्द्रकलामिव पूर्णतान्निनाय । यथाऽस्य सा हृता तद्वक्तुं नैव नो मतमेति । अविस्मृतनिकाराणामसमर्थता नहि नाम । वनवासावधिः पूर्णः । गुप्तवासोऽप्यतिवाहितः । साम्प्रतं पितामहपितृव्यैर्नो वृत्तिः स्वांशेन कल्प्यतामिति यौधिष्ठिरं वचो विनिवेद्येंगितज्ञो द्विजो नरेन्द्रवक्त्रेषु दृशमादधे । अथानंदनिर्भरो धीमान् भीष्मः प्रोवाच । दिष्ट्या शमार्थिनः पाण्डवाः । दिष्ट्या संगरं नेच्छंति । दिष्ट्या गाण्डीवदहनं महारथा न प्रविष्टाः । दिष्ट्या सर्वे महीभुजः कृतान्तस्य च विस्मृता इति ब्रुवाणे गांगेये कर्णः कोपादभाषत । पितामह ! यदि विजिता अनुकंप्याश्च पाण्डवा याचंते । तर्हि गंभीरघोषगर्भस्ते किं प्रहर्षः ? त्वया सर्वदा मिथ्यास्तुतिभिः पाण्डवा उच्चैः क्रियंते । इति कर्णवचः श्रुत्वा भीष्मो विहस्योवाच । अहोनु राजवल्लभ ! मंत्रिन् ! त्वमेव प्रभुहितमाभाषसे ।

खला न समरे स्थातुं शक्ताः । न च शान्तिं वांछंति । नूनं भृष्टोभयपदा स्वयं म्रियंते च परान् मारयंति । राधेय ! घोषयात्रायां गोग्रहे च स्वयं पराक्रमं दृष्ट्वापि साम्प्रतं सौहार्दं नेच्छसीति चित्रम् । निशम्यैवं पितामहवचः प्रज्ञाचक्षुर्नरेश्वरः सादरं प्रोवाच । पितामहेनायतिदर्शिना यदुक्तं तदमीषां भूमिपालानां नः कृत्स्नकुलस्य च श्रेयः । संजय ! धर्मज्ञयुधिष्ठिरमासाद्य मद्गिरा ब्रूहि । येन सौहार्दस्थापनं भवेत् । चिन्तयित्वाऽप्यहं किंचिन्मात्रमपि किल्बिषं यस्य न पश्यामि । स धीमान् धर्मतनयः । तत्सन्देशोऽप्यन्तरशः सत्यइति वैचित्रवीर्येणोक्तो गावल्गनिस्सपुरोहितः पाण्डवान् प्रययौ । सोऽथ जयशालिना रथेनोपप्लवग्रामस्थान् समासाद्य तदादिष्टश्च शनकैः सभाभवनमाविवेश । तत्राऽसौ संजयो युधिष्ठिरमभ्येत्य कृष्णभीमधनंजयचेदिसृंजयपांचालमत्स्यमागधकेकयैर्विराजितां भास्वत्स्वप्रभाभरणाननां सभां निजनाम परिकीर्तयन् प्रणनाम । ततो नृपो बान्धवकुले कुशलं पृष्ट्वोवाच । अप्यस्माकं सभार्याणां कुरुपुंगवाः स्मरंति ? अपि संजय ! प्रवृद्धवैराग्नेः शमाम्बुभिः प्रतीकारं वांछन् राजा सामञ्जस्येष्टो ह्युपक्रमोऽस्ति । अपि नास्मते तत्कर्म येनानुशयतापितः कीर्तिमुक्तावलीं मुहु निःश्वासैर्म्लानीकरोति ? गजघटाभोगविस्तीर्णामात्मश्रियं विलोक्यापि नाऽसौ तादृंष्यायूंषि वेत्ति ? अप्यस्मान् वंधुभावेन वीक्षमाणोऽप्यम्बिकासुतः कुलैकनाशपिशुने पुत्रवचने न स्थितः ? निशम्यैवं संजयोऽतिमधुरं राजवचनं प्रत्यवदत् । महाराज ! कौरवेश्वरः सर्वत्र साधु वर्तते । यद्ययुद्धेन भवान् संतोषमेष्यति । तदातु महाराजाधिराज ! क्षमावरवधूहारा गतकिल्बिषश्च कुरवो विद्यंते ।

महान्तः संशयपंजरं युद्धं न प्रशंसंति । यतो मित्रबंधुक्षयात् प्राप्तो जयोऽप्यत्र पराजयोऽस्ति । अथवा मन्युव्याप्तो यदि निष्कृपो वर्तसे । तदा तु वनवासादियंत्रणा वृथैवानुभूताः । यदि सरलचेतसस्ते धर्मः प्रमाणं न स्यात् । तर्हि तु भीमार्जुनक्रुधा सर्वेऽपि कुरवो न स्युः । सर्वक्षयफले युद्धे विभूत्यै मा मतिं कृथाः । त्वादृशां श्रियोऽलोभाभरणा एव शोभंत इति संजयेनाभिहिते धर्मसुतो दंतत्विषा स्वच्छांनिजाशयं प्रकटयान्निव प्रोवाच । कदास्माकं युद्धैषिणीं वाचं श्रुतवानासि ? लोकसंहारचकितो नैवं तदभिभाषस्व । निजा श्रीरपरित्याज्या बान्धवाश्च रक्षणीयाः । अस्मिन् दोलाचले कार्ये जनार्दनो नः प्रमाणमित्याकर्ण्यधर्मराजवजनं माधवो बभाषे । संजय ! युद्धमधुना युष्मदायत्तं वा मम । सत्यव्रता इमे पांण्डवास्तु पंचभिरेव ग्रामैरप्यनुरुक्षः । यद्यतोऽपि कौरवोऽमीषां सम्यङ् न वर्तेत । तदातु गाण्डीवनिसृतशरमण्डलैः कबंधताण्डवोद्भूचंडां निजामनीकिनीमवलोकयिष्यसीति शौरिवचः श्रुत्वा सानुज-

भूपतिमामंत्र्य च प्राप्तानुज्ञः संजयस्तूर्णं कुरून् प्रति ययौ । सोऽथ हस्तिनापुरं गत्वा दिनातेऽध्वपरिश्रान्तो द्वाःस्थैरावेदितो धृतराष्ट्राय वीरवरपाण्डवकुशलमावेद्य प्रातस्तद्वाक्यं वक्तास्मीत्युक्त्वा स्वगृहं च ययौ । तस्मिन् गते शंकमानो राजा विदुरमानाय्य स्वहितं पप्रच्छ । भ्रातः ! संजयोऽद्य वीरपाण्डवान् गत्वा प्रत्यायातः । न जाने प्रातः सभायां स किन्नुवदयति ? निशम्यैवं क्षत्ताऽब्रवीत् । किम्परितप्यसे ? संप्रति विबुधस्याऽपि ते किं व्यसनमागतम् ? दुर्लभांगनोऽकृतार्थः कामी बलिनाक्रान्तोऽति दुबर्लश्चौरः गणितान्तरो लोभी मित्रवाक्याचमंता चेति जना दुर्वारप्रजागररोगपरिपीडिता भवंति । कल्याणशीला हर्षक्रोधविवर्जिताश्च मनीषिणश् चिन्ताज्वरेण नहि स्पृश्यंते । येन विकारो लक्ष्यते । कृच्छ्राणि च संतरेत्तत् पाण्डित्यं प्रचक्षते । पण्डिताः समस्त संशयावासमनर्थायतनं घोरं तमःप्रसादनं न प्रपद्यंते । मंत्रे मतिर्भये धैर्यं प्रगल्भता व्यवहारे पाण्डित्यमेतदभिहितमतोऽन्यथा शुकपाठः । गुणानुरागः, विनतिः विवेकः, साधुसंगमः, कार्येष्वसंमोहोऽयं विदुषां स्वभावः । यो वृत्तिहीनोऽप्यकार्यं न कुरुते । बलवानपि न गर्वं धत्ते । दुःखितोऽपि न संतापं भजते । स पण्डितोऽभिधीयते । यः प्रतिभावान् संसदि समुन्नीय वदति । कर्म चाऽनिन्द्यं कुरुते । स विद्वानिति गण्यते । परोपकारे चतुराः परापकारेचाऽविदग्धाः एवं विधा विपश्चितोऽस्मिन् लोके दुर्लभाः । ये मदक्रोधलोभमोहमनोभवैः सर्वत्र पुत्रकवत्सदा यथाकामं नृत्यंते । तान् मूर्खान् धिक् । तैर्विवेकरहितैः पदे पदे निपतद्भिः किम् ? येषां जीवितमायासो निधनं च प्रियाशिषोपमं भण्यते । सर्वज्ञतामानी मूर्खो महाशयो वित्तहीनः कोपकटुकोऽप्रभु श्चेतादृशो मूढः कैर्न विडंब्यते ? येऽनिमित्तपिशुना दोषावलोकिनश्च संति । तानप्रशस्तचरितान् प्राज्ञो घूकानिव विसर्जयेत् । यत्सहसा वृद्धिं याति । तन्मूढमतमवगच्छ । यथा पर्यंतकाले दीपस्य बहुलीद्युतिर्भवति । महात्मनां वाणी नाऽसत्यमलिना । मनो न कार्पण्यमलिनम् दृष्टिश्चमात्सर्यमलिना न भवति । राजन् ! कुलान्तकं सुतं त्यज । स्वधर्मान्मा विमुखो भव । लोके धर्मसमो बन्धुः सत्यसमं च मित्रं नास्ति । पुरा विरोचनसुधन्वानौ दैत्यपुत्रद्विजसुतौ दैत्यकन्याकेशिनीमंन्दिरं सह जग्मतुः । तत्र तयोः संघर्षशालिनोर्हेमासने न्यस्ते वयंश्रेष्ठा ? इति मिथो विवादः समजायत । ततो जातमत्सरौ तौ जीवितं पणमादाय विरोचनपितरं प्रल्हादमुपययतुः । ततस्ताभ्यां दृष्टो वृत्तान्तं च निवेद्य प्रष्टः प्रल्हादः-पुत्रमवदत् । वत्स ! नाऽहं सत्यमुत्सृष्टुमुत्सहइति दैत्यराजेनोक्तेऽतिसंतुष्टः सुधन्वा तत्सत्यशीलतां प्राशंसत् । विजितपुत्रं स्वयम-

त्यजत्। अहो! धन्यः स सत्यभूषणः प्रल्हादो यः पणीकृतप्राणमपि पुत्रं परित्यज्य धर्ममर्यादां ररक्ष। महापुरुषलक्ष्मीर्विनयाभरणा। मनःकौटिल्यरहितम्। वाणी सत्यभूषणसंयुता च भवति। महीपाल! भूम्यर्थे सत्यं हातुन्नार्हसि। संसारविषमाध्वनि सत्यमेव पाथेयं प्रोक्तम्। पुंसां यथा यथा मतिः कल्याणाभिनिवेशिनी भवति। तथा तथा प्रतिपदं निखिलसंपदः सूते। वृद्धहीना सभा हता। अधर्मवादी वृद्धो हतः। कलिसंश्रयं च सत्यं हतम्। आयतिदर्शिनो विबुधा जन्मान्तरेऽप्यसुखदं पश्चात्तापजननं च कर्म न कुर्वते। पुराऽऽत्रेयो हंसरूपो महीश्वरो साध्यैः पृष्टः प्रोवाच। विजितमन्यवो धीरा हि संपदाम्पात्रम्। अमलचेतसां गिरो न मर्मभेदिन्यः। दृशो न सभ्रूभंगाः। विकाराश्च न कटुका भवंति। नीचा धनिनो न सेव्याः। मदोद्धता नानुगम्याः। सुहृदो लुब्धा न कार्याः। बलिशालिनश्च नाक्षेप्याः। राजन्! सुयोधनस्नेहात् किल्विषे मनो मा कृथाः। मरणादूर्द्धं तमो हि निरंतरं लम्बमानं तिष्ठति। योऽनागतदोषेषु संवृतिं न जानाति। स व्यसने संनिपत्य विवशः किं करोति? निशम्यैवं विदुरवचनं धृतराष्ट्रो निःश्वस्योवाच। प्राज्ञ! जयं धर्मानुजं जाने। किंतु मे सुतो न त्याज्यः। लोकेऽस्मिन् विधातृविहितं को नामाऽतिवर्तितुमीश्वरः? भवितव्येनादिष्टं सत्यं न भविष्यतीति न। क्षत्तः! पुरा मृत्युर्नास्तीति गूढवचो मया श्रुतम्। तत्कथमिति राज्ञा पृष्टो विदुरोऽब्रवीत्। राजन्! अहमवैदिकः शूद्रोऽस्म्यतः श्रुतिगर्भं रहस्यं कथं वक्तुं शक्नुयाम्? योगीन्द्रः सनत्सुजातो बालएव सनातनोऽद्य मत्स्मृतः स्वयमभ्येत्य त्वद्वाक्यं प्रतिभाषतामित्यभिधाय क्षत्ता ध्यानमास्थितस्तं सस्मार। सोऽथ ध्यातमात्रोऽभ्येत्य राज्ञा पृष्टोऽभ्यभाषत। राजन्! य एष पुरुषो वदनादुदेति। स एव क्रोधोऽन्तकः सर्वमिदं निहंति। अयं हि कामांजलिनाऽशेषं जनौघं पिबति। नाऽन्यः कोपि मृत्युः। प्रौढारिषड्वर्गमयोऽन्तरस्थो नराणां मृत्युः स एव। न शमनो मृत्युः। राजन्! जन्मनैव मृत्युः संयतोऽस्ति। तस्मिञ्जन्मन्यपेते मृत्युः क्वास्ति? शुष्कक्रियामात्रनिषण्णचित्ता विप्रा न नाम मरणं जयंति। वेदयज्ञतपस्तीर्थसेवा अपि तन्नैव निवारयंति। ये निरत्ययं निर्वृतिधामशोकहर्षातिरिक्तातिगुणत्रयं भजंति। तेषाममृतं स्वसंवित्। क्रोधमृत्युस्तुमूर्खानुपैति। क्रोधः स्पृहा शोकः तृष्णा अभिमानः लोभः असूया जुगुप्सिता ईर्ष्या कामः विचिकित्सा मोह एते द्वादशदोषा एव नृणां मृत्युरस्ति। पराक्षराधिगमेन तपोव्रतेज्यानियमानिबन्धो मोक्षः स्यात्। तत् परमाक्षरं तारासूर्याग्नितोयेभ्योऽपि प्रतिष्ठितम्। यच्च शुक्रतो ब्रह्म महत् प्रकाशं याति द्यौर्दिशो विदिशश्च भांति। राजन्! यत् प्राणितः खे विवस्वान्राजति

स सनातनो योगिवरैर्मृग्यः । तष्णात्त्वयाजन्ममृत्युभयं निवर्तते । शुकुरोबरिता योगीन्द्रा दृश्येऽमृतमाप्नुवंति । तस्मान् मृत्युर्नास्तीत्युक्त्वा पीयुषकिरणाकारः सनत्सुजातो नृपतिं समामंत्र्यान्तर्हितोऽभवत् । तच्छ्रुत्वा राजाऽपि चकितो बभूव ।

अथ प्रभाते भीष्मद्रोणकृपादिभिः सह धीमान् धृतराष्ट्रो विपुलरत्नासनवर्ती सभां प्राविशत् । ततो वंदिगीयमानपराक्रमा भगदत्तादयो नरेश्वरा अपि मरकतस्तंभश्यामे रसातले समागत्योपाविशन् । अथ कर्णान्तसंसर्पिचामरो मदमंथरकुंजरेन्द्र इव श्रीमान् सुयोधनोऽपि प्रविवेश । ततो हेमासनोपविष्टेषु भ्राजिष्णुमौलिषु देवोपमेषु च तेषु संजयो राजसभां प्रविश्य पुरस्समुपाविशत् । अथ धृतराष्ट्रः क्षणं ध्यात्वा विवक्षुं संजयं जातनेत्रः श्रुताविव पार्थसंदेशं पप्रच्छ । खांडवतुष्टोऽग्निर्यद्यशो वंदीव गायति । गावल्गने ! स धनंजयः किमाह ? पूर्वं तामवार्तां कथयेति नृपतिना पृष्टः संजयः प्रत्यभाषत । राजाधिराज ! मित्रमंडलमध्यस्थकिरीठी मां यदभ्यधात् । तच्छ्रूयताम् । श्रीमद्भीष्मद्रोणकृपकर्णद्रौणिशल्यशकुनिबाल्हिककृतवर्मप्रभृतिमहीभुजां सन्निधौ पितुरग्रे च सुयोधनं श्रावयेथाः । चेत् कृपालुधर्मराजस्य राज्यं त्वं न मुंचसि । तदाऽयं गांडीवप्रणयी मद्भुजस्तव गुरुर्भविता । गदानिर्भिन्नमत्तेभकुंभकूटसमुद्गते रुधिरावर्ते दुस्तरे समरे त्वं भीमं द्रक्ष्यसि । यमाविमौ रथोद्भूतरजोभिश्छादितेऽम्बरे महिषाविव तव सेनासु यमविक्रीडितं करिष्यतः । धृष्टद्युम्नो रजस्वलाः कंपमानाश्च तव सेना विदारयन् कृष्णाकोपप्रतीकारं च विधास्यति । स्फुरद्बाणस्फुलिंगवलयाकुलो धनुःशिखः शिखंडी रिपुगहने धूमकेतुतां यास्यति । सात्यकिसायकैर्महारथघटाबंधे भग्ने विद्रुताः कुरुवाहिन्यः सहस्रधा यास्यंत्येव । सौभद्रस्य वीरवक्त्राब्जपातिताः शिलीमुखाः कौरवस्त्रीवैधव्यदीक्षिता भविष्यंति महारणेऽस्मिन् । राजन् ! चैद्य मत्स्य द्रुपद कुंतिभोजादिभूपतीनां पुरः के नाम युद्धे स्थास्यंति । यो भूतसंघे विश्वकर्मकृतां मायां बिभर्ति । मे रथे तं कपिकुंजरं कुरवो द्रक्ष्यंति । किंबहुना । साक्षात् कैटभसूदनो भगवान् स्वयं यस्य सारथिः । स रथस्तूर्णमायातो यदि शक्यते । तर्हि तु वार्यताम् । सुयोधन ! स्वमनोरथमिव कर्णरथं भग्नं दृष्ट्वाऽचिराद् हितकामानां बान्धवानां गिरां संस्मर्तासीति संजयेन फल्गुणसंदेशे निवेदिते भूमिपालानां कपोलपुलकद्युतिरभवत् । ततो भीष्मो मणिभित्तिषु तद्वक्त्रप्रतिबिम्बितैः पूरितामिव मेघगंभीरां गिरमादधे । दुर्योधन ! अतिनिकटे प्राप्तंघोरव्यसनं न जानीषे ? मन्ये क्षितिपतयः कालकटाक्षेणलक्षिताः । को नु पुमान् लोकसंहारपिशुनौ सूर्याविव समुद्यतौ कृष्णावेकरथे द्रष्टुमुत्सहते । विरंचिप्रभृतिभिः सुरैः प्रार्थितावेतौ नरनारायणौ पार्थगोविन्दौ भूभारशांतयेऽवतीर्णौ । हिरण्यपुरवासिनः सपौ-

लोमाः कालखंजा नरावतारेणाऽर्जुनेन हता इति नारदो मामवोचत् । कर्णस्यास्य कर्णमधुरा मुहुर्मुहुर्वाचो निशम्यायं ते दर्पमोहो जातस्तेनेयं सकला मही विनङ्क्ष्यति । प्रायेण धूर्ताः प्रियंवदा विभवेष्वेव राजसमीपे तिष्ठंति । व्यसनानिलापाते तु ते तूलवद् दिशो यांति । यैरेव मुग्धस्वामी दुर्नयसंकटे पात्यते । दूरस्थैस्तैरेवजडोऽयमित्युपहस्यते । राजन् ! नास्त्यत्र संदेहः । लक्ष्मीः कमलिनी राज्यचंदनभोगिनो भृंगाः सुखकाननवह्निर्णोऽवसानेषु च न दृश्यंते । कर्णः पुराऽब्रवीत् । यत् पार्थान्रणेऽहं हनिष्यामि । तद् घोषयात्रायां गोग्रहे च स्वयं त्वया दृष्टम् ? तच्छ्रुत्वा श्वसन् वैकर्तनोऽवदत् । समयेऽस्मिन् न मे वक्तुं युज्यते । यदि महीपतेः समरारंभो न स्यात्तदा तूपेक्षां कृत्वा कश्छेदशीं मर्मविच्छेदिनीं गिरं सहेतेति व्याहृत्य संरंभाद् गाढावलोखिना चरणाग्रेण मणिकुट्टिमं शाणकोणघृष्टमिवाऽकरोत् । भीष्म ! यदा त्वया विरहितं राजसैन्यं भविष्यति । तदाऽहं योत्स्य इति निगद्यांगेश्वरो बहिर्निरयात् । ततो धृतराष्ट्रो ध्यात्वा पुनः संजयमपृच्छत् । अपि युधिष्ठिरो नरपतिः कौरवैः शममिच्छति ? तत्र के योद्धारः ? कियच्च च विपुलं बलम् ? निशम्यैतत् । संजयोऽब्रवीत् । राजन् ! धर्मराजो मनसाऽपि विग्रहं नेच्छति । तस्य बलसंग्रहो वर्णनातीत इत्युक्त्वा सहसा मोहमुपागमत् । ततो मुहूर्तात् सावधानो भूत्वा पुना राजानमभ्यधात् । मत्तद्विरदुर्गमा शस्त्रास्त्रवर्षगहना च सा पाण्डवसेना कं नाम न विमोहयेत् ? भुवि गजा हया रथाश्च न वर्तंते । सर्वं गजाश्वं तत्रैवेत्यहमचिन्तयम् । सात्यकिः द्रुपदः शैब्यः शिखण्डी पंचकेकयाः चेकितानः जयत्सेनः युधामन्युः उत्तमौजाः धृष्टद्युम्नः विराटः धृष्टकेतुः घटोत्कचः सौभद्रः द्रौपदेयाद्याश्च वीरा युयुत्सवस्तत्र संति । एतदाकर्ण्य वैचित्रवीर्योऽतिविषण्णः पुनरब्रवीत् । यथा भीमाद्भयं मे तथाऽन्येभ्यो नास्ति । हाऽहं भीमगदाघातनिर्भिन्नभुजवक्षसां पुत्राणां प्राप्तं निधनं पश्यामीव । किमन्यत् । पार्थशरैर्निरुद्धे व्योममण्डले हता अपि नृपा दिवं गंतुं न शक्ष्यंतीति मन्ये । निशम्यैवं पितृवचः प्रौढामर्षसुयोधनो राजसिंहानां मुखानि पश्यन् सोत्साहमभ्यधात् । वीराः ! प्रसंगोपात्तं कथ्यते । सभायामात्मप्रशंसनं हि निन्द्यम् । यत् तुल्यकुल्यान् पाण्डुसुतान् कोऽधिकान् मन्यते । तेषां मक्षौहिण्यः सप्त । मम चैकादश स्थिताः । पुनः कस्मादनालोच्य नः पराभवं शंकध्वे ? अथवाऽयमेकाकी गजस्थो भगदत्तोऽक्षौहिणीनां लक्षाण्यपि रणे जेतुं समर्थ इति मन्ये । यत्र शान्तनवो गोप्ता ससुतो द्रोणश्च पृष्ठपोषकस्तत्र पुरंदरादपि भयं नास्तीति मेऽनुभवः । बृहद्बलः शल्यो गण्यः । ससैन्धवो बाह्लिको मान्यः । ममैते सेनाग्रगाः । एतेषां तुल्यः पार्थेषु स्वयं मृग्यतामित्युक्ते धाते

राष्ट्रेण सखेदो विदुरोऽवदत् ! अहो ! स्वजनवैरेण समग्रं भारतकुलं विनष्टम् । पूर्वं जालबद्धौ खगौ पश्यतो व्याधस्य बलाज् जालं नीत्वा विहायसोत्पेततुः । ततो मिथोभेदात् तत्पतनं शंकमानः पाशजीवी दूरं नभोऽवलोकयँस् तावनुययौ । अथाऽचिन्तयोश्चंचुनखायुधे कलहे जाते सजालावधःपतितौ धीमता च तेन गृहीतौ । एवं कुरुभेदेन सर्वनाशोऽयमुपस्थितः । किमुच्यते । कालरात्रिमहोत्सवः प्रत्यासन्नः । अत्रान्तरे स्वयं वेदव्यासस्तत्रागत्य कारुण्याद् गान्धारीं सुयोधनं च प्रोवाच । पुत्र ! पार्थेभ्यो निजराज्यं दत्वा क्षिप्रं जीवितं रक्ष । दुराग्रहमवलम्ब्य स्वकुले विनाशान्तक केतुताम्मागमः । किम्बहुना । यदि त्वं न शृणोषि । तर्हि धृतराष्ट्रस्तु मे शृणोतु । यत्र देवो जनार्दनस्तत्र तु ध्रुवमभ्युदयं विद्धीत्युक्त्वा पश्यतां भूभुजां तूर्णं मुनिरन्तर्दधे । ततो नृपतिना पृष्टो गावल्गनिरभाषत । राजन् ! मनीषिणो यस्याद्भुतकर्माणि प्रत्यहं वर्णयंति । स जगत्पतिः स्वयं मधुरिपुः पाण्डवार्थे समुद्यतः । यः समस्तहृदयावासाद् वासुदेवो वशितया विष्णु ररिमर्दनाज्जनार्दनो दमाच् च दामोदरः कथितः । संजयेनेत्यभिहिते प्रज्ञाचक्षू राजा वाचा देवं प्रशंसन् मनसा च तं ववंदे । अत्रान्तरे धर्मसुतः कौस्तुभे प्रतिबिम्बितः प्रीत्या हृदये विशन्निव हरेः पुरः प्रोवाच । प्रभो ! सर्वज्ञस्य तवाग्रे यत् किमप्युच्यते । तदनुक्तमपि सर्वं पुनरुक्ततां प्रयातीति व्यक्तम् । संजयस्तदाऽभ्येत्य यद् बह्वर्थं स्वल्पमुक्तवान् । तत्र नाद्यापि वैचित्रवीर्यस्य विमलं मनः संजायते । यदा स पुत्रस्नेहात् स्वराज्यदानेन शमं न वांछति । तदा धर्म्ये स्वधने कथमस्माकमुपेक्षणं युक्तम् ? जनोजम्बुकत्यक्तेऽरण्ये कीटनिष्कुपितोदरे शवेचाऽप्यास्थां दत्ते । परं धनवर्जिते न । अधनो नरः सकुटुम्बोऽप्येकाकी । सत् कुलजोऽप्यविश्रुतो विद्वानपि निराचारः कथ्यते । धर्ममूलत्वात्सततमर्थो गरीयान् । धनहीनो दाने विषयभोगे च किं करोति ? यो दरिद्रः सहि पापो भवेत् । यः पापः स भवेन्निर्धनः । पापदरिद्रयोरभिधामात्रभेदं मन्ये । निर्धनास्तु निधनं गता एव । यो भ्रष्टैश्वर्यः स शोच्यते । लोकोऽयं यद्दुःखेन निःश्वस्योर्ध्वं च समुदीक्षते । कथं नु क्षत्रियो भूत्वा नम्राननो निजभुजार्जितं राज्यं परित्यज्य विराटनिर्दिष्टां श्रियं भजेयम् । यदुनंदन ! कठिनेयं समस्या । पुरा यः श्रीमानभूत् । परमधुना दैवात्परिच्युतः स पुरुषः कृपाविष्टैरेवं दत्तं नहि भुंक्ते । लुब्धसुयोधनो नाऽयुद्धेन राज्यं प्रदास्यति । लोके भोगपरिणतां लक्ष्मीं कस्त्यक्तुं स्वयमीश्वरो भवति । बह्वपायमयं मानसंशयं च युद्धं धिक् । यत्र सुहृद्बन्धुभृत्यजीवितविक्रयैर्जयः समवाप्यते । केशव ! यथा विनैव युद्धेन राजा धृतराष्ट्रोऽस्माकं राज्यांशं प्रयच्छति ।

तथा त्वं कर्त्तुमर्हसि । किंबहुना । वारणाव्हादीन् निर्दिष्टपंचग्रामान् वा स्वेच्छितग्रामान् नो ददातु । निशम्यैवं धर्मराजवचनं कैटभारिरभाषत । नरपते ! एवमेतत् । साधवस्सदा शममेव वांछंति । राजन् ! सर्वभूभुजां श्रेयसे स्वयमेवाऽहं तत्र व्रजामि । जाने कुरुवृद्धो नरेश्वरो ममवचः स्वीकरिष्यति । अथ सोऽपि यदा सुतस्नेहमोहादुत्पथं समेष्यति । तदा वयं सद्धर्मवर्तिनां वाच्या न भविष्यामः । तच्छ्रुत्वा कौंतेयः पुनः केशवमब्रवीत् । कृष्ण ! तत्र ते गमनं तु मह्यं नाभिरोचते । यदुनाथ ! क्षुद्रदुर्योधनः पापमित्रयुतो यथास्मान् पीडयत् । तथा कदाचिद् भवन्तमपि बाधेतेतिब्रुवाणं महीपालं मधुसूदनोऽब्रवीत् । राजन् ! संशयं मा कृथाः । नाऽसौ मयि प्रगल्भते । यदि ताः कुरुराजसेना असांप्रतं कुर्युस्तदा मत्कोपकवलीकृता मुहूर्तान्न भविष्यंतीत्युक्तवति विश्वक्सेने युधिष्ठिरोऽभ्यधात् । प्रभो ! जगद्गुरोस्ते कः शिक्षागुरुतां प्रयाति । किं बहुना । भवानेन संदेहे प्रमाणमित्याभिधाय पुनः प्रोवाच । श्यामसुन्दर ! तत्र गत्वा त्वया कुंती समाश्वास्या । ततः पुनरायातं कृतार्थं त्वामनामयं द्रक्ष्याम इति भूभुजोक्ते भीमार्जुननकुला अपि प्रोचुः । भगवन् ! राजचक्रे सुयोधनं तत्तद्ब्रूयाः । येनाऽसावस्माभिस् सह प्रशममिच्छति । तच्छ्रुत्वा सहदेवोऽभ्यभाषत । कृष्ण ! त्वं तत्तद् ब्रुवीथा यथा नो सन्धिर्न भवेत् । लोके को हि पराक्रमी विकारं विस्मृत्य प्रतिक्रियाविकुंठमनसा निरुद्यमत्वमवलंबते ? निशम्यैवं वाष्पपर्याकुलेक्षणा कृष्णा कृष्णमभाषत । माधव ! सभायां दुःशासनेन तथा कृष्टामपि मा मवलोक्य निर्वैराः पाण्डवाः संधिमिच्छंति ? किमन्यद् गर्भवासविनिर्मुक्ता इव यथाकथंचिदज्ञातवाससमयोत्तीर्णा एते तमापत्कालं न स्मरंतीति चित्रम् ! अहो ! लोभप्रवासदैन्येभ्यो यद्येषामहं विस्मृतास्मि । तर्हि किं धृष्टद्युम्नो दुःशासनमुखैः कौरवैर्न योत्स्यते ? किम्बहुना । संधिमिच्छता त्वया दुर्योधनं समेत्यापि मन्युनिकेतनं नेयं मे वेणी सर्वथा विस्मर्तव्येति कथयित्वाश्रुकणौघेन छिन्नहारलताभ्रमं चकार ।

एवमालोक्य शौरिरवदत् । क्षत्रिये ! माभैषीः । त्वमप्यचिरात् प्रत्यग्रभग्नवलया रिपुस्त्रियो द्रक्ष्यसि । ततः पार्थान् समामंत्र्य प्रसन्नात्मा गरुडध्वजो मैत्रदैवतमुहूर्ते सात्यकिना सह मेघनादेन रथेन प्रययौ । अत्रान्तरे वसुंधरा चकम्पे । वाताश्च सानिर्घोषं ववुः । अथ भार्गवादयो मुनयस्तं समेत्याहुर्महाभाग ! वयं कौतुकात् कौरवसभासीनं त्वां द्रष्टुमिच्छामः । ततो दिनांते वृहत्कूलं समासाद्य मुक्तवाहनः श्रीकृष्णोऽनुचरैः सह रात्रिन्निनाय । अथ धृतराष्ट्रो दूतैः स्वयं हरिं समायातं ज्ञात्वातिसंतुष्टो भीष्मप्रमुखान् सुतंचाऽब्रवीत् । भगवान् कैटभारातिरस्मान् समेष्यतीति

प्रवादो भुवि विश्रुतः । ततो भूरिरत्नानि तथा हस्त्यश्वस्यंदनं च नीत्वा मदाज्ञया मंत्रिणो वर्त्मनि हरिं प्रत्युद्यंत्विति ब्रुवाणे राजनि प्रशंसति पितामहे विदुरे च क्षणं ध्यात्वा हसन्दुर्योधनोऽब्रवीत् । तात ! केशवोऽतोधिकामपि पूजामर्हतीति सत्यम् । परं सोऽस्मान् युद्धसमारंभभीतान् मन्यते । एक एवाऽसौ मतिमान् पाण्डवपरायणं चास्ति । तस्मादेकं बद्ध्वा तान् समेष्यामीति मे गूढमनोरथो वर्तते । एवमाकर्ण्य विप्रियं कम्पा मानेऽम्बिकासुते भीष्मः प्रोवाच । नेदं भारतानां कुलव्रतम् । नाद्यावधि केनापि कृतो विश्वासघातः । राजन् ! तव तनयोऽयं दुर्निमित्तैकपिशुनः शलभः । कृष्ण-कृष्णवर्त्मानमासाद्य नैवं भविष्यतीत्यभिधाय निःश्वसन् संरंभशिथिलांशुको भीष्मो बहिर्निर्ययौ । अथ प्रभाते भ्राजिष्णुकौस्तुभः कंसारी रत्नाकर इव कुरुराजनगरं प्राविशत् । तत्र निविडगजरथतुरंगे कौतुकालोककांतानयनकुवलयालीलालितोत्तालसौधे मणिकनकविताना वितानालंकृते च राजमार्गे कैटभारिमनोज्ञवपुरतितरां शुशुभे । अथ लक्ष्मीपतिक्षण-निरीक्षणलालसानि पौराङ्गनामुखानि शैवालजालवलिताम्बुजपुंजशोभां प्रापुः । ततो रुक्मिणीरमणशारदाम्बरं शुभ्रशंखशाशिबिंबचुम्बितं हारतारकमवेक्ष्य च योषिन्मनांसि पुनः पुनरुल्ललसुः । ततोऽच्युतः कुंजरकपोलमिलल्लोलभृंगवलयान्धकारितं पृथुरत्न-तोरणं च द्वारमवाप्य धृतराष्ट्रं द्रष्टुं प्राविशत् । सोऽथ नृपतिपुरोधसा कल्पितार्पितां यथार्हसत्कृतिं सादरं समवाप्य देव ! श्वः कथा भविष्यतीतिधृतराष्ट्रमभ्यभाषत । ततो भक्तिमात्रैकतोषः कृष्णचन्द्रः कुरुकुलवृद्धां स्तूर्णमामंत्र्य विदुरशिविरमगात् । तत्र सुतकुशलकथाभिः कुंतीं स्वैरमाश्वास्यानंतरं च प्रासादं दुर्योधनस्य च प्रविवेश । अथ मिथ्या प्रणयितां दधानेन तेन भोक्तुं निमंत्रितः सोऽब्रवीत् । राजन् ! भुक्तिः प्रीतिपुरस्सरा वा विपदि क्रियते । तत्र केति युक्त्या निमंत्रणं सस्मितं विनिवार्य विदुरगृहं जगाम । ततस्तत्र यथेष्टं भुक्त्वा नीतिज्ञेन तेन सार्धं विविधाः कथाः कुर्वन् शर्वरीं निनाय ।

अथ प्रभाते पुरस्सुयोधनः शौरिं भीष्मद्रोणकृपशल्यसिन्धुनृपाश्रिते सदसि समाययौ । स तत्र राजमुकुटप्रभाशक्रायुधाकुलं कदयाम्बुदमतिक्रम्यांशुमानिव रराज । तत्र सकलभूपालधवलोष्णीषहारिणीं मणिकांचनमुक्तांकपर्यंकां सभां समायातं पुण्डरीकाक्षं दृष्ट्वा सकौरवास्सहस्रशो नृपाः समुत्तस्थुः । अत्रान्तरे नारदाद्या महर्षयोऽपि निजप्रभावितानेन पावकेन सेव्यमाना इव तत्र समाजग्मुः । ततस्तेषु प्राप्तासनार्घ्येषु हरिरप्यासनं भेजे । तस्मिन्नवसरे नीलमणिपीठाग्रन्यस्तपादः कृष्णः कालियस्यैव रणकौशलं पुनर्दर्शयन्निव व्यराजत । अथ नृपास्तस्य घनश्याममूर्तिं सितोष्णीषं धृतपांचजन्य-

शंखं दिव्यकुंडलच्छविं श्रीवत्सशोभितं पीताम्बरधारणं च विलोक्य निर्निमेषदृशो नेत्रसाफल्यमवापुः । ततो मंथावसानाब्धिमूके तस्मिन् सभातले किं वक्ष्यतीति स्रोतृकेषु भूपालेषु जगद्गुरु र्महामेघगर्जिताऽम्बरां गिरं समाददे । सभ्याः ! जगद्विनाशचकितैरस्माभिर्य-द्विहोच्यते । तद् वैचित्रवीर्यभीष्मद्रोणैश्च विविच्यताम् । हितोपदेशवचः प्रीत्या तावदेव निःशंकमभिधीयते । यावत्संसत्सु तत्प्रत्याख्यानविकुंठतां नायाति । गुणसाम्राज्ये कुल-मेव प्रतिष्ठितं किल । कुलाभिमानाभरणाहि सद्विभूतयः शोभंते । राजन् ! भरतवंशीय कुरुकुले समुत्पद्य तनयस्नेहमोहेन कथमुत्पथमास्थितोऽसि ! सत्कुलविचारं कृत्वा तृष्णामुखसुखं दुःखं च मत्वा तत् परित्यज । विस्मारसंसारविकाराः प्रभविष्णवो नहि भवंति । विनयवन्तः कारुणिकाः प्रशांतवैराश्च नरा रजोगुणासक्तिं न सेवंते । ये प्रीतिविस्रब्धमनसो निर्लोभविभवार्थिनः सत्पक्षपातसक्ताश्च संति । तेषां जगति पदे पदे मित्राणि विद्यंते । निवृत्तबांधवगणा ज्वलिता अपि लुब्धश्रियः श्मशानाग्निशिखा इव हृदयान्युद्वेजयंति । यत् ससुहृज्जनैर्बान्धवैर्निजवन्न भुज्यते । तत् स्वयोग्यमांस संपूर्णं गेहं न किंतु पक्ववणमेव । ते धन्या येषां गृहेष्वतिथयः सदैव परि पूज्यंते ।

विभूतीनां बंधुभोगः मृगीदृशां प्रियभोगः सुभाषितानां च विद्वद्भोगः सततं नवयौ-वनोपमं प्रथितम् । विवेकालंकृतं चित्तं गुणविवर्धितं रूपं लक्ष्मीश्च सुहृद्बंधुवृता पुण्यकर्मणां लक्षणं भणितम् । मित्रवन्धुविपक्षाणां जडसंग्रहकारिणां पापानां च विभूति र्मेघा नामिव क्षणस्थायिनीद्युति र्भवति । विज्ञस्य यस्य मित्राणि साधवस्तथाऽनात्मवान् पुत्रोऽपि शत्रुस्तेन वसंतेन काननमिव जगद् विभूष्यते । उक्तं च । सुखयुतो गृहस्थाश्रमः स्वर्गोपमः । येषां रत्नमुकुटं विनयः मणिकुडले सच्छास्त्रं त्यागश्च कंकणं तेषां जडमण्डनैः किम् ? भूमि-पालानां भ्रातॄणां च विनाशकालोऽयमुपस्थितः । उपेक्षितो लोकान् वेणुसंघट्टवन्हिवद्-दहेत् । भक्तपरित्यागः नृशंसता स्वजनेषु बलवद्भिश्च सह विरोधो विपदः प्रथमांऽकुरोऽ-स्ति । सुधासिन्धौ यशःसुधा कमलाकरे कमला राजचक्रेऽस्मिन् विनष्टेऽनुशयादृते कोगुणः ? महीधरा एते परस्वहरणायैव किं हन्यंते । अङ्गारकारणात्कैश्चूतचम्पकवनानि दह्यंते ? बलवद्बधलभ्या श्रीः प्रातिवेश्याभिमानेन दरिद्राणामुत्सव इव दुःखाय भवति । विजयोद्योगसक्तभूपालानाम्मूलमर्थाः । तत्र ससुहृद्बांधवसंग्रह एव मुख्यधनमभिधीयते । अत्र कोऽसौ धर्मात्माऽस्ति । यो युधिष्ठिराज्ञां शिरसा माल्यवन्नांगीकरोति । कुंभिकुंभ-स्तनीं खड्गवेणिकां चामरस्मितां प्रौढां च राजलक्ष्मीं भीमसेनमनाश्रित्य को नु भजेत ? अद्यापि हिरण्यपुरवासिनां गेहेषु प्रौढगाण्डीवनिविडध्वनिः शंखेन शाम्यति । यत् परा-

क्रमसाराणां च त्रिपुरान्तकः प्रमाणम् । तेन पार्थेन शंकितः को नु राजते ? प्रज्ञानयन ! सत्यमवलम्ब्य सर्वसंरक्षणं कुर्विति भारतहितां भारतीं कृष्णभाषितामप्यकृष्णां समाकर्ण्य सर्वे सभ्या मनसा केशवमपूजयन् । तच्छ्रुत्वा भार्गवोऽभाषत । भगवन् ! यदात्थ तदक्षरसः सत्यम् । यदि कौरवः शृणोति । अतः परं राजहितावधानेषु प्रमाद्यन् सोऽपराध्यति । पुरा दंभोद्भवो नाम मदान्धो राजा बभूव । सचैकदा युद्धार्थी परिभ्रमन् बदरिकाश्रमं जगाम । तत्र नरनारायणौ प्राप्य रणमयाचत । प्रायशो मूढा अपराजिता न शाम्यंतीति सत्यैषा लोकोक्तिः । ततो नरधनुर्दण्डप्रचण्डेषीकखण्डितः कृपया नारायणेन च रक्षितो निर्मदः समजायत । एवं स दर्पाशनिः कौरवेश्वरमुपागतः । राजन् ! त्वमधुना अपि पाण्डवेभ्यो दायं दत्वाऽयशःपंकान्निर्मुक्तो भव । यतः परस्वहरणं परिणामे विषोपमम् ।

ततो जामदग्न्यानंतरं कण्वमुनिरप्यब्रवीत् । राजन् ! भरतवंशेऽस्मिन् क्षयकेतुतां यातोऽसि । पुरा मातलिः स्वदुहितुर्गुणकेश्याः समुचितवरं द्रष्टुम् भूतलं बभ्राम । ततो यदृच्छयागतेन सुरर्षिनारदेन सह यास्याव इत्युक्त स्तत्सखः पातालमविशत् । तत्र स्वप्रभाभास्वरजनयुक्ते दैत्यदानवभोगिसद्मविभूषिते च पुरे सदाशिवं दृष्ट्वाऽम्बुजेक्षणं चंद्रावतीप्रियं पुष्कराभिधं वरुणपुत्रं प्राप । आपो गांडीवयतता प्रसिद्धा । यतस्तद्गांडीवधनुस्त्रैलोक्यजयशालिना सोमराजेन गृहीतम् । जलप्रभोश्चन्द्रकान्तमयं छत्रमप्ययं नीतवान् । अयं सलिलभक्षोऽग्निर्यत्रदेवैरमृतं धृतम् । शीतांशुरस्मिन् प्रविष्टः क्षीणः क्षीणः पुन र्विवर्द्धते । इतो दीप्तं हयशिरः पर्वसु समुद्गच्छति । एतद्धिरण्यपुरं यत्र कालखंजैः सह निवातकवचाः स्थिताः । अयं सौपर्णलोको यत्रैते श्रीवत्सलांछना गरुडात्मजा भांति । एष सुरभिलोको यत्र रुद्रमातः कामधेनवश्चतस्रो दिशो धारयंति । इयं भोगवती नागपुरी । यत्र वासुकिः प्रमुखा नागराजास्तिष्ठंति । अयं सुमुखो नाम कमनीयो नागः । वैनतेयेनास्य दिकूचराभिधः पिता हतः । तच्छ्रुत्वा प्रीतो मातली राजीवलोचनं तं दुहितुर्योग्यं विज्ञाय जामातरममन्यत । ततो मातलिगिरा नारदः सुमुखपितामहमार्यकं समुपसृत्य प्रोवाच । भद्र ! मातलिरयं देवराजसारथिस्त्वत्पौत्राय सुमुखाय गुणकेशीं सुतां दातुं समीहते । तच्छ्रुत्वाऽऽर्यकोऽवदत् । मुनिराज ! एषः श्लाघ्यसम्बन्धो मह्यमपि रोचते । परं सुमुखवयो गरुत्मतादिष्टमित्यार्यकेनेत्यभिहिते स्वयं मातलिरब्रवीत् । मया सुमुखः सदृशोवरः पुत्र्यै वृतः । एषः सुराधीशं पश्यतु । सोऽस्य श्रेयो विधास्यति । ततो मातलिर्नारदानुगस्तं समादाय स्वर्गं गत्वोपेन्द्रसहितं शतक्रतुन्ददर्श । अथ हिरण्यगर्भसुतेन मातलिवृत्तान्ते निवेदिते कारुणाब्धिर्विष्णुर्वात्सल्यादिन्द्रं प्रोवाच । शक्र !

मातलिस्ते सारथिः । अतोऽस्य तनयापतिस्त्वया रक्ष्यः । असौ पीयूषं दीयताम् । वराद् देवोऽयं च क्रियतामिति विष्णुनोक्तो देवराजस्तं गिराऽमरं चकार । अथ भुजंगमोऽपि लब्धायुर्गुणकेशीमवाप्तवान् । ततो विदितवृत्तान्तो वैनतेयः कोपं कृत्वा पक्षघातै र्दिशो विघटयन् दिवमाययौ । तत्र वीरो देवसमाजे विष्णुं वज्रिणं चाऽब्रवीत् । भवद्भ्यां क्रीडया कथं मे वृत्तिच्छेदो विहितः । काश्यपोऽहमपि पक्षप्रान्तेन सविष्णुं त्रैलोक्यं वहामि । नूनमेषा मम विमाननाऽस्ति । मयापि दैत्या निहताः । पुनः केन हेतुनाऽहं न्यूनतां यातोऽस्मि । तच्छ्रुत्वाऽत्युद्धतं तं विष्णुरभ्यधात् । सखे ! त्वं मे सव्येतरं बाहुं तु वह । ततस्तेऽहं सत्यमितां वाणीं धृतिंचावगच्छामीत्यभिधाय सोऽस्य स्कंधे लीलया भुजं निदधे । अथाऽदर्पशिक्षागुरोस्तस्य बाहुभारेण पीडितो वदनोद्गीर्णरुधिरो गरुडो लुप्तपक्षश्च सद्योऽपतत् । ततो दयार्द्रेण भगवता संरक्षितस्सुपर्णोधृतिमगमत् । दुर्योधन ! एवं दर्पोऽवमानाय विनाशाय च भवति । अधुना त्वं शिक्षां मत्वा व्यसनोदयं दर्पं मा कृथाः । किं बहुना । महाराज ! यशः सितजटाभाराः पृषत्क नखदंतुराः पाण्डवा नृसिंहा इव दुर्जयास्संति । एवमाकर्ण्य कण्ववचनं निःश्वसन् वलिताननो राजा वक्षो विलोक्य तिर्यग्दृशा राधेयं संभावयन् पादेन पादपीठं च विलिखन् प्रोवाच । अहं याचे वदामि विहरामि च हरामीति तु शक्यं परं शत्रुं प्रेम्णा नौमीति नैव शक्यम् । दैवं हि पूर्वं ललाटेऽक्षर मालिकां लिखित्वा प्राणिनं जगति प्रेषयति । स तदनुसारमेव कार्यं कृत्वा शुभाऽशुभ फलमवाप्नोति । अत्र योऽहं स्वतंत्रः कर्तेति मन्यते । दैवं च न गणयति । स पदे पदे पततीतिधार्तराष्ट्रेणोक्ते विषण्णो नारदोऽब्रवीत् । भूप ! हृदि स्वयमुत्तैरविनयै र्दुर्ग्रहान्धानां निर्बंधाद् दुःखातंकविषद्रुमा जायंते । पुरा गालवाख्यो मुनि र्विश्वामित्रगुरुं गत्वा दक्षिणां तुभ्यं ददामीति पुनः पुनरवोचत् । ततो बहुशः प्रत्याख्यातोऽपि स यदा नाऽतिष्ठत् । तदा निर्बंधकुपितो विश्वामित्रस्तमवदत् । यद् दक्षिणावर्तशुद्धानां श्यामकर्ण हयानां शतान्यष्टौ मे प्रयच्छ । तच्छ्रुत्वा गालवस्तद्विधान्हयान्दुर्लभान्मत्वा चिन्ताशोक परायणः स्वल्पैरेव दिनैरस्थिशेषोऽभवत् । ततोऽसौ वयस्यं सुपर्णं गत्वा तमर्थं तस्मै विनिवेद्य च पुनः पुनः शुशोच । निशम्यैवं तार्क्ष्योऽवदत् । मुने ! मामारुह्य दिशो विचित्य च गुर्वर्थं हिमकुन्देन्दुवर्चसोऽश्वाँस् तान् समाप्नुहि । तच्छ्रुत्वा गालवस्तमारुह्य महोद्वेगेनार्धनिमीलितलोचनः प्रायात् । सोऽथ गगनसंगिनो नागान् पश्यन् पूर्वदिशं प्राप्य च देवलोकं ददर्श । ततो यमेन गुरवे दक्षिणायै निवेदितां दक्षिणां दिशमगात् । यत्र सोमपाः पितरो ऽतिष्ठन् । अथ पश्चिमां जगाम । यत्र दिनान्ते रविः किरणान् विसृज्य जलनिधिं प्रव-

शति । तत उत्तरां दिशमास्थाय मरुत्तमखभूमिमगात् । एवं दिशो भ्रान्त्वा ऋषभपर्वतमवतीर्य च गरुडगालवौ चिरं तत्रोपाविशताम् । अत्रान्तरे शांडिलीं नाम सिद्धां दृष्ट्वा तया कृतातिथ्यौ तत्र भुक्त्वा च निद्रामवापतुः । अथ वीतनिद्रो गरुडो मनोरथमचिंतयत् । एवंविधा मुनिवधूर्विष्णो र्ब्रह्मणः शक्रस्य वा निकेतने स्थातुं योग्याऽस्तीति ध्यात्वा विरराम । ततः प्रभाते विस्रस्तपक्षः क्षीणकराननश्च भूत्वा गरुडो भृशाविव्हलतामवाप । साऽथ निवेदितान्वयं प्रणतं च दृष्ट्वा करुणादृष्ट्या तं बलवत्तरं चक्रे । ततो गुर्वर्थचिन्ताविधुरो गालवमुनिर्गरुडेन सह तामामंत्र्य गच्छन्नपि धृतिं च न प्रत्यपद्यत ।

अथैकदा पथि व्रजंतं तं यदृच्छयागतो विश्वामित्रो विहस्याऽपृच्छत् । वत्स ! त्वया मह्यं प्रतिज्ञातास्ते श्यामकर्णहयाः क्व वर्तन्ते ? एवमभिधाय प्रयाते विश्वामित्रे गालवं भृशदुःखितं ज्ञात्वा गरुडः कार्यविनिश्चयं जगाद । सखे ! सर्वं धनेन लभ्यते । तच्च शक्रकुवेराधीनम् । देवाः प्रायशः स्तुतियज्ञाधीनाः । अतो द्रविणेनैव श्यामकर्णास्तुरंगमानवाप्स्याव इति निश्चित्य तौ महाधनाढ्यं राजर्षिं ययातिमुपागमताम् । ततो गरुडो मुनिना सह यज्ञव्ययीकृताशेषधनं ययातिमश्वानयाचत । सोऽथ तेनार्थितोऽब्रवीत् । माधवीनाम मे कन्या तु शुल्कदेयाऽस्ति । तामेव वितीर्य वाजिनः समाप्नो त्वित्याभाष्य नृपोऽर्थिभंगभयात्तस्मै तां प्रादात् । अथ गालवस्तां समादाय गरुडं व्यसृजत् । ततोऽसौ कुशाग्रमतिं हर्यश्वनृपमभ्येत्य प्रोवाच । राजन् ! कन्येयं त्वया शुल्केन गृह्यताम् । तेन मह्यं श्यामकर्णहयान्देहि । अस्यामेकं सुतं जनयित्वा पुनस्तवैनां ददामीति संविदमादाय स तां वाजिभिर्जग्राह । ततः स तस्यां कालेन वासवो जयंतमिव वसुमनसं पुत्रमजीजनत् । यत्र सुलक्षणा नारी वर्तते । तद् गृहं स्वर्गतुल्यं भवतीति सत्यम् ।

अथ मुनिस्तस्माद्ययातितनयामवाप्य तयैव संविदा तां दिवोदासनृपाय प्रादात् । तत्र तस्मात् प्रतर्दनाख्यपुत्रे संजातेऽश्वशेषार्थी मुनि स्तां समादाय व्रजन् पथि पुनः खगाधिपं प्रापत् । अथ तेन पृष्टः सोऽब्रवीत् । सखे ! सर्वत्र परिभ्रमता मया तुरंगानांषट् शतानि संप्राप्तानि । शेषे संप्राप्त्युपायं मे सौहार्दात् त्वया चिन्त्यताम् । तच्छ्रुत्वा वैनतेयोऽब्रवीत् । मित्र ! पृथिव्यां वाजिनां षट् शतान्येव संति । पुरा ऋचीकतपसा श्यामकर्णानां सहस्रं विवाहशुल्कार्थं वारुणं हयतोऽर्थतः प्राप्तम् । ततस् तेषां तावता कालेन कस्मिंश्चिद्राजसंगरे वैतस्तप्रवाहेन शतचतुष्टयं नष्टम् । तस्मात् पृथिव्यां षट् शतान्येव विद्यंते । सहृदय ! अश्वसंपूरणं कन्यामेनां गुरवे प्रदेहीति गरुडेनाभिहिते गालवस्ताँस्तुरंगमान्दत्वा तनयावधि गुरवे कन्यामपि प्रादात् । अथ विश्वामित्रस्तस्यां तनयमष्टकं जनयित्वा

गालवायैव तां प्रत्यदात् । ततः शुभकृत्यो गालवो वराद्भ्रष्टकौमारां पद्माननां तां ययातये पुनः प्रायच्छत् । ततो ययातिश्चराचराणां समाजे समुपस्थित स्तस्या माधव्याः स्वयंवरं चक्रे । अथ सा सुरसिद्धर्षिभूमिपान् विचार्य तीर्थतपोधिया विविक्तवनमेव वरं वव्रे । तत्र शष्पांकुराहारा मृगसब्रह्मचारिणी सा लोकशंकाभयादिव सद्यो परित्रस्ता चचार ।

अथ यज्वा ययातिरपि कालेन सुरालयं प्राप्य सर्वभूतावमानतः क्षीणपुण्यो दिवोऽपतत् । ततः स पतन्नेव दौहित्रैरष्टकादिभिः स्वपुण्येन पुनः स्वर्गमारोपितः । तस्मिन्नेवाऽवसरे तत्सुताऽपि तपसा देवलोकमगात् । राजन् ! गालवमुनिरेवमतिनिर्बंधाद् दुःखविक्रियामवाप्तवान् । ययातिश्चाऽपि महाभिमानेन स्वर्गान् महीतलं सद्यो निपपात ।

नारदेनेति कथिते गांधारीधृतराष्ट्रौ सुयोधनमब्रूताम् । वत्स ! श्रीकृष्णपितामहादीनां हितोपदेशं मत्वा स्वकुलं विनाशाद्रक्ष । किंतु वृथा दुराग्रहं कृत्वा पार्थकोपाग्नौ बालपतंगवन्मागमः । संप्रति पाण्डवैःसंभूय कीर्तिमहाप्रयन् प्रवर्धमानविभवैः सुखं भुकत्वा चिरंजीवेति वचनमाकर्ण्य गाढसंरब्धो धृतराष्ट्रजो जगाद । लोकेऽवश्यंभाविनो भावा अनिवर्तिन एव भवंति । रणे लक्ष्मीसंशयो जयो वा स्वर्गदोऽवधोऽजयोनेह्योकतरमपिपक्षं निर्मलं पश्यामि । जगत्यशिक्षितप्रणामानां पृथ्वीमूल्यम् । त एव शत्रौ प्रणता वराटिकामपि न लभंते । वैराक्ताः पाण्डवाः प्रवृत्तदर्पा वर्तन्ते । किन्तु ते सूच्यग्रपरिमाणोऽपि मे भागिनो न संतीत्यभिधाय कौरवः कृष्णनिग्रहार्थं कर्णप्रमुखैः संमंत्र्य भवनान्निर्गत्य च पुनरायया । यतः सर्पखलचौरकामिनामभिप्रायाः सदा न सिध्यंतीति सत्यम् । अथ प्रतिभावान् सात्यकिस्तेषां तदिङ्गितं ज्ञात्वाऽकृष्णकर्मणो कृष्णाय तद्रहस्यं न्यवेदयत् । ततः कैटभारिः कोपानलज्वालाजटाभिस्तां सभां पूरयंस् तत्र घोरं वपुरदर्शयत् । तस्मिन्नवसरे भास्वरत्विषस्तस्य सर्वदेवमये शरीरे भयानकरूपमालोक्य तत्रत्याः पृथ्वीश्वराः सहसा मुमुहुः । एवमधोक्षजो भगवान् विश्वरूपं दर्शयित्वा मुनिवृन्दान् समामंत्र्य च राजमन्दिराद्विनिर्ययौ । अथ गरुडलक्ष्मणा रथेन विदुरावसथं गत्वा कुन्तीं ददर्श । ततः पृथा तं भ्रातृजं हरिं परिष्वज्य पुत्रकुशल श्रवणानंतरं गद् गद् गिरा बभाषे । कृष्ण ! त्वया मद्वचसा धर्मसुतो वाच्यः । यद् अप्रसुलभमार्जवं क्षत्रिये ते न शोभते । पराध्यर्वचनो राजा निजविभवं याचसे । किं त्वं धामान् पापसहायांश्च कौरवान्न जानासि ? अज्ञातपरमार्थानामष्टाकपालविप्राणामेवंविधं व्यवहारविमुखं जाड्यं क्षमम् । पुरा विदुरा शत्रुविजितं समरपराङ्मुखं सुतमुपदिदेश । यत् क्षमा क्षत्रियभरणं न गण्यते । यो लोके कृतागसां पुंसां गणनापूर्वां

निकारं क्षमते । विस्मृतक्रोधः स धर्मपुत्रक इति निगद्यते । वने कंटकवान् वृक्षो वरं परं सरलाशया शमी न वरा । यथा लोकाः स्पृहणीयां बंध्यां पूजयंति । परं शान्तसुतमातरं न गणयंतीति मात्रोक्तः संजयो महोत्साहमवलम्ब्य युद्धेऽपरेन्हि शत्रुनिबर्हणं चकार । अर्जुनस्तवाऽभिन्नहृदयोऽतस्तं तु त्वमेवोपदिश । वीरवरभीमस्योत्तेजनं तु नोपयुज्यते । एवं पृथावचनमाकर्ण्य साधुवादैः कुतीं समाश्वास्य गरुडध्वजो दारुक-प्रेरितहयैः पाण्डवान्प्रति जगाम । अथ तस्मिन् प्रयाते संत्रस्तो धृतराष्ट्रश्चारैरन्विष्य संजयं कृष्णचरितं पप्रच्छ । भद्र ! श्रुतम्मयाऽप्यद्य यद् व्रजतो नयशालिनः कंसारेः कर्णेन सह कापि मंत्रकथाऽभवत् । त्वमेवाऽत्रनीतिज्ञोऽसि । यदि जानासि तर्हि तु कथ्यतामिति नरेन्द्रेण पृष्टः संजयः प्रत्यभाषत । राजन् ! मया गूढं कथयतोः कर्ण-केशवयो रहस्यं श्रुतम् । तत्रानुमान्य जनार्दनो राधेयमिदमूचे । वीर ! त्रैलोक्यचक्षुषा रविणा कुंत्यां जातोऽसि । अतस्त्वं पाण्डुमहीपतेः क्षेत्रजसुतः कर्ण इति विख्यातो युधिष्ठिराग्रजोऽसि । संप्रति कौरवांस्त्यक्त्वा सोदरान्पाण्डवानेहि । ततोऽमरोपमैस्तैः सह शक्रइव वसुमतीं भुंक्ष्व । श्रुत्वैतत् वीरवरकर्णः कृष्णं सादरमभाषत । भगवन् ! सर्वं महमात्मसंभवं जाने किंतु मया यन्मंदिरे विस्रब्धं भुक्तं च पीतम् तस्य दुर्योधनस्य सुहृद्भूत्वाऽहं कथं समरसमये मित्रद्रोहपरीवादकलंकां श्रियं कामये । अच्युत ! विश्वासघातेनानेन सहस्ररश्मितनयत्वमपि कलंकितं भवति । किम्बहुना । किरिटिना मयि हते भीमेन च सुयोधने निपातितेऽवश्यं कृत्स्नां भुवं युधिष्ठिरोऽधिगमिष्यति । यदुनाथ ! मत्कथा तस्मै नाख्येया । यतोऽसौ मां भ्रातरं ज्ञात्वाऽखिलसाम्राज्यमपि नैव लप्स्यते । वैकुण्ठ ! विधातृविहितेऽस्मिन् क्षत्रक्षेत्रक्षये रणे वरिपाण्डवान् विजयशालिनो द्रक्ष्यसि । कंसारे ! स्वप्नेऽद्य मया धवलाम्बरोऽस्थिसंचयमारूढः सघृतं पायसं भुंजानो युधिष्ठिरो द्रष्टः । ततः सहस्रपादे प्रासादे भ्रातृसमेतः शुद्धमाल्यो महोत्साहश्च स एवाऽवलोकितः । श्रीमान् वृकोदरोऽत्युच्चगिरिशृंगस्थो दृष्टः । त्वत्सहायश्च किरीटी पाण्डुर द्विपमूर्द्धनि समीक्षितः । अत्रान्तरे मया सानुगकौरवपतिः शौणमाल्यानुलेपनो गर्दभमारुह्य दक्षिणाशां व्रजन् दृष्टः । अथ द्रौणिहार्दिक्यगौतमा धवलोष्णीषा दृष्टाः । अतोऽहं निश्चिनोमि । केशव ! तान्विनाऽस्मासु सर्वेषु ध्रुवं कृतान्तो विचरिष्यति । अपरं च यथा घोरदुर्निमित्तान्यवलोक्यंते तथा नः शेषो गाण्डीवेनैकेनैव न भविष्यतीति जाने । एवं विनयशालिना कर्णेन स्वैरं कथिते साधुवदसीत्यभिधाय प्रशस्य च कर्णं भगवान् वासु-देवस्ततो जगाम । कर्णोऽपि स्पष्टवाचमुदीर्य सर्वथैव निश्चिन्तो बभूव ।

अथ कृष्णे प्रयाते विदुरस्तनयवत्सलां कुंतीं समभ्येत्य प्रोवाच । भ्रातृजाये ! मुमूर्षुर्धृतराष्ट्रजो बहुशोऽनुनीतोऽप्यातुरो बाल इव पथ्यमस्मद्वचो न गृह्णाति । श्रीकृष्णसदृशे महापुरुषेऽप्यमानिते गते कुरुपाण्डवसंगरे च प्रवृत्ते ध्रुवन्निखिला मही विनाशमुपयास्यति ।

निशम्यैवं विदुरवाक्यं चिन्तातुरा कुंती भागीरथीतटस्थितं जपपरं कर्णं प्रायात् । तत्राऽपृष्ठतापादुद्यंतंभास्करमुपस्थितं तं प्रतीक्षमाणा सा प्रौढतापक्लमार्दिताऽतिष्ठत् । ततो जपान्ते कर्णस्तां समालोक्य प्रणम्य च सूतपुत्रोऽहं राधेयः किं ते प्रियं करोमीत्यभाषत । तच्छ्रुत्वा सा वात्सल्यात् तमवादीत् । वत्स ! त्वं मम कानीनसुतो जनकश्च तव सहस्रांशुः सूर्योऽस्ति । न च सूतः । साम्प्रतं विनयशालिना युधिष्ठिरेण संगम्य कृत्स्नां महीं भुङ्क्ष्व । पापान् कौरवाँश्च मानुसरेति मात्रार्थितः कर्णो दिवोऽपि सत्यमभिहितं कुंत्येतिरविवचनं शुश्राव । एतदाकर्ण्य प्रणतः सोऽब्रवीत् । जननि! त्वयोदितं सर्वं जाने । किन्तु वृद्धाधिरथेरास्थां विहातुं नाऽहं सर्वथा समर्थः । किम्बहुना । मयि तस्याजन्मसंभृतः स्नेहमनोरथो नीचसौहार्दवत् कथमेकपदे वृथा यातु । कौरवेश्वरो मम बहिश्चरं जीवितम् । यस्याऽहं सर्वावस्थासु बन्धुः स्वामी गुरुः सुहृच्चाऽस्मि । देवि ! समयेऽस्मिन्नर्जुनं विहाय तव पुत्रान्नाऽहं हनिष्यामीति तेऽयं प्रणयो वृथा मयि मास्तु । मया हते फल्गुने किं वा पार्थेन मयि हते भवती तु पंचपुत्रैव स्थास्यति । पुनः किं व्यर्थशोचनेनेति वैकर्तनेनोक्ते मुहुर्मुहुः कंपितमानसा पृथा तमामंत्र्य गुप्तरीत्यैव विदुरावसथं निववृते ।

अथ भगवान् पाण्डवानवाप्य ततो दुरन्तरं कौरवाभिप्रायं निवेदयामास । तच्छ्रुत्वा पाण्डवसेनासु सत्वोत्साहसमन्वितो विजयारंभविभ्रमसंरंभो बभूव । तत्रादौ पाण्डवाः श्रीकृष्णमतानुसारं पावकजातं धृष्टद्युम्नं सेनापतिमकल्पयन् । ततस्तस्मिन् प्रहृष्टेऽभिषिक्ते युधिष्ठिरो विपुलबलैः समेतः कुरुक्षेत्रं प्रतस्थे । अथ सोत्साहं परिसर्पतो राजसमुद्रस्य तस्य वाहिनीसंघसंघर्षप्रभवो महानिर्घोषोऽभवत् । ततो वंदिगीयमानगुणवीरा यशोविक्रमलांछनैर्नामभि र्देवानपि दुर्जयान्न मेनिरे । अथ सकृष्णाः पाण्डवाः कुरुक्षेत्रमासाद्य हिरण्वतीनदीतीरे स्वस्थानानि कल्पयामासुः । ततो नरेश्वराः परिखापरिरूढानि शिविराणि कृष्णार्जुनादेशमवलम्ब्य सादरं भेजिरे । अथ सैनिका अपि चमूपतिनिर्दिष्टस्थानेषु निजनिजहस्त्यश्वरथं प्रतिष्ठाप्य निश्चिन्ता युद्धं प्रतीक्षमाणा स्तस्थुः । ततः कुरुक्षेत्रे राजभिः सह सन्निविष्टे पाण्डवे शंखदुंदुभिनिःस्वनैः लिकिष्टेव मही ननाद । अत्रान्तरे कुरुपतिरपि भूभुजसहस्रावृतः पृथ्वीं ध्वजच्छत्रमयीमिव कुर्वन् निर्ययौ । सोऽथ दशैकाधिका अक्षौहिणीः कर्षन् सरित्समेतो जलधिरिव व्यराजत । ततोगजराज-

शैलाकुले बले करवालाः पातालविवरोत्थिता व्याला भूपीडिता इव बभुः । ततः स महीपालान् विलोक्य द्रोणकर्णकृपादिभिः सह भीष्ममुपसृत्य प्रणातिपुरस्सरमभाषत । महारणेऽस्मिन्नपरकार्तिकेय इव शक्तिमान् भवानेव नः सेनानीरस्तु । निशम्यैवं कुरुपतिवचनंपितामहोऽब्रवीत् । एषोऽहंतव सेनानायको भूत्वा पाण्डवैः सह योत्स्ये । सदाऽयुतबधादपि तान् वारयित्वा मे चापोऽयं विश्राममेष्यतीति युधि मे संविदं विद्धी तिवादिनिगांगेये धार्तराष्ट्रेण सादरमभिषिक्ते कृत्स्नं जगत् साशनिस्वनं चकम्पे । ततो दुर्योधनगिरा कुरुक्षेत्रमासाद्य तत्र नृपा विभक्तानि रत्नवंति च शिवराणिभेजि ।

अत्रान्तरे युधिष्ठिरो भीष्मं परैः कृतं सेनापतिं निशम्य कृष्णाग्रे नृपगणसहिताननुजान् जगाद । महानुभावाः ! पूर्वं महोजसा भीष्मेणैव नो युद्धं भविष्यति । समरे यस्य जंभारिरपि गणनास्पदं नास्ति । किं बहुना । यस्य विक्रमोदारचरितं स्वर्गे त्रिदशांगना अपि गायंति । अतो भवन्तो यत्तास्तिष्ठंतु । यतः स धैर्यनिधिर्धन्विवरो हेलया न शक्यते निरोद्धुमित्यभिधाय विरराम । तच्छ्रुत्वा श्रीकृष्णचन्द्रोऽब्रवीत् । राजन् ! सत्यमेतत् । परमत्रापि शक्रतुल्यपराक्रमाः सप्त महारथाः संति । तान् सेनापतित्वे नियोजय । ततो राजा मात्स्य द्रुपद शैनेय धृष्टकेतु शिखण्डि मागध पार्षतान् सप्त महावीरान् सप्तस्वेव सेनासु सेनाधिपत्येऽभिषिषेच । ततस्तेषां सेनापतीनाम् प्रमुखो धृष्टद्युम्नो बभूव । तस्योपरि च परिद्रष्टा कृष्णमित्रोऽर्जुनोऽभवत् । अत्रान्तरे श्रीबलभद्रो भीमसुयोधनावुभावपि प्रियशिष्यौ मत्वा तं देशं समाययौ । ततो बंधुयुद्धविरक्तात्मा स जनार्दनं सानुजधर्मराजंचामंत्र्य तीर्थयात्रार्थं द्रुतमगमत् । तस्मिन्नेवावसरे वीरवरो रुक्मी पाण्डवान् ससैन्यः समभ्येत्यार्जुनं प्रोवाच । फल्गुण ! यदि भीतोऽसि । तर्हि तु ब्रूहि । अहमेकाकी भीष्मद्रोणौ हत्वा तवाऽभीष्टं करोमीति वचनमाकर्ण्य पार्थो विहस्य प्रोवाच । राजन् ! पुरा निवातकवचोच्छेदेऽथवा गंधर्वविजये किं वा गोग्रहे भवद्विधो मे कःसहायोऽभवत् ? यथागतं व्रजेति किरीटिना सावज्ञमुक्तोऽसौ दर्पान्धो दुर्योधनमुपागमत् । तत्रापि तथैवोक्त्वा तेनापि मनिना न्यक्कृतो निजनगरं जगाम । तस्मिन् प्रयाते बलयोरुभयोर्विपुलारंभोऽभवत् । अत्रान्तरे सुतप्रियो धृतराष्ट्रः कुरुपाण्डवसेनयोश्चेष्टां संजयं पप्रच्छ । सोऽथ तेन पृष्टः प्रोवाच । राजन् ! बलद्वये सन्निविष्टे सुयोधनः शकुनिसुतमुलूकमादिदेश । भ्रातः ! कौंतेयमुपसृत्य नृपसंसदि ब्रूहि । दीर्घदीर्घपराश्रयस्त्वमधुना समरे मा विलंबस्व । संप्रति त्वामिष्टेभ्यः सर्वस्वं दत्वा प्रियसंगमान् कुरुष्व । अधुना शान्तनवेनयुद्धं नातिदूरं समुपस्थितमिति दुर्योधनेनोक्तः सौबल-

संभवः पाण्डवशिविरं गत्वा नृपसमाजे युधिष्ठिरं तदेव प्रोवाच। तच्छ्रुत्वा क्रुधा ताम्रनेत्रौ कृष्णधनंजयावववादिष्टाम्। उलूक! त्वं सत्वरमितोगत्वा प्रतिसंदेशं नय। कालपक्वोऽसौ सुयोधनः प्रातरेव चमत्कारं द्रष्टा। यश्च समरेऽस्मिन् गांगेयं परायणं मन्यते। तमेवाऽचिराद् गाण्डीवनिर्गतशरैश् छिन्नं द्रक्ष्यसीति ताभ्यां समादिष्टः शकुनिसुतः प्रतिनिवृत्य तत्रत्यसर्ववृत्तं राजमध्ये धार्तराष्ट्राय सत्वरं निवेदयामास।

अथ सुयोधनेन रथसंख्यां पृष्टः पितामहः प्रोवाच। राजन्! सेनानिवेशेऽस्मिन् स्वपरसैन्ययोर्महारथरथान्तरं शृणु। राजन्! तत्रादौ भ्रातृसहितस्त्वं रथप्रवरोऽसि। मादृशः स्वगुणं वर्णयितुं न प्रगल्भते। हार्दिक्यमद्रराजावतिरथौ। भूरिश्रवा रथाग्र्यः। सुदक्षिणो रथः। जयद्रथो द्विगुणरथः। विन्दानुविन्दनीलाः स्यन्दनोत्तमाः। सानुजसुशर्मा रथः। तव पुत्रो लक्ष्मणस्तथा ते भ्राता दुःशासनश्च समौ रथोत्तमौ। दण्डधाराग्रबलवृहद्वला रथोत्तमाः। शारद्वतः कृपो यूथपयूथपः। तव मातुलः शकुनीरथः। द्रौणिः शतगुणोरथः। द्रोणो रथयूथप्रणेता त्रिगुणरथः। सत्यश्रवा रथः। वृषसेनो महारथः। जलसंधो रथवरः। मागधोऽतिरथः। बाल्हिकसत्यवन्तावुत्तमरथौ। अलंबुषो रथोत्तमः। भगदत्तो बहुगुणोरथाधिपः। वृषकाचलौरथौ। अयमात्मश्लाघी क्षुद्रबुद्धिः कर्णो महारथः। निशम्यैवं नाग इव श्वसन् क्रोधताम्राक्षः कर्णोऽवदत्। भीष्म! वृद्धोऽपि बत धिया बालायसे। मोहादकारणं द्वेषं कृत्वा मर्मदारणं च बचो ब्रुवन्नलज्जसे? युद्धे समुपस्थिते नीतिज्ञैर्भीरवोऽपि मिथ्यास्तुतिपदै र्भटाः क्रियंते। बोढव्येऽस्मिन् राजकार्ये महतां यद्विमाननं कुरुषे। तेन त्वं परैर्व्यस्तो भेदकोऽसीत्यहं मन्ये। अपरं च। यदत्र त्वया रथसंख्योच्यते। तदहं चित्रं न मन्ये। शूराणां तेजः शौर्यं च वचसा कथं गण्यते? यदा दुर्योधनो राजा कार्यगौरवात् सहते तदास्माकं किमायातं। यदशक्रवत् निकारं क्षमामहे। किम्बहुना। अहमेकाकी पार्थानामेकत्रितबलं जेष्यामि। किं क्रियते। मिथ्यैव भूभुजा भीष्म! त्वमुच्चैः कृतोऽसि। गांगेय! मया जिते शत्रौ यशस्त्वां प्रतिपद्यते। अतस्त्वय्यहते पाण्डवैर्नाऽहं योत्स्य इति सूतपुत्रेणोक्ते वीरो भीष्मः प्रोवाच। मिथ्याभिमानिन्! विश्रान्ते रणे तव वीर्येण किम्? अस्मिन् सुचिरार्चितिते राजकार्येऽस्माभिर्भेदः संरक्ष्यते। अतएव हि कर्ण! नाऽत्र हन्यसे। तच्छ्रुत्वा दुर्योधनोऽब्रवीत्। महाभाग! कृपया पाण्डवदलस्यापि रथसारफल्गुतां ब्रूहीति पृष्टो देवव्रतोऽवदत्। राजन्! युधिष्ठिरनकुलसहदेवा महारथाः। भीमोऽष्टगुणरथो रथशताधिपश्च। अर्जुनो यादृशोरथस्तं तु त्वं जानास्येव। पंचद्रौपदेया वैराटिरुत्तरश्च षडेते रथाः। अभिमन्युः पितृतुल्य एव रथयूथाधिपोस्ति। सात्य

किर्महारथः । युधामन्यूत्तमोजसौ रथौ । विराटद्रुपदौ वृद्धावपि महारथौ । धृष्टद्युम्नशिखण्डिनावतिरथौ । कृतवर्माऽर्धरथः । शैब्यजयजयंतधृष्टकेतुक्षत्रदेवचित्रजित्कुंतिभोजकाशिराजचेकितानपंचकेकयाश्चैते रथोत्तमाः संति । शंखादयो मत्स्यपुत्रा वारक्षेमः चित्रायुधः सत्यधृतिः सेनाबिन्दुः पौरवः पुरुजित् इन्द्रसेनश्चश्रेणिमानित्येते महारथा विद्यंते । रोचमानवसुदानसत्याजितोऽष्टगुणा रथाः । घटोत्कचो बहुगुणोरथः । अन्येवीराश्चार्धरथाश्चापि रणकुशलाः पाण्डवसैन्येषु वर्तन्ते । राजन् ! शस्त्रपाणिरहमेकं स्त्रीरूपं शिखंडिनं मुक्त्वा गाण्डीवधन्वना गुप्तान् सर्वान् योत्स्ये । पुरा मया भ्रातृविचित्रवीर्यार्थे स्वयंवरे पुरः काशिराजस्यः तिस्रः कन्या हृताः । तत्र नरेन्द्रप्रमाथिनो युध्यमानस्य मे रथास्थिता अम्बाम्बिकाम्बालिका लता इव चकंपिरे । ततो निर्जिताशेषभूमिपं प्रस्थितं मां दृष्ट्वा तासां ज्येष्ठा कमलेक्षणाऽम्बा मामुवाच । वीर ! मया पूर्वं मनसा साल्वराजो व्रतस्तस्मादकामामबलां माम् बलादपहर्तुं नार्हसि । एतदाकर्ण्य सहसाहं ज्वलितामिव तामत्यजम् । यतो भारताः स्वप्नेऽप्यत्याचाराय सावकाशं न ददति । ततः सा साल्वनृपतिं गत्वा स्व संकल्पं च विनिवेद्य प्रोवाच । नाथ ! प्रणयात् स्वयमागतां मां भजेति कुरंगनेत्रया तयाऽभिहितः प्रोवाच । भद्रे ! नाऽहमन्येन वृतां स्वीकरोमीत्याभिधाय तां न जग्राह । ततो दैवादुभयभ्रष्टा सा तपोवनं गत्वा स्ववृत्तान्तं विनिवेद्य च मुनीन् प्रव्रज्यां ययाचे । तत्र मुनिवृन्दस्थस् तत्पितामहो राजर्षिर्होत्रवाहनस्तत् कथां श्रुत्वा विषण्णोऽब्रवीत् । पुत्रि ! करुणासिन्धुः परशुरामो महेन्द्रपर्वते वर्तते । त्वं तत्र गत्वा शरणार्थिनी भव । शान्तनवोऽयं तच्छिष्यः ! गुरुवचसा परित्यक्तामपि त्वामवश्यं ग्रहीष्यति । मा शुचं कृथाः । अत्रान्तरे जामदग्न्यस्य ज्येष्ठशिष्यः कृतव्रताभिधोऽपि यदृच्छया तं मुनिसेवितं देशमुपागमत् । ततोऽसौ तत्र पूजामवाप्य होत्रवाहिर्नी ताङ्कन्याकथां श्रुत्वा प्रोवाच । मा कुरु चिन्ताम् । भगवान् रामः स्वयमिदं वनं प्रातरागन्ता । निशम्यैवं मुनिवचनं सर्वे तत्रत्या आश्रमवासिनो निश्चिन्ता बभूवुः । अथ प्रभाते श्रीजामदग्न्यः स्वयं तत्र समायातः । ज्ञात्वैवं राजपुत्री सबाष्पा तं शरणमयासीत् । ततस्तद् वृत्तान्तमाकर्ण्य सरलाशयः सोऽब्रवीत् । पुत्रि ! धैर्यं धारय । मद्वचसा भीष्मो न त्वां त्यक्ष्यति । एषोऽहं कौरवक्षेत्रं गत्वा शान्तनवं स्वयमनुशास्य त्वत्समीहिते दक्षिणं विधास्यामीत्यभिधाय सशिष्यो मुनिस्तां समादाय च दिशः पूरयन् कुरुक्षेत्रमयात् । अथ देववन्द्यं तं साक्षादभ्यागतं पुरोधसं च पुरस्कृत्य सहसाहं प्रत्युद्गतवान् । अथ सानुगः परशुरामो मामागतं दृष्ट्वा पूजामादाय च प्रोवाच । भीष्म ! त्वयैव हृतेयं कन्या । पुनः कथं त्वया त्यक्ता ?

त्वद् विसृष्टैषा दुरात्मना साल्वेनाऽपि परित्यक्ता । संप्रति भ्रातुरर्थे मद्गिरैनां मनस्विनीं गृहाण । एवमाकर्ण्य करुणानिधिवचनमहं प्रत्यवदम् । प्रभो ! नेयं भावदूषिता कुले नः समुचिता । स्वयं साल्वपतिं यातां तेन च मद्भयात् परित्यक्तां कथं भवद्गिरा कुलकलंकाय गृह्णास्येनाम् । भगवन् ! प्रसीद । एतदसांप्रतं वक्तुं नार्हसि । तच्छ्रुत्वा कोपाकुलो रामोऽवदत् । भीष्म ! शिष्यो भूत्वा मोहात्कथं मामवमन्यसे ? नूनं मदाज्ञाभंगकारिणस्ते विनाशकालः समायातः । अहो वत ! नवराजन्यवंशजस्त्वं त्रिसप्तकृत्वः क्षपितक्षत्रं हैहयान्तकं च मां न जानीषे ? एवं पुनः पुनरुदीरितं तद्वचः श्रुत्वा किंचिदुद्भिन्नकोपस्वेदार्द्रविग्रहोऽहमवोचम् । सद्वृत्तोपदेष्टा हि गुरुर्बुधैरुच्यते । स एवोत्पथमापन्नश्चेत् परित्याज्य इति श्रुतिभगवती समाज्ञापयति । अहो ! गुरुर्भूत्वाऽपि भवान् धर्मादपेतेऽर्थे मां नियोक्तुमुद्यतोऽस्ति । संप्रत्यहं पुष्पस्थाने शरैस्त्वां पूजयिष्यामि । गुरो ! त्वया ये क्षत्रियाः पुरा निहतास्ते प्रायोऽशूरा एवासन् । तदा कश्चिन्मादृशो जनो नोदपद्यत इत्यहं मन्ये । वीर ! शिष्यैरनुगतो यथेष्टं युध्यस्व । यतस्त्वद्दर्पोच्छित्तये चापद्वितीयः सज्जोऽस्मीति मयोक्ते गुरुगर्वात् स तेजस्वी कुरुक्षेत्रे युद्धार्थमुदतिष्ठत् । ततस्तस्मिन् दिव्यरथारूढे माता जान्हवी देवी युयुत्सुं मामभ्युपेत्य जगाद । पुत्र ! क्षत्रकंदाग्निना भृगुसूनुना तावद्विरोधं मा कृथा यावदेनं तव प्रसादमहमभ्यर्थय इति मात्राऽप्यभिहितोऽपि स्वकुलव्रतं नाऽत्यजम् । यतो भारता वीरा भयप्रणामेषु शिक्षिता न हि भवंति । ततोऽहं सर्वधन्विवरं तं गुरुं पूर्वं प्रणम्य बाणं च संधाय तत्पूर्वशरपातार्थी मुहूर्तं निश्चलोऽभवम् । अथ तदस्त्रवलयज्वालावलयिताम्बरे शरसंघमध्ये पतितोऽहं क्षणमदृश्यतामगाम् । अथाऽहं शंखनादेन दशदिशः परिपूर्य क्षत्रतेजोविरामं रामं क्षणमयोधयम् । ततस्तेन सह दिनत्रयं युध्यमानस्य मे विक्रमं पुष्पवर्षिणः सुरा अपूजयन् । तत्र ब्राह्मणाकौरवसुभिर्जाह्नव्या च जामदग्न्यास्त्रमूर्छितमानसोऽहं मुहुर्मुहुर्धृतः । ततोऽहं तं पिनाकिशिष्यं ब्रह्मास्त्रैर्निर्जित्य युद्धे श्लथमनोरथं व्यधाम् । अथ समरसंमर्दाद्विरतो भार्गवः काशिराजसुतामूचे । पुत्रि ! किं करोमि ? गांगेयोऽयं युधि दुर्जयः । किम्बहुना । क्रूरेयं क्षत्रियजातिर्या गुरुमपि मां नाभिमन्यते । अधुना क्षत्रियशिष्यो मया वर्ज्य इति ब्रुवन् रामस्तु महेन्द्रपर्वतं ययौ । अहमपि स्वभाग्यं प्रशंसन् निजनगरं प्राविशम् । ततः काशिराजसुता मन्युदुःखानलाकुला मुनिजनाश्रमेषु घोरतरं तपश्चक्रे । मानविहीनाया मे जन्म भीष्मविनाशाय भूयादित्याशया सा तीर्थेषु शनैः शनै र्निराहाराऽभूत् । अथैकदा त्रिपथगा तीव्रतपःक्षामां तामुवाच । वत्से ! देहान्ते त्वं वत्सदेशे घोरसत्वनिषेविता तुम्बीति कुटिलाचारा तटिनी भविष्यसीत्यभिधाय

तिरोदधे। ततः सा कालेन वृषभध्वजमाराध्य मनोगतं वरं प्रापत्। अत्रान्तरे द्रुपदः पुत्रार्थं रौद्रं तपश्चचार। भगवदिच्छया द्रुपदस्य पूर्वं सुता समजायत। राजन्! नेयं कन्या किन्तु भावी पुमानसावित्यभिधाय शशिशेखरोऽलक्ष्यतामगात्। एवमालोक्य राजा तस्याः पुत्रतां ख्यापयामास। ततः सा कन्या शिखंडीति विख्यातः कूटपुत्रकोऽभवत्। अथ प्राप्तकालोऽसौ दशार्णाधिपतेः सुलोचनां कन्यामुपयेमे। ततः सा यौवनवती शय्यायां तां शिखण्डिनीं दृष्ट्वा दुःखार्दिता दूत्या सर्वं स्त्रीवृत्तं राज्ञे निवेदयामास। निशम्यैवं कूटनीतिं दाशार्णभूपतिर्हिरण्यवर्मा त्वरितमेव युद्धार्थं द्रुपदनगरमाजगाम।

अथ तस्मिन् सुविपुलानीके सहसा प्रत्यसन्ने संकोचमापन्नो राजा कार्यविनिश्चयं न लेभे। ततः शिखण्डिनी विषण्णं पितरं चिन्ताग्रस्तां च मातरमवलोक्य तत्रात्मानमेव-तयोः क्लेशकारणं निश्चिकाय। अथ समायाते निशीथे सैकाकिनी शिखण्डिनी महावनं प्रायात्। तत्र सा शोकविह्वला क्षुत्तृड्भ्यां च निपीडिता व्रजन्ती सहसा मणिवेष्टितं भवनं ददर्श। ततस्सा निराहारा तत्र गत्वा शुचा चिरमतिष्ठत्। अथ गृह-पतिना स्थूणाकर्णेन पृष्टा सा तस्मै सर्ववृत्तान्तं निवेदयांबभूव। तच्छ्रुत्वा यक्षो भोजनाच्छादनादिभिस्तां परितोष्य प्रोवाच। सुमध्यमे! पूर्वं मया दत्तं पुरुषव्यंजनं प्राप्य पितरं त्रायस्व। तव च निजरूपं मे प्रयच्छ। परं कृतकार्योऽत्र न चिरात् समागत्य पुनर्योषा भविष्यसीति संविदमादाय तेन दत्तं पौरुषं समवाप्य च तद्वि-सृष्टः स्वनगरं ययौ। अथागतः सः स्ववृत्तं पित्र्ये निवेद्य कृतार्थो बभूव। ततो दा-शार्णः प्रीतिशालिनं जामातरं दृष्ट्वा विसृज्य चिन्तां तस्मै बहुधनं प्रादात्। अथाऽ-परेऽन्हि द्रुपदमामंत्र्य च स्वनगरं न्यवर्तत। अत्रान्तरे स्वयं धनपतिः स्थूणाकर्णगृहं समागत्य द्वारदेशात् तमाजुहाव। परं स यदा लज्जया पुरो नाऽगमत्तदा गृहाभ्यंतरं गत्वा तत्स्त्रीरूपं दृष्ट्वा च चकितो बभूव। ततो विदितवृत्तान्तः कुवेरस्तमभाषत। पाप! त्वं स्त्रीरूप एव तिष्ठ। शिखंडिनी तज्जीवावधि मद्वाक्यान् नररूपोऽस्त्वित्यभिधाय जगाम। एवं कुपिते वैश्रवणे याते स्वयं शिखंडी स्वसत्यपालनार्थं तं यक्षमभ्ययात्। ततस्तं द्रुपद-तनयं विलोक्य विषण्णयक्षः प्रोवाच। पांचाल्य! गच्छ। नेदं मे स्त्रीरूपं त्वयि युज्यते। धनपतिशापान्मया त्यक्तं पुंरूपं त्वं रक्ष। एवमाकर्ण्य शिखण्डी स्वपुरं न्यवर्तत। सोऽयं सर्वशास्त्रास्त्रकुशलो यक्षतुल्यपराक्रमो द्रुपदतनयः। राजन्! एवं न स्त्री न च पुरुषः स्त्रीपूर्वोऽयं शिखण्डी। युधि मया नित्यं वर्ज्य इति मे क्षत्रियोचितं व्रतं विद्धि। स्त्रीपूर्वे न्यस्तशस्त्रपलायितमुक्तकेशशरणागतेषु च शान्तनवो न शूरतां दधातीति नृपसंसदि

रात्रावेवाऽभिहिते भीष्मेण दुर्योधनः पितामहं प्रणिपत्य प्रातरवदत् । तात ! कियता कालेन सागरोपमं पाण्डवसैन्यं द्रोणकृपकर्णाः क्षपयितुं शक्ता इति वचनमाकर्ण्य प्रहसन् भीष्मोऽभ्यधात् । राजन् ! मासेनैकेनाऽहं तद्बलं हन्तुं शक्नोमि । गुरुरपि तथैवोवाच । ततः कृपो मासद्वयेन द्रोणिर्दशदिनैः कर्णश्च पंचभिर्दिनै रिपुक्षयं प्रतिजज्ञे । ततो भीष्मो विहस्य सोत्प्रासं कर्णं विगर्हयन् प्रोवाच । अदूरदर्शिन् ! कलहप्रिय ! वाक्शूर ! मनोमोदकैः क्षुन्न शाम्यति । किमपि कृत्वा दर्शय । अत्रान्तरे युधिष्ठिरोऽपि धनंजयं बभाषे । पार्थ ! मन्येऽहमपारा कुरुराजवरूथिनी । कथय कियता कालेन तत् क्षयं मन्यसे ? एतदाकर्ण्याऽर्जुनोऽवदत् । राजन् ! योद्धाऽहं सारथिः कृष्णो धनुर्गाण्डीवं पिनाकिनोऽस्त्रं यत्रैतत्तुल्यमुद्यतं तत्र मर्त्येष्वास्था का ? निशम्यैवं प्रहर्षाद् भुजशालिनां राज्ञां विग्रहाः स्पष्टरोमांचकंचुका बभूवुः । अस्मिन्नेवक्षणे नृपगिरा द्रोणकृपशल्यसोमदत्तिभगदत्तजयद्रथाद्या महावीरं भीष्मं पुरस्कृत्य विमुक्तिधाम युद्धांगणं विविशुः । तत्र कुरुक्षेत्रे कौरवसैन्यं समंतपंचकतटे च पांडवसेनानिवेशो व्यभात् । तस्मिन्नवसरेऽगवंगकलिंगकाश्मीरकांबोजसिंधुसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोरलपांचालगौडमालवमलयसिंहलद्रविडकर्णाटकललाटवरहाटकरहाटान्ध्रपांड्यनिषधदशार्णभोजगान्धारविदर्भविदेहशूरमत्स्यविराटकौंकणसुह्मकिरातचीनयवनम्लेच्छाद्याश्चतुरंगसैन्यसमेताः कृच्छ्रेण क्षितिपाललक्षनिविडं डमंतरं लेभिरे । इति गद्यभारते उद्योगपर्व समाप्तम् ।



अजमेरस्थ मेय्योकालेज दृश्यम्

ओंनमः शिवाय ।

# अथ गद्यभारते श्रीभीष्मपर्व प्रारभ्यते ।

नारायणं नमस्कृत्य नरंचैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥
कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमोनमः ॥ २ ॥

अथाऽन्येद्यु र्धर्मक्षेत्रे कुरुक्षेत्रे कुरुपाण्डवसंगरे सैन्येष्वेकीभूतेषु वृद्धबालावशेषासु दिक्षु शून्यतां यातासु सर्वतो दारुणनिमित्तेषु प्रादुर्भूतेषु बलद्वये पताकाभिर्मिथो दृष्टिपथं याते च हृषीकेशधनंजयौ शंखं सोत्साहं दध्मतुः । ययो र्गम्भीरघोषेण चकंपिरे भुवनानि । ततो नृपा विषमस्थसैन्यविनिर्गतनिवृत्तरणा न हन्तव्या इति मर्यादां चक्रिरे । अत्रान्तरे मुनीश्वरो व्यासो मन्दिरगतविषण्णधृतराष्ट्रं प्रोवाच । राजन् ! यदस्मिन्नशेषवीरभूमिपालसमागमे विषमक्षत्रसंक्षयोऽयं समुपस्थितोऽतोदिव्यनयनं गृहीत्वा स्वयमपि युद्धं विलोकयेति व्यासेनोक्ते सत्याकुलिताशयो राजा जगाद । भगवन् ! नाहं बन्धुनिधनं द्रष्टुं समुत्सहे । परञ्चावश्यंभावित्वाद्भाव्यस्य वारयितु मपि न क्षम इति भूपाले प्रोक्तवति वरदमुनिः संजयं दिव्यनयनं विधाय क्षितिपं पुनरभ्यधात् । संजयोऽयं ते निखिलं युद्धं कथयिष्यति । दिव्यदृष्टेरस्य नाविज्ञातं किञ्चिदपि भविष्यति । धृतराष्ट्र ! तव दुर्नयाद्राज्ञां कृतान्तो विजृम्भते । यत् क्षयकर्णोजपानि दुर्निमित्तानि दृश्यन्ते । रोहिणी सौरेण पीडिता दिशो ज्वलिता प्रसूतिविपरीता रविः कबन्धावृतो व्योम क्रव्यादावृतं शोणितवर्षणं मेघानां च विलोक्य हा ! राजमहिषी मही नैषा भविष्यतीति मन्ये । साम्प्रतं शुभलक्षणं शृणु । यद् दक्षिणशिखोवह्निस्तथा-मनः प्रसादो जयस्यैतद् व्यक्तं लक्षणम् । तज्जयस्तु धर्माऽऽधीन इति सत्यमवगच्छ । राजन् ! क्वचिदेकेन शतानि जीयन्ते । क्वचिच्च शतैरपि नैको जेयः । इयमसिधारा हि तरला नात्र निश्चयो गण्यत इत्युक्त्वाऽन्तर्हिते मुनीन्द्रे नृपः संजयं द्वीपान् पप्रच्छ । पृष्टश्च स जम्बूप्लक्षशाल्मलीकुशक्रौञ्चशाकपुष्कराख्यद्वीपान् इलावृतकुरुभद्राश्वकेतुमालकिं



हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौंतेय ! युद्धाय कृतनिश्चयः ॥ भ० गी० ॥

वै० यं०. अजमेर.

पुरुषरमणकहिरण्मयान् वर्षांश्चाभ्यभाषत । अथ राजन् ! यथा हतानन्तसामन्तः शन्तनुसुतः पण्डुपुत्रविजये संशयं विदधे तथा सावधानतयाऽऽकर्णय । तत्र भीष्मार्जुनराजकुञ्जरैर्वज्रसूचीमुखाभ्यां व्यूहाभ्यां मिथोऽनीकेषु व्यूढेषु सर्वक्षत्रसमागमे तस्मिन् क्षत्रक्षयक्षेत्रे पृथुसैन्याभिमानिन्यतिसंरब्धे दुर्योधने गांगेयशंखनादेन बलार्णवे समुद्भूते पांचजन्यानुयायिना पार्थशंखशब्देन भुवनाभोगे च पूरिते दिक्षु विस्फूर्जितास्विवाच्युतसारथिः सर्वसेनाश्रयः कुरुसेनासु गुरुसंबान्धिस्वबान्धवान् ददर्श । सोऽथ निजप्रतापदहने तेषां शलभायितं मत्वा विषण्णः करुणया गोविन्दं जगाद । अहो बत ! वयं महत्पापं कर्तुं व्यवसिताः । यद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः । यदुपते ! सदाचारमतिक्रम्य कुलस्थितिञ्च विस्मृत्य कथमस्मद्विधो जनो गुरुबधप्राप्यां श्रियं भजेदित्युक्त्वा शोकसंविग्नमानसोऽर्जुनो रणेऽपि सशरंचापं विसृज्य रथोपस्थे निषसाद । एवं शोकविवशं तं दृष्ट्वा मधुसूदनो जगाद । सखे ! धैर्यसारस्य ते केयमकाण्डे कातरता ? पार्थ ! मानी क्षत्रियस्त्वं प्राणैरपि यशःक्रयी धर्म्यां निजकुलस्थितिं हातुं नार्हसि । त्वमशोच्यानन्वशोचः प्रज्ञावादाँश्च भाषसे ? पण्डिता गतासूनगतासूंश्च नानुशोचन्ति । यथाऽस्मिन्देहिनो देहे शैशवयौवनजरा आयान्ति च यान्ति । तथा देहान्तरप्राप्तिरपि भवति । तत्र धीरो न मुह्यति । यो विशुद्धात्मा हर्षशोकादीन् क्षणिकविषयेन्द्रियसंयोगान् सहते सोऽवश्यं शाश्वतं निर्वाणमधिगच्छति । अजरामरस्याऽविनाशिनोऽस्य देहकल्पनेयं जीर्णपर्णपरावृत्तितुल्या मता । व्यक्ताव्यक्तस्वरूपिणोऽस्य शरीरिणो नादिर्न मध्यं नान्तश्च क्वापि विलोक्यते न च श्रूयते । हे कौन्तेय ! हतः स्वर्गं प्राप्स्यसि । जित्वा वा महीं भोक्ष्यसे । तस्माद्युद्धाय कृतनिश्चयो भूत्वोत्तिष्ठ । संप्रति कर्मबन्धविवर्जितस्त्वं यौगिकीं बुद्धिमवलम्बस्व । ततः शुष्कवेदक्रियाहीनं गुणातीतं पदं समवाप्स्यसि । सर्ववेदेषु विदुषामेतदेव प्रयोजनं यत् पूर्णजलाशयेषु सलिलहारिणां भवति । ते कर्मण्येवाधिकारोऽस्ति न फलेषु । त्वं कर्मफलहेतुर्माभूः । अकर्मणि च ते संगोऽपि मा भवतु । यदा ते बुद्धिर्मोहकलिलं व्यतितरिष्यति । तदा श्रोतव्यस्य श्रुतस्य च निर्वेदं गन्ताऽसि । तच्छ्रुत्वाऽर्जुनो भगवन्तं स्थितप्रज्ञलक्षणं पप्रच्छ । अथ जनार्दनः प्रत्युवाच । पार्थ ! यदा सर्वमनोगतान् कामान् प्रजहाति । आत्मनाऽऽत्मन्येव च संतुष्टो भवति तदाऽद्वैतवादी सः स्थितप्रज्ञः कथ्यते । अपरश्च यथाकूर्मोऽगानीव तथा यः कामान् संवृत्य स्वयमास्ते । स स्थितधीर्विविधविषयविरहान् न नश्यति । निराहारप्राणिनो विषया विनिवर्तन्ते । अस्य रसोऽपि परं दृष्ट्वा विनिवर्तते । यः पुमान् सर्वकामान् विहाय निस्पृहो निर्ममो निरहंकारश्च चरति । सोऽ-

वश्यं शान्तिमधिगच्छति । निशम्यैवमर्जुनः कृष्णमुवाच । हृषीकेश ! कथमेवं मां घोरेऽस्मिन् समरे युनक्षि ? प्रभो ! स्वयं कर्मणः श्रेयसी बुद्धिरित्युक्त्वापि मां विमोहयन् दुर्मतियोग्यं कर्म प्रशंससीत्युक्तवति श्वेताश्वे केशवोऽब्रवीत् । यत् पूर्वं मया ज्ञानकर्मभ्यां सांख्य-योगयोर्निष्ठा प्रोक्ता । परञ्च जनोऽनारम्भान्न च कर्मत्यागान्मुच्यते । अस्य श्रोत्रादयो बलाद वश्यं स्वकर्मसु धावन्ति । कश्चिज्जातु क्षणमप्यकर्मकृन् नहि तिष्ठति । सर्वो हि विवशः सन् प्रकृतिजगुणैः कर्म कार्यते । पुनरपि यो विमूढात्मा कर्मेन्द्रियाणि संयम्य मनसेन्द्रियार्थान् स्मरन्नास्ते स मिथ्याचार उच्यते । पुरा जनकप्रमुखाः कर्मणैव सिद्धिं गताः तस्मान्मा निवर्तस्व कार्यात् । लोकश्च त्वामनुवर्तताम् । हे पार्थ ! यद्यपि मे त्रिलोक्यां किंचन कर्तव्यं नावशिष्टम् । अवाप्तव्यमनवाप्तव्यञ्च किमपि नास्ति । तथाप्यहं कर्मणि वर्त एव । सखे ! यथाकर्मण्यविद्वांसः सक्ता कुर्वन्ति तथा लोकसंग्रहं चिकीर्षुर्विद्वानसक्तः कर्म कुर्वीत । विद्वान्कर्मसंगिनामज्ञानां बुद्धिभेदं न जनयेत् । किन्तु युक्तः समाचरन् सर्वकर्माणि जोषयेत् । मयि सर्वकर्माण्यध्यात्मचेतसा संन्यस्य निराशी निर्ममो भूत्वा च विगतज्वरो युद्ध्यस्व । यतः परधर्मात् स्वनुष्ठितात् विगुणोऽपि स्वधर्मः श्रेयान् । लोके स्वधर्मे निधनं श्रेयः परधर्मश्च भयावहो गणितः । एतदाकर्ण्यार्जुनोऽब्रवीत् । वासुदेव ! केन प्रयुक्तोऽयंजनोऽनिच्छन्नपि बलान्नियोजित इव पापं चरति ? रजोगुणसमु-द्भव एषः काम एष एव क्रोधोऽस्ति । मित्र ! अयमेव महाशनो महापाप्मा प्रतीतः । इहैनं वैरिणं विद्धि । यथा धूमेन वह्नि र्मलेनादर्श उल्वेण च गर्भाऽऽवृतस्तथा तेनेदंज्ञानमावृतम् । यस्य मनोबुद्धिसमायुक्तमिंद्रियपञ्जरं च स्थानमस्ति । तं दुःसहशत्रुं कामरूपं विनाशय । पुराऽऽयं योगो मत्सकाशात् सूर्येणाप्तः । तस्मान्मनु र्मनोरिक्ष्वाकुरग्रहीत् स एवाऽयं पुरातनो योगो मयाऽद्य ते प्रोक्तः । त्वं मे भक्तस्तथा सखा चासि । अत एव मयाऽद्य ते रहस्यमुक्तम् । ततोऽर्जुनोऽब्रवीत् । भवतो जन्मापरं विवस्वतश्च परं तत् कथमहं जानीयां यत् त्वमादौ प्रोक्तवानसि ? तच्छ्रुत्वा भगवानाह । पार्थ ! आवयो र्बहूनि जन्मानि व्यतीतानि । परमहं तु तानि सर्वाणि वेद । त्वञ्च न वेत्सि । अहमजोऽपि स्वां प्रकृतिमधिष्ठायात्ममायया संभवामि । भारत ! यदा यदा हि धर्मस्य ग्लानि र्भवत्यधर्मस्य चाभ्युत्थानं जायते । तदा तदाहं धर्मसंस्थापनाय साधुपरित्राणं दुष्टनिग्रहञ्च युगे युगे संभूय करोमि । यः कर्मण्यकर्म कर्मचाकर्माणि पश्येत् । स मनुष्येषु बुद्धिमान् स युक्तः स एव च कृत्स्नकर्मकृत् । यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः सन्ति । बुधा ज्ञानाग्निदग्धकर्माणं तं पण्डितं प्राहुः । ब्रह्म एवार्पणं ब्रह्म एव हवि र्ब्रह्माग्नौ

ब्रह्मणैव हुतं ब्रह्मकर्मसमाधिना तेन ब्रह्मैव गन्तव्यम् । परंतप ! द्रव्यमयाद्यज्ञाज् ज्ञान यज्ञः श्रेयान् । किमन्यत् सर्वाऽखिलं कर्म ज्ञाने परिसमाप्यते । श्रद्धावान् ज्ञानं लभते । अज्ञोऽश्रद्दधानः संशयात्मा च विनश्यति । तस्मात् हृदयस्थं संशयं ज्ञानाऽसिना छित्वा योगमास्थाय समुत्तिष्ठ । एवमाकर्ण्य पार्थो मधुसूदनं पप्रच्छ । जनार्दन ! सन्यास कर्मयोगानां श्रेयो ब्रूहीति पार्थेन पृष्टो भगवानुवाच । यत् संन्यासकर्मयोगावुभावेव विमुक्तये भणितौ । परन्तु तत्र संन्यासात्कर्मयोगोऽधिकतर इति मे मतिः । सखे ! कर्मयोगिनः शृण्वन्तो वदन्तः स्पृशन्तोऽपि च पंके रविकरा इव सक्ता अपि न सज्जन्ति । अपरं च यः संगं त्यक्त्वा कर्माणि ब्रह्मण्याधाय च यत् किमपि करोति । सोऽम्भसा पद्मपत्रमिव पापेन न लिप्यते । पण्डिता विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि शुनि श्वपाके च समदर्शिनो भवन्ति । योऽसक्ताऽऽत्मा बाह्यस्पर्शेषु यत् सुखमात्मनि विंदति । स ब्रह्मयोगयुक्तात्माऽक्षयसुखमश्नुते । यो मुनिर्बाह्यस्पर्शान् बहिः कृत्वा भ्रुवोर्मध्ये-चक्षुःकृत्वा नासाभ्यन्तरचारिणौ प्राणाऽपानौ समौ कृत्वा च मनो निग्रहद्वारा व्यवहरति । स योगी सदा मुक्त एव । यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतसुहृदञ्च मां ज्ञात्वा शान्तिमृच्छति योगी । आत्मनाऽऽत्मानमुद्धरेत् । न कदाप्यात्मानमवसादयेत् । यत आत्मैव बन्धुरस्त्यात्मनः । तथाऽऽत्मैव रिपुरात्मनःकथितः । योगी रहसि स्थितः एकाग्रं मनः कृत्वा सततमात्मानं युञ्जीत । युक्ताऽऽहार विहारस्य कर्मसु युक्तचेष्टस्य युक्तस्वप्नाऽवबोधस्य च योगो दुःखहा भवति । अयं च योगयुक्तात्मा पुरुषः सर्वत्र समदर्शनो भूत्वाऽऽत्मानं सर्वभूतस्थमात्मानि च सर्वभूतानि समीक्षते । तच्छ्रुत्वाऽर्जुनः प्रोवाच । मधुसूदन ! त्वया साम्येन योगः प्रोक्तः । परमस्य मनसश्चञ्चलत्वात् स्थिरां स्थितिं न पश्यामि । निशम्यैवं भगवानुवाच । महाबाहो!ऽसंशयं मनो दुर्निग्रहञ्च चलम् । तदभ्यासवैराग्याभ्यां च गृह्यते । पार्थ ! इहामुत्र च श्रद्धावतस्सन्मार्गप्रवृत्तस्य च विना शो न लक्ष्यते । तात ! नहि कश्चित् कल्याणकृद् दुर्गतिं गच्छति । ततः पार्थेन योग-भ्रष्टलक्षणं पृष्टो भगवान्प्राह । योगभ्रष्टपुरुषः पुण्यकृतांल्लोकानवाप्य तत्र शाश्वतीःसमा उषित्वा च शुचीनां श्रीमतां गेहेऽभिजायते । पुनस्तेनैव पूर्वाभ्यासेन ह्यव शोऽपि स ह्रियते । ततः प्रयत्नाद्यतमानः संशुद्धकिल्मिषो योग्यनेकजन्मसंसिद्धः परां गतिं याति । सखे ! भूमिः आपः अनलः अनिलः खं मनः बुद्धिः अहंकारश्चे-त्यष्टधाभिन्ना मेऽपरा प्रकृतिरस्ति । अन्यां च जीवभूतां मुख्यां प्रकृतिं विद्धि । यया जगदिदं धार्यते । बुधा उत्पत्तिस्थितिसंहारकारणं मां विदुः । सर्वे भावा मयि प्राणिता

मयि च सर्वं प्रतिष्ठितम् । मायाविमोहितो जनो दैवीं मायां दधानं मां न जानाति । ये च तां जानन्ति त एव कृतिनो भवन्ति । धनार्थिचिन्ताऽऽर्तजिज्ञासुज्ञानिनश्चैवं चतुर्विधा जना मां भजन्ते । तेष्वेकभक्तिर्ज्ञानवानेव मम प्रियः । मुमुक्षवोऽनन्यदेवता भक्ता मयि श्रद्धावंतो वासुदेवः सर्वमिति च मत्वा मां भजन्ते । येऽधियज्ञसाधिदैवसाधिभूतानि च मां विदन्ति । ते देहव्युपरमेष्वपि मच्चित्ता भवन्ति । निशम्यैवमर्जुनोऽपृच्छत् । पुरुषोत्तम! तद्ब्रह्मकिम् ? अध्यात्मं किम् ? अधिभूतं किम् ? तथाऽऽधिदैवञ्चापि किमुच्यते ? ततो भगवानुवाच । अक्षरं परब्रह्म स्वभावोऽध्यात्मं भूतभावोद्भवकरो विसर्गश्च कर्मसंज्ञितोऽस्ति । योऽक्षरोभावस्तदधिभूतम् । पुरुषोऽधिदैवतम् । देहेऽचाधियज्ञोऽहमेवाऽस्मि । यश्चान्तकाले मामेव स्मरन् कलेवरं मुक्त्वा प्रयाति । स मद्भावमसंशयं याति । योऽन्ते यं यं भावं स्मरन् कलेवरं त्यजति । स मद्भाव भावितस्तं तमेवं प्राप्नोति । ते धन्या ये कविं पुराणं शास्तारमणोरण्यणीयांसं तमसः परं च नित्यं स्मरन्ति । यो लोकेऽस्मिन् ओमित्यकक्षरं य ब्रह्म व्याहरन् मामनुस्मरं श्च देहं त्यक्त्वा प्रयाति स परमां गतिं याति । सर्वोऽयं भूतसर्गश्चक्रवत् परिवर्तते । परं ये मां प्रतिपन्नास्ते पुनर्भवे न भवन्ति । फल्गुन ! इदमन्यत् पवित्रं राजगुह्यं शृणु । संसारवशीकृतोऽश्रद्धाश्च मां नाप्नोति । सर्वकर्त्तरि मयि भूतानि सन्ति । परं तेष्वहं नास्मि । व्योम्नि वायव इव लोका मयि स्थिता अस्थिता श्च । एषा मयाऽधिष्टिता प्रकृतिश् चराचरं सूते । मोघदर्शिनो मलिना असक्तं मां न जानन्ति । सुकृतिनः सर्वगतं यज्ञवेद्यं वीजं सर्वकारणकारणं च मां विदन्ति । त्रयीधर्मजुषः शुष्काक्रियापाशवशीकृताः स्वर्गभोगलाभक्षयाकुलाश्च मां नाप्नुवन्ति । मदेकशरणा अनन्ययाजिनो जन्मबन्धविनिर्मुक्ता मत्पदमायान्ति । प्रीत्या मया यत् प्रतिबोध्यते । तच्छृणु । सुरमुनिनरास्तत्वेन मां न विदन्ति । चराचरेऽस्मिन् प्रवरं यद्यत् भूतिमत्पश्यासि । तत् तत् सर्वमहमेव । भूतात्माहं । मया विना नहि किंचित् । ब्रह्मविष्णुशिवसूर्येन्दुवरुणेन्द्रधनेशसुरगुर्वाद्येषुदेवेष्वहमेव । तथाऽक्षरकालत्रयभूतिष्वप्यहमेवास्मि । श्रुत्वैतत् पार्थोऽवदत् । केशव ! सर्वमहं त्वां जाने । परं ते विश्वमयं रूपं द्रष्टुमिच्छामीत्यर्जुनेनोक्ते भगवान् वैकुण्ठो विश्वाऽविष्कारकलया विश्वरूपमदर्शयत् । जगन्निवासस्याऽस्यदेहेऽनन्ताशिरोनेत्रसहस्रभुजशालिनो लीनं विश्वमदृश्यत । ततोऽतिसूर्योऽग्नितेजसा पूरिताम्बरं दृष्ट्वा पार्थः प्रणम्योवाच । प्रभो ! ब्रह्मरुद्रमरुद्वह्निमुनीन्द्रभुजगाकुलं पर्यन्तरहितं च ते वपुर्द्रष्टुं नोत्सहे । भीष्मादिवीरान् युगक्षयेकालस्येव ते मुखे पतितानिव पश्यामि । सर्वसंहाररौद्रेणाऽमुना वपुषाऽखिलान् लोकानकाण्डएव

दग्धुं समुद्यतः । ततः क्षोभवानित्युक्तवति कौन्तेये मधुसूदनो जगाद । जगत्क्षयोत्क्षेप-दीक्षितोऽहं कुरुसेनाग्रगान् वीरान् पूर्वमेव निहितवानस्मि । त्वन्तु निमित्तमात्रं भूत्वा यशः प्राप्नुहि । तच्छ्रुत्वा कृताञ्जलिः पार्थो गद्‌गदस्वरेणाऽवदत् । यज्जगन्ति तव कीर्त्या हृष्यन्ति सिद्धचारणाश्च स्तुत्या प्रसीदन्ति रक्षांसि च भीत्या द्रवन्ति । तत् सर्वं स्थाने । जगदाधार ! सर्वात्मानं त्वां पुनः पुनर्नौमि । पुरा यन्मया सुहृद्‌बुद्ध्या कृष्ण ! गोविन्द ! यादवेत्युक्तोऽसि । तत् क्षम्यताम् । किंवा तवेदमुग्ररूपं दृष्ट्वा निखिलं जगदेव चक्रारूढमिव पश्यामि । विभो ! प्रसीद । तदेव मे सौम्यवपुः प्रदर्शय । नान्यथा व्यथितं मे मनः शान्तिं सहसा यातीति किरीटिना प्रसादितः कृष्णस्तदेव चतुर्भुजं निजरूप मदर्शयत् । ममेदं वपुर्देवा अपि न पश्यन्तीत्युक्त्वा कमलाधवः कौन्तेयमाश्वासयामास । ततोऽर्जुनोऽवदत् । हेदेव ! एवं सततयुक्ता ये भक्तास्त्वामुपासते । ये चाप्यक्षरं त्वां ध्यायन्ति । तेषां मध्ये के योगवित्तमाः ? तच्छ्रुत्वा विहिताऽनुग्रहो हरिरवदत् । यच्छ्रद्धोपेता मद्भक्ताः सर्वथा योगिभ्योऽधिकाः । अव्यक्ताक्षरसेवनात्तु मत्प्राप्तिः क्लेशेनैव भवति । परं मद्भक्तास्त्वचिरादेव तत्पदं प्राप्नुवन्ति । अतस्त्वं मन्मना नित्यं भव । यदि ते चित्तं वशे न स्यात् । तर्ह्यभ्यासेन तद् गृहाण । तत्राप्यशक्तश्चेत् सततं श्रेयसे मत्कर्मा भव । अथवा मत्परोभूत्वा कर्मफलसंन्यासं कुरु । अभ्यासाज्ज्ञानं तस्माच्च ध्यानं श्रेष्ठम् । ध्यानात् फलसंन्यासस्ततश्च शान्तिर्विशिष्यते । अद्वेष्टा करुणावान् शमी सुखदुःखसमः उदासीनः शुचिर्दक्षः क्षमी च भक्तो मम प्रियोऽस्ति । बुधाः शरीरं क्षेत्रं मां च क्षेत्रज्ञं प्राहुः । यच्चोभयोर्ज्ञानं तदेव श्रेष्ठं मतम् । कामक्रोधमदलोभेर्ष्याऽसूयादिदोषेभ्यो विरतिर्गुरुनिषेवणादिसद्गुणेषु च प्रीतिर्ज्ञानमतो विपरीतञ्चाज्ञानम् । ज्ञेयन्तु सदसतः परं मन्मयं शुद्धब्रह्म । लोके तत् सर्वतः पाणिपादं सर्वतोऽक्षिशिरोमुखं सर्वतः श्रुतिमत् सर्वत्रावृत्य च तिष्ठति । त्वं प्रकृतिं पुरुषञ्चोभावप्यनादी विद्धि । विकारांश्च गुणान् प्रकृतिसंभवानेवावगच्छ । प्रकृतिः कार्यकारणकर्तृत्वे हेतुरुच्यते । पुरुषस्तु सुखदुःख भोक्तृत्वे कारणं कथ्यते । य एवं पुरुषं गुणैः सह प्रकृतिं च वेत्ति । स सर्वथा वर्तमानोऽपि भूयो न जायते । यथा सर्वगतमाकाशं सौक्ष्म्यान्नोपलिप्यते । तथा देहे सर्वत्राऽवस्थितोऽप्यात्मा नोपलिप्यते । पार्थ ! भूयः सुरसेवितमिदं ज्ञानं शृणु । सत्वरजस्तमांसीति प्रकृतिसंभवा गुणाः सन्ति । येषां वैचित्र्याद् देहिनोऽनिशं संसरंति । सत्वं प्रकाशकं रजो रागात्मकं तमस्त्वज्ञानजं जानीहि । एतेषां संकरेण शरीरिणां पृथक् पृथग् गुणदोषा श्च दृश्यन्ते । शान्तमनसो मद्भक्ता जीवन्मुक्तदशा

मवलम्ब्य गुणैरेतैः परित्यक्ताश्चाऽक्षयंसुखं लभन्ते । इमं संसारवृक्षमश्वत्थमूर्ध्वमूलमधःशाखं चाहुः । यस्य छन्दांसि पर्णानि । यस्तं वेद स वेदवित् । तस्य गुणप्रवृद्धा विषयप्रवालाः शाखा अध ऊर्ध्वं च वितताः सन्ति । इह कर्मानुबंधानि मूलान्यधोऽनुसंततानि । विबुधा असंगकुठारेण तं छित्वा निरस्तमोहमतिसूर्येन्दुपावकं च पदमाप्नुवन्ति । यथा वायुराशयाद् गन्धान् गृहीत्वा संयाति । तथेश्वरः प्रतिशरीरान् मनःप्रभृतीन्द्रियाण्यादायोत् क्रामति । उत्तमपुरुषस्त्वन्योऽस्ति । यः परमात्मेति निगद्यते । अभयं सत्वशुद्धिः ज्ञानं दानं तपः क्रतुः शुचिर्दयाचेति गुणा दिव्यसंपदां जायन्ते । दम्भमानक्रोधमदनैष्ठुर्य्याऽविवेकचापलै र्मोहशोकविवर्धिन्यासुरी संपत् सूच्यते । एतदाकर्ण्य फल्गुनः पुनरच्युतं प्रोवाच । सखे ! संन्याससत्यागयोस्तत्वं ज्ञातुमिच्छामि । तच्छ्रुत्वा भगवानभ्यभाषत । संन्यासं काम्यकर्मन्यासं वुधा विदुः । त्यागस्तु सर्वकर्मफलत्यागोऽभिधीयते । अत्र सत्कर्मपरित्यागो न वारितः किन्तु विधिगर्हितकर्मत्याग एव निवारितः । सखे ! कर्तृकर्मबुद्धिधृतिसुखादीनि गुणत्रयभेदतस्त्रिविधानि भवन्ति । तानि ज्ञात्वा निःसंगो भूत्वा च यथायोग्यं कर्म कुरु । त्वं मद्भक्तोऽस्यतो मत्स्तुत्यैव परं पदमवाप्स्यसि । मया स्वयं भक्ताय ते ज्ञानमुपदिष्टमिदं यः कोऽपि श्रोष्यति सोऽपि, संसारदुःखान्यतितरिष्यति । पार्थ ! कच्चित् ते मोहो विनष्टः ? कच्चिदेतत् त्वया सम्यगवधारितमिति केशवेनोक्ते शक्रसूनुः प्रत्यवदत् । भगवन् ! वीतमोहोऽहं तव शासनं करिष्य इत्याभिधाय गाण्डीवमाकृष्य च रणोत्सुको बभूव । एवमालोय पाण्डवाः प्रसन्नाः कौरवाश्च खिन्ना बभूवुः । अस्मिन्नेवाऽवसरे सर्वे च सैनिका युयुत्सुं पार्थमालोक्य गंभीरजलदध्वानमन्थरान् हर्षनिःस्वनान् कर्तुमारेभिरे । अथ धमात्मजष्टांकारनादमुखरेषु राजवलेषु कवचचापशरान् विमुच्य देवव्रताभिमुखं ससार । अहो ! कृपणचेष्टमलीककृताऽभिधानं च युधिष्ठिरनृपं धिक् । यदेष कृताञ्जलिः परानुपैतीति चेष्टाविदः शूरा मुहुर्मुहुरित्यवोचन् । ततः स दिव्यकीर्तिर्भीष्ममुखान् प्रणम्य शरीरपणसंश्रितधार्तराष्ट्रान् यथायोग्यं च सत्कृत्याशेषमहीपजयित्रीमाशिषं लेभे । अथ रणरंगमृदंगतूर्येऽभ्याहते गुणपक्षपाती तव सुतो युयुत्सुः स्वकुरून्निरस्य पार्थानुपाययौ । यतो हि नरमनांसि तुल्यगुणमेव धावन्ति । अस्मिन् करवालपट्टसंरक्षितप्रतिमुखे रणरंगनाट्येऽर्जुनाग्रे व्याकीर्णकीर्तिकुसुमाञ्जलिर्युयुत्सुर्गभीरधनुर्निनादैर्नान्दीमिवाऽपठत् । अत्रान्तरे नृपचक्रजैत्री शिवशिष्यमुनिशिक्षितशान्तनवाशितविशिखावलिरुल्ललास । ततः क्षुभ्यत्क्षयाम्बुधरभैरवभीमनादं भीमं निशम्य भटानां क्षयमाविरभूत् । अथैतस्मिन्नवसरे भ्रातृसहितः सुयोधनो बिपुलंधनुर्धुन्वन्स्वयं भीमं

समभ्यायात् । ततः शरवृष्टिभिर्दुर्लक्ष्ये संग्रामे प्रवृत्ते स्वयं शान्तनवो धनंजयमभ्यधावत् । कृतवर्मा सात्यकिं बृहद्बलोऽभिमन्युं दुःशासनो नकुलं दुर्मुखः सहदेवं शल्यो युधिष्ठिरं द्रोणो द्रुपदात्मजं सोमदत्तो वैराटिं बाह्लिकिश्चेदिपमश्वत्थामा शिखण्डिनं प्राग्ज्योतिषेश्वरो मत्स्यं केकयः कृपं जयद्रथो द्रुपदं विकर्णः सुतसोमं चेकितानः सुशर्माणं सौबलः प्रतिविन्ध्यमिरावतो विक्रान्तं शतायुः फल्गुनात्मजं विन्दानुविन्दौ कुन्तिभोजं वीरबाहुरुत्तरमेवमन्येऽपि राजसिंहाः परस्परं समुपाद्रवन् । तत्र तेषां करनिर्गताः कंकणरत्नांशुपटला हेमपुंखाश्च शरा बहिर्व्याप्तं दिगन्तरं चक्रुः । अथोद्धतरजसा वीराणां गजबाजिरथाकुलं तुमुलयुद्धमवर्तत निर्मर्यादम् । ततो मुहुः पतितप्रफुल्लवीरशिरोभी रणश्रियोऽमन्दकन्दुकक्रीडेव बभूव । ततो भीष्मचापच्युतशरैर्बहुशो विदारितेषु पाण्डवसैन्येषु महारवः समुत्तस्थौ । अथाऽभिमन्युः सर्वभूभृतां मिषतां भीष्ममभ्याद्रवत् । सोऽथ कृतवर्मादिभिः सहितं भीष्ममोजसाऽयोधयत् । अस्य च विशिखैर्ध्वजं चकर्त । ततो हेमताले निपतिते संरब्धपितामहो दिव्यास्त्रवर्षणेन सावेगं सौभद्रं समुपाद्रवत् । ततो विनदन्तो वृकोदरमुखा महारथाः सानुगं शान्तनुसुतं परिवेष्टयामासुः । अथ भीष्मोऽपि सात्यकिं शराग्रेण बिद्ध्वा पवनजन्मनो ध्वजं रथादुन्ममाथ । अत्रान्तरे वैराटिरुत्तरो गिरिप्रांशुं मदकुञ्जरमारुह्य मद्रराजमयोधयत् । स कुञ्जरेन्द्रः सहसा शल्यस्य चतुरोऽपि हयान् हस्तेनाकृष्य जघान । ततः क्रुद्धः शल्यो बाणवर्षिणे वैराटये वेगात् प्रदीप्तां शक्तिं प्राहिणोत् । ततो भिन्नहृदयः सः करीन्द्रान् निपपात । ततस्तदनुजः शंखस्तं निहतं दृष्ट्वा क्रुधा शल्यमभ्येत्य शरैर्जटिलाविग्रहं चकार । अथ शल्योऽपि तस्य रथं दलशो गदया विदार्योन्ननाद । यद् गर्जनेन दिशोऽपि खण्डिता इव संजाताः । ततो हताश्वः शंखः सहसा फल्गुनरथं प्रति प्रयातः । अत्रान्तरे नृपान्तको भीष्मोऽपि शरैः पाण्डवचमूमुन्ममाथ । एवं मत्स्यकेकयपाञ्चालचेदिसेनासु सर्वशो भीष्मबाणविदरितासु श्रीसूर्यभगवान् अस्ताचलं प्रययौ । ततः संग्रामे निवृत्ते विपुलं भीष्मविक्रमं प्रशंसन्तो नरेश्वरा स्वानि स्वानि शिविराणि भेजिरे । ततो दिनान्ते दीर्णपृतनो युधिष्ठिरो निजसैन्यसंहारं भीष्मविक्रमं च प्रदध्यौ । सोऽथ करुणाऽऽकुलो भूत्वा गोविन्दमुवाच । समरे क्षीयमाणस्य मम तप एव श्रेयः । हे कृष्ण ! पृथिवीक्षयकारिणा युद्धेनाऽलम् । यतो भीष्मपराक्रमं भीष्मं रणे प्राप्य को मुच्यते ? इति ब्रुवाणं राजानं मधुसूदनोऽब्रवीत् । राजन् ! यस्य धनंजयो योद्धा तस्य विजयो निश्चितः । सात्यकिद्रुपदशैब्यशिखण्डिकैकयसौभद्राश्च क्रुद्धा रणे गणानपि हन्युः । एवं जना-

र्दनेनोक्ते तीव्रं भीष्मपराक्रमं मिथः कथयतां तेषां सा विभावरी जगाम । अथ सहस्रांशावुदिते पाण्डवैः क्रौंचव्यूहे विहितेऽन्येऽपि व्यूहं चक्रिरे । ततो भीरुभयंकरे तीव्रसमरेप्रवृत्ते तालकेतुरदृश्यत । अथ गम्भीरधीरसंरम्भः स पृथक्जनंवर्जयन् नृपाशिरांसि बाणैश्चकर्त । अथाऽच्युतसारथिर्वातोद्धूताऽर्णव इव भीष्मेण कंपिते व्यूहे तमभ्यधावत् । ततो भीष्मो दुर्योधनमुखाश्चान्ये महारथास्तमापतन्तं क्षिप्रं विशिखैरपूरयन् । पार्थोऽपि तत्पक्षपवनस्फारैः सायकैः दीर्णामिव कुरुवाहिनीं समन्ताद्विदारयामास । अथ दुर्योधनप्रेरितः स्वयं भीष्मो निजक्षात्रधर्मं निन्दन् धनंजयमभ्यधावत् । तत्र सुचिरं निर्विशेषं युद्ध्यमानयोस्तयोः शरजालेन निरुद्धा दशाऽपि दिशो न दृश्यन्त । ततो धारासारप्रबलयोर्मेघयोरिव नदतोस्तयोः शरान् क्षिपतोः कश्चिन्नान्तरं ददर्श । अथ द्रोणमुखा वीरा धृष्टद्युम्नपुरोगमैरयुध्यन्त । येन दिवि सुराः पुलकिता बभूवुः । अथ भीमसेनः कलिंगवरूथिनीं प्रविश्य कुञ्जरान् पातयन् निस्संचारां वसुन्धरां चक्रे । तत्र तुरङ्गा भीमनिर्भिन्नमत्तेभकुम्भोद्भूताऽस्नगम्भसांप्रवाहे यथा कथंचित् पारं ययुः । ततः कलिंगकुञ्जरानीकं निहत्य च पदानुगं केतुमन्तं नरपतिं भीमो जघान । अथ निःशेषितकलिंगस्य मारुतेर्नादेन पृथिवी समकम्पत । एवमालोक्य भीष्मो भीमं समभ्येत्य तदश्वान् निहत्य च तं विरथं चक्रे । अथाभिमन्युः शौरिलक्ष्मणो दुर्योधनसुतं लक्ष्मणं शितैर्बाणैः रपोथयत् । एवमालोक्य सानुगो दुर्योधनः स्वयं सौभद्रमुपाद्रवत् । अथाऽर्जुनः कुरुवीरपरिवृतसुतमालोक्य मण्डलीकृतगाण्डीवस्तूर्णं परान् प्रत्युद्ययौ । ततश्चित्रयोधिनस्तस्य सायका लाघवान्महीरुहां फलानीव शूरशिरांसि जह्रुः । अथाऽर्जुनशरैर्विध्वस्तरथसादिषु सैनिकेषु विदारितेषु च गजेषु रुधिरेणेव संध्यारागेण पूरिते गगने पितामहो वासराऽन्तं विज्ञाय रणाद्विरामं समादिदेश । अथाऽन्येद्यु र्भीष्मकल्पितगारुडव्यूहं दृष्ट्वा पाण्डवाः प्रतिव्यूहमर्धचन्द्रं चक्रिरे । ततो भीरुधृतिखण्डने समरे प्रवृत्ते मही व्योम्नि रजसाऽरूढेव समलक्ष्यत । अथाऽसृक्प्रवाहैः सहसा रेणुमण्डले प्रशान्ते नृपाणां संप्रहारस्त्रिदशोक्षितोऽभूत् । तत्र फल्गुनप्रमुखा भीष्मद्रोणमुखैर्वीरैः संसक्ताश्च पूर्वदैत्यैरमरा इव समदृश्यन्त । पार्थेन महता बाणजालेन समन्ततः संहतानां रिपूणां शस्त्रवृष्टिषु निरुद्धासु निर्भयौ भीमसेनघटोत्कचौ कुरुव्यूहे प्रविश्य परवाहिनीं व्याकुलां चक्रतुः । ततो धृष्टराष्ट्रजः संरम्भाद् राजसमाजेन मौलिरत्नाऽरुणा दिशः कुर्वन् तावभ्यधावत् । तस्मिन्नवसरे हैडम्बबाणनिहिता वीरा महावातसमाक्रान्ता द्रुमा इव चकम्पिरे । ततो वृकोदरो दुर्योधनप्रेरित-

भास्वरशरवृष्टिं स्वशितबाणैश्चिच्छेद । तत्र कौरवो भीमोत्सृष्टपृषत्केन हृदि विद्धो भृशविह्वलोऽमुह्यत् । ततः सारथिनाऽऽकुलकेतुना रथेन नीते तस्मिन् द्रोणभीष्मयोः पश्यतो स्तत् सर्वं सैन्यं दुद्राव । एवं तस्मिन् कीर्णे बलार्णवे महारथैर्वारितेऽपि राजा सुयोधनस्तूर्णं समाश्वास्य प्रत्युद्ययौ । ततः स पार्थसात्यकिसौभद्रैर्बहुशो विद्रावितां चमूं दृष्ट्वा पितामहं समभ्येत्याऽब्रवीत् । तात ! पाण्डुपुत्रेषु कृपया त्वयि माध्यस्थमाश्रिते लब्धलक्षैररातिभि र्मे दारितं सैन्यं पश्य । अपि च द्रोणसहायस्य तव पुरः परिस्थातुं गंधर्वेणाऽप्यलम् । यदि मद्भाग्यवशात् पार्थेषु वः कृपा न स्यात् ? एतत् सुयोधनेनोक्तं श्रुत्वा गांगेयः सस्मितमाह । राजन् ! पाण्डवा अजेया इति बहुश स्त्वमुक्तोऽसि । तथापि वृद्धेनापि मया यत् कर्तुं शक्यते । तत् क्रियत इत्युक्त्वा महाभुजोऽसौ तालमात्रं चापमाकृष्य मन्दायमाने दिवसे परानभ्युद्ययौ । ततो रविकरप्रभैर्भीष्मरथोद्गीर्णशरैरनेकानि विदारितानि बलानि तमांसीव क्षयमगमन् । अथ नृपशरीरेषु तोमराऽऽतपत्रेषु च भीष्मनामांकिताः शराः पुनरभावाय पेतुः । ततस्तत्सायकैरदृश्यायामनीकिन्यां सर्वपार्थिवा दिक्षु भीष्मसहस्राणि ददृशुः । अथैकेनैकेन बाणेन त्रिषु त्रिषु दन्तिषु भिन्नेषु भीष्माऽनलपतंगतां व्रजत्सु राजचक्रेषु च श्रीकृष्णो फाल्गुनरथं भीष्मान्तिकमनैषीत् । ततो भास्वरैर्भीष्मशरैः सव्यसाचिरथः पञ्चाऽऽननस्य चारुपंजरशोभां दधार । अथ निरुद्धशरसंचारोऽर्जुनो यत्नेन विचित्रमार्गैर्विचरन् युयुधे । वीरयोरुभयोस्तद्रणकौशलं वर्णनातीतमासीत् । अथ पितामहस्तस्याऽमानुषंधैर्यं विलोक्य साधुपुत्रेति च संभाष्य तत् पराक्रममपूजयत् । तस्मिन्नवसरे एकरथस्थितौ कृष्णौ तत्कंकपत्रिनिर्भिन्नक्षतजोक्षितौ रक्ताऽशोकाविव बभतुः । अथ भीष्मकार्मुकनिर्गतैर्निरन्तरबाणैर्दशाऽपि दिशो नाऽदृश्यन्त । ततः कालानलइवोद्यते भीष्मे पाण्डवचमूः परैः पश्चादभिसृता दुद्राव । अथ भटमुख्येषु भग्नेषु कैटभान्तको बभाषे । अहो ! मानधना यूयं रणे कुलाचारं परित्यज्येमां कातरतां कथं याताः ? एवमाभाष्य केशवो विद्रुतांस्तान् समालोक्य वीरसात्यकिं प्रोवाच । सात्यके ! पृतनाग्रगास्तिष्ठन्तु वा यान्तु । एष स्वयं सानुगं शान्तनुसुतमद्य निहन्मीत्युक्त्वा चण्डवेगं सुदर्शनं स्वयमुद्यम्य स्यन्दनात्प्रादवातरत् । तदानीं करालानलरोचिषः क्रुद्धस्य तस्य भीमं रूपं दिवि स्थिताः सुरा अपि द्रष्टुं न सेहिरे । ततो महाकालमिवायान्तं जगत्संहारदीक्षितं च तं श्रीकृष्णं दृष्ट्वाऽपि निर्भयो भीष्मोऽभ्यधात् । भगवन् विष्णो ! एह्येहि । भवक्लेशकृशानुनाऽमुनाचक्रेण मे शिरश्छिन्धि । स्वयम्भूगुरुणाऽपि भवता हतोऽयं जनो धन्यतां प्रयातु । एवं नतमौलिना सिद्धसिन्धुसुतेनेति भाषितेऽर्जुनो रथात्तूर्णमवरुह्य कृष्णमन्वगात् । सोऽथकालियद्विषो बलात्पादौ निष्पीड्य

प्रभो ! विश्वक्षयोचितं कोपं संहरेत्युवाच । युधि सर्वरिपून् क्षपयामीति सत्येन तेशपे एवं प्रसाद्यपार्थः पुनस्तं रथमारोपयत् । ततः कृष्णौ गाण्डीवपांचजन्यघोषेण राजचक्राणां कृष्णाम्बुदभ्रमं चक्राते । अथ शलशल्यभूरिश्रवसो भीष्मादीन् पुरस्कृत्य निर्विवरैर्बाणैः शस्त्रवृष्टिभिश्चफल्गुनमवाकिरन् । ततोऽर्जुनः सपदि तामायुधमहावृष्टिं छित्त्वा सर्वलोकक्षयक्षमं माहेन्द्रमस्त्रं विदधे । अथ दीप्ततेजसि तस्मिन्नुदीर्णे महास्त्रे चण्डवातविकीर्णेव कुरुवाहिनी सहसा चकम्पे । तदाऽर्जुनेन सैन्येषु वध्यमानेषु नरनागाश्वदेहोत्था रुधिराऽपगा ससर्प । तत्र पिशाचाश्छत्राच्छफेनपटलां चलच्चामरसारसां केशशैवालशवलां तां सिषेविरे । तस्मिन् रणोत्सवे वर्तमाने नृपक्षयं दृष्ट्वा भयभीतेव संध्या पलायिता । ततो विध्वस्तचापकवचा विप्रकीर्णरथध्वजाः शस्त्रविक्षताश्चपाण्डवा अवहारमकुर्वन्त । अथ प्रभाते महोत्साहाः कुरुपाण्डवा व्याडव्यूहेन संरब्धा निर्ययुः । ततः पृथिवीक्षयसंशिनि समरे प्रवृत्ते सौभद्रमुखा भीष्ममुख्यान् वीरानयोधयन् । ततः शरशतासारसंपूरितदिगन्तरो भीष्मोऽन्यान् महारथानतीत्य पार्थमुपाद्रवत् । एवंनिर्विशेषं युद्ध्यमानयोस्तयो रभिमन्युरेकाकी द्रोणमुखान् वीरानयोधयत् । तत्राऽसौछिन्नवर्मध्वजरथान् महारथान् विधाय क्षिप्रं राजशिरःप्रकरमुच्छिन्नमपातयत् । ततो धृष्टद्युम्नो द्रोणादिभि रावृतं सौभद्रं दृष्ट्वा तत्राभ्येत्य च कौरवांश्चकर्त । सोऽथ चामरं हत्वा संयमनेः शिरः कायादाकुलकुण्डलं जहार । अत्रान्तरे दुर्योधनादिष्टो गजाधिपो विपुलगजानीकैःसार्धं समाद्रवत् । अथ गर्जद्भीमसेनो रभसा रथादवरुह्योरु गदाघातैर्जघान । तदा गदाप्रहाराभिहतैः पतद्भिर्मातंगैर्धरणीवज्रभिन्नैरचलैरिवचकम्पे । एवं भयप्रदभीमेन कुञ्जरानीके निहते क्रुद्धा दुर्योधनादयस्त मभ्यधावन् । अथ सुयोधनशराघातमूर्च्छितो वृकोदरः समाश्वास्य कुपितो रथेन परानीकं पुनर्विवेश । ततो विश्वसंहारसंक्रुद्धं कृतान्तमिवोत्थितं तं प्राप्य चतुर्दश कुरुपतितनुजाः क्षयं ययुः । एवं स भीमो कटकदुर्मुखसुषेणविवित्सुसेनापतिजयसंधसुलोचनभीमरथभीमबाहुदुष्प्रदर्शनालोलुपान् हत्वा कौरवसैन्यं सहस्रधा विद्रावयामास । ततो गर्जन् सुप्रतीकाख्यगजमारुह्य सानुगो भगदत्तस्तमभ्यधावत् । अथ मर्माबभेदिना तत्सायकेन हृदि विद्धो भीमोऽतिमूर्च्छितो ध्वजयष्टिं समालम्ब्य तस्थौ । ततः क्रुद्धो घटोत्कचो जनकमाकुलं दृष्ट्वा भगदत्त मभिद्रुत्य च घोरां मायां प्रचक्रिरे । तामालोक्यसर्वे चकिता बभूवुः । सोऽथैरावणगतः प्रभिन्नैर्दिग्द्विपैः सह दीप्तशस्त्रवृष्टिभिः सुप्रतीकमपीडयत् । ततो विध्यमानगजरवं श्रुत्वा सर्वे दन्तिनः संकुचिता बभूवुः । अथ भीष्मद्रोणप्रभृतयो वीरा घटोत्कचेन संसक्तं प्राज्योतिषेश्वरं दृष्ट्वा तं देशं सहसा समुपाद्रवन् । तत्र भीष्मो घटोत्कचं कालरूपं वीक्ष्य संध्यायां तं दुर्जयं मत्वा च सैन्याऽवहारं विदधे । येन कौरवाः कालवक्त्रान्-

निष्क्रान्ता इव बभूवुः । ततो रात्रौ पितामहमभ्येत्य दुःखितः कुरुराजः पाण्डुपुत्राणां जयकारणं पप्रच्छ । ततो भीष्मः कथयामास । राजन् ! विष्णुना गुप्ता पाण्डवा न जेया इति बहुश उक्तोऽसि । यतः पुरा स्वयम्भूर्मुनिसंसदि स्वयं प्रादुर्भूतं महाविष्णुं भूभारशान्त्यर्थं तुष्टाव । हे विश्वेश ! विश्वात्मन् ! विष्णो ! विजयताम् । जगत्सर्गस्थिति संहारकारिणे दैत्यान्धकारहारिणे मोहदारिणे च महते तुभ्यं शतशो नमोऽस्तु । स्वामिन् ! पूर्वं ये त्वया दानवा हतास्ते पुनर्भुवमधुनाऽवतीर्णाः सन्ति । अतस्तेषां दृप्तानां वधाय कृपया मानुषींतनुमाविशेति प्रार्थयामि । निशम्यैवं श्रीमन्नारायणो नरेण साकं भूभारशान्त्यै क्षितिमवातरत् । स एष भगवान् यादवनन्दनः कृष्णो जातः । धनुः श्रेष्ठोऽर्जुनश्च नररूपेणावतीर्णः । नरपाल ! अत एवेमौ कृष्णार्जुनौ त्रिदशैरप्यजेया विति मत्वा तै सह शमः क्रियताम् । अथ प्रभाते मकरश्येनव्यूहाप्रवर्तिनो भीष्मप्रमुखाः पाण्डवाश्च युद्धं चक्रिरे । तत्र हतानां हन्यमानानां मिथो घ्नतां च वीराणां तुमुलो निःस्वनोऽभवत् । भीमफल्गुनसौभद्रमत्स्यसात्यकिपार्षतैर्भीष्ममुख्यैश्च भिन्ने ते सेने संशयमवापतुः । कबन्धताण्डवचण्डे वेतालसंकुले च तस्मिन् घोराऽऽयोधने भूतप्रेतादीनां महोत्सवोऽभवत् । ततस्तत्र धन्विशरजालेन रवौ संछादिते दिवमुत्पततां राज्ञा शस्त्र-संग्रहो व्यर्थोऽभूत् । अथ सात्यकिसूनवो भूरिश्रवसासक्तं सात्यकिं वीक्ष्य तं देश मभ्या-द्रवन् । ततस्तूर्णमापततां शरदुर्दिनञ्च सृजतां तेषां शिरांसि भूरिश्रवाः शितशरैराचकर्त । एवं हतेषु तेषु कुपितो धनंजयः कुरुसेनासंहारं चकार । एवमर्जुनेन भूभुजां लक्षचतुर्भागे हते वासरान्तेऽखिलं सैन्यं न्यवर्तत । पुनः प्रभाते कुरुपाण्डवाः क्रौञ्चमकराभ्यामभेद-व्यूहाभ्यां युद्धार्थं ययुः । ततो भीमसेनो द्रुपदसूनुना सह शत्रुवाहिनीं प्रविश्य सैन्यसंहार मकरोत् । एवं व्यूहभेदं दृष्ट्वा कुपितकौरवास्ते कुंजरानीकैस्तूर्णं पर्यवारयन् । तत्र भीमसेनगदाघातनिष्पिष्टवपुषां पततञ्च गजयोधिनां घोरव्यतिकरोऽभवत् । एवं भुजशालिना भीमेन युद्ध्यमानेषु सैन्येषु स्वयं सुयोधनो राजाऽनुगैस्सह तमाक्रमत् । ततो विशिखवर्षिभिः कौरवैश्छादितं भीमं दृष्ट्वा पार्षतो मोहनास्त्रेण तत् सैन्यं सहसा व्यमोहयत् । ततो द्रोणेन ज्ञानास्त्रेण विनाशिते मोहनास्त्रे भीमस्तूर्णं कुरुपतिमुपाद्रवत् । मदान्ध ! मयि जीवति क्वाऽधुना जीवन् प्रयास्यसीत्युक्त्वा शरशतैर्वज्रवेगैस्तमवाकिरन् । ततश्चण्डचापच्युतबाणैः कृत्तरथध्वजः स हृदि निर्दारितश्च मूर्च्छां भेजे । अत्रान्तरे भीष्मशरैर्हन्यमानेषु राजसु कृतान्तसमरोत्सवो घोरसंमर्दो बभूव । तस्मिन्नेवासरे कौरवैः सह वीरद्रौपदेयेषु युद्ध्यमानेषु गजवाजिरथक्षयः प्रखरसमरोऽवर्तत । अथ शंतनु

नन्दनो रुधिराऽरुणे सूर्येऽस्तं याते युद्धावसानवाद्यमवादयत् । अथान्येद्युः भीष्मेण स्वयं मण्डलव्यूहे निहिते युधिष्ठिरोऽपि चक्रव्यूहमकल्पयत् । ततो भीष्मपार्थयो र्भीषणसमरे प्रवृत्ते सर्वधन्विवरं द्रोणं विराटोऽभ्यधावत् । अथ द्रोणो बाणवर्षेण तं शरवर्षिणं समाच्छाद्य तस्य रथं चूर्णयित्वोन्ननाद । ततोऽसौ संभ्रमान् महावीरस्य शंखस्य हतानीकंरथमारुरोह । द्रोणोऽप्येकरथे स्थितौ पितापुत्रौ विलोक्य शंखाय मृत्युदण्डोपमं शरंप्राहिणोत् । सोथ तेन भिन्नहृदयः क्षतजोक्षितो धरण्यां पपात । ततो द्रोणो विशिख वर्षिणः शिखण्डिनोऽश्वान् शरै र्जघान । लब्धावसरः सोऽपि सात्यकिरथं समारुरोह । एवमालोक्य राक्षसेन्द्रोऽलम्बुसस्तमुपचक्राम । ततस्तं मायया युद्ध्यमानं सात्यकिः कोपादुग्रैन्द्रास्त्रेण विमुखं चकार । एवं तस्मिन् शैनेयेन जितेऽर्जुनसुत इरावान् विन्दानुविन्दौ वीरवभ्यायात् । अथ नृपाग्रणीर्भगदत्तः कृतान्तमिव समायान्तं घटोत्कचं गजेन्द्रेण निवारयामाम । ततस्तयोः समरे प्रवृत्ते पाण्डवसेनां निहत्य गजेन्द्रो नलिनीमिव दर्पात् तमपि विलोडयामास । अथ माद्रीसुतौ शरैः शल्यं राजचक्रस्य पश्यतो विरथं विधाय विमुखं चक्रतुः । अथ स्वयं युधिष्ठिरः श्रुतायुधं नृपं जित्वा कौरवानीकमपि शरै र्विमुखं विदधे । अथ धन्विगुरौ गौतमे चैकितानेन विजिते भीष्मः पाण्डुसेनाया अर्जुनश्च कुरुसेनायाः कदनमकरोत् । ततो युधिष्ठिरगिरा शिखण्डी भीष्ममुपाद्रवत् । तञ्च मद्रराजो दिव्यास्त्रैर्वारयामास । एवं भीष्मेणाऽनिवर्तिषु भूपालेषु पार्थेन च विनाशितेषु त्रिगर्तेषु दिवाकरोऽस्तं जगाम । ततस्तमोभिराच्छादिते लोके रक्तासवाकुले च रणे प्रमत्तवेतालै रिव नृपाः स्व स्व शिबिराणि ययुः । अथ भीष्मेण प्रातः सागरव्यूहे विरचिते द्रुपदनन्दनः शृंगाटकाख्यंव्यूहं विदधे । ततो भीष्मचापच्युतशरैः सैन्येषु विदारितेषु कोपादेक एव वृकोदरोऽभिमुखो बभूव । सोऽथ देवव्रतस्य बाणैः सारथिं हत्वा तूर्णं द्रोणस्यापि रथं विच्छिन्नपताकं विदधे । ततो लब्धलक्ष्यो भीमो बव्हाशिसुनाभकुंडधारविशालाक्षसुदुर्जयमहोदरमण्डितकाख्यान् सप्त दुर्योधनाऽनुजान् पंचाननो द्विपानिव जघान । एवं कौरवचमूं विद्राव्य दिशःस्फालयन् युगान्ते रुद्र इव विचचार । अथेरावानुलूपीतनयः प्रतिज्ञापाशबद्धश्च तत्रागत्य हययोधिनो गांधारान् विपुलानीकान् हत्वा शकुनेः सप्तवीरतनयान् जघान । एवमालोक्य दुर्योधनाऽदिष्टोऽलम्बुसस्तमिरावन्तं समभ्यायात् । तत इरावान् द्विधारखड्गेन रक्षः सनिषंगं धनुश्छित्वा बलादुन्ननाद । ततो नृमोहिनीमायामुभावप्याश्रित्य नभसि परस्परं युयुधाते । ततो भुजंगास्तीक्ष्णविषमुद्वमन्तस्तत्साहाय्यं चक्रुः । परं राक्षसो गारुडं रूपमास्थाय सर्वान् सर्पान्

भक्षयित्वा स्वं वपुराददे । अथ मायाविमोहितस्योलूकींसुतस्येरावतः कायात् खड्गेन शिरो राक्षसो जहार । एवं धनंजयसुते हते क्रोधमूर्छितो हैडिम्बोऽतिरुराव येन सकुलाचला पृथिवी चचाल । ततस्तमभिद्रुतमालोक्य स्वयं राजा दुर्योधनः सर्वैर्निजानीकैः सह महामायमयोधयत् । सोऽथ विद्युज्जिह्ववेगवन्महारौद्रप्रमाथिनोहैडिम्बानुचरान् जघान । ततः कुरुभूभुजे घटोत्कचप्रेरितां शक्तिं वंगाधिपो महागजेन जग्राह । ततो नागे निपतिते सुयोधने सुरक्षिते च पिशिताशनःकुरुसैन्यानां संहारं चकार । अथ भगदत्तो गजमारुह्य पाण्डवानामनीकिनीं विद्राव्य च घटोत्कचमयोधयत् । अत्रान्तरे तनयं निहतमाकर्ण्य कुपितोऽर्जुनो भूमिपालानां शिरोभिर्वसुधां दुर्गमां व्यधात् । भीमोऽपि भ्रातृपुत्रमृतिं ज्ञात्वा क्रोधसंतप्तो विरांटसुबाहुनाधृष्टिकुण्डलिकुण्डभेदसुलोचनदीर्घबाहुकनकध्वजान् सुयोधनानुजान् यममन्दिरं प्राहिणोत् । एवं कबन्धशतसंकुले कौरवानीके संजातेमत्तवेतालनन्दनो दिनसंक्षयो बभूव । ज्ञात्वैवं महारथा विस्रस्तचापकवचं भग्नस्यंदनकुञ्जरञ्च रणं विश्रामार्थं निवारयामासुः । ततः सुयोधनो निशायामनुजैः सह कर्णमानाय्य पार्थपराभवं चिन्तयामास । ततो वैकर्तनः प्रोवाच । सखे ! यदि जयं वाञ्छसि । तर्हि मद्वचः क्रियताम् । यदा गांगेयः शस्त्रं त्यजेत् । तदाऽहं पाण्डवान् जेष्यामि । एष वृद्धो निरीहो धनंजये च सपक्षो वर्तते । त्वयाऽस्मिन्नविचार्यैव भारो न्यस्तः । एवमाकर्ण्य हर्षाद् दुर्योधनो भ्रातृभिः सह समुत्थाय भीष्मशिबिरं प्रतस्थे । अथ दृक्त्रिभागेन प्रणतभूमिपालान् विलोकयन् दुर्योधनो भीष्मशिबिरं प्राप्य रत्नपर्यंके शयानं च तं विलोक्य प्रणनाम । ततस्तेन सत्कृतो निर्दिष्टासनमास्थाय क्षणं ध्यात्वा च पितामहमभाषत । तात ! अयं ते कार्मुकप्रणयी भार्गवविस्मयप्रदोऽपि च भुजस्त्रैलोक्यविजये पर्याप्त इति मे मतिः । परमानृशंस्यात् कारुण्याद्वा यदि ते पाण्डवा रक्ष्यास्तदा तु युद्धाय रणकर्कशं कर्णमनुजानीहीति कुरुराजेनोक्तो मर्माहत इव दीर्घं निःश्वसन् प्रातर्द्रक्ष्यसीत्युक्त्वा क्ष्मामवलोकयत् । अथ कौरवोऽपि तमामन्त्र्य दीपदीप्तविभूषणैर्दिशः शबलयन् निजशिबिरं समाययौ । अथ प्रभाते भीष्मेण द्रोणद्रौणिमुखैः सह सर्वतोभद्रे विहिते युद्धं प्रावर्तत । अत्रान्तरे प्रतिव्यूहेष्वनीकेषु पाण्डवैर्नदद्भिर्वीरोऽभिमन्युः कुरुचमूरग्रे व्यदारयत् । अथ मानिनो भूपाला ग्रीष्मसूर्यमिवोद्यतं तं संहता अपि न सेहिरे । एवमालोक्य दुर्योधनप्रेरितोऽलम्बुसस्त्रैलोक्यमोहिनीं मायामवलम्ब्य च तमभ्यधावत् । ततो जगत्प्रलयसंशिना तन्नादेन बहवो योधा विगतासवः सहसा निपेतुः । सोऽथ पुरः प्राप्तै द्रौपदेयैः क्षणं रणं विधाय बाणैरभिमन्युरथमवाकिरत् । ततः सौभद्रस्तेन रक्षसा निहितां

मायां भास्करास्त्रतेजसा तामसीं मायां चिच्छेद । अथ सात्यकिप्रमुखा युधि द्रौणिप्रभृतिभिः संसक्ता दिव्यास्त्रदहनाकुलं गगनं चक्रुः । अत्रान्तरेऽर्जुनो द्रोणमभ्येत्य वायव्यास्त्रेण जगत्क्षोभविभ्रमं चकार । ततो द्रोणेन शैलास्त्रं समुदीरितम् । धनंजयोऽनलास्त्रप्रयोगेण तन्निवारयामास । ततो भीमभीमगदाघातनिर्भिन्नगजमण्डले पताकाफेनमालिनी शोणितनदी सुस्राव । ततस्तस्मिन्नाकुलसंग्रामे वर्तमाने वेतालदत्ततालेषु नृत्यत्सु च छिन्नमूर्धसु सुभटेन्धनो भीष्मश्चापकेंकारमन्त्रपूतोऽनल इव जज्वाल । अथ तद्भुजप्रेरिताः सायका विहंगाः सायाह्ने वृक्षानिव नृपान् विविशुः । ततो भीष्मो नृपनिकृत्तचामरोष्णीषैश्छन्ना अथ दिशः समरे स्वयशो विशदाश्चकार । तत्र शिरस्त्रशरनिर्घर्षजाता वह्निकणा भीष्महतनृपजीवा नभश्चरा इव बभुः । एवं पाण्डवबले विदीर्णे लज्जामुत्सृज्य यातेषु त्यक्तचापेषु च नृपेषु केशवो रणे सत्यसंधं भीष्मं जहीत्यर्जुनमादिदेश । अथ धनंजयो निःश्वस्य मुहुः क्षत्रधर्मं निन्दन् पितामहमुपाद्रवत् । एवं शरवर्षिणं पार्थं दृष्ट्वा भटाः पुन निर्वृत्य योद्धुमारेभिरे । अहो ! कृष्णप्रभावात् कातरा अपि रणे शूरा अभूवन् ।

अथ कंसारिं भीष्मचापच्युतबाणैश्छादितं फल्गुनं वीक्ष्य रथमुत्सृज्य च तमभ्यधावत् । ततो धन्यतामानी भीष्मः स्वयं कृष्णमभिद्रुतं वीक्ष्य प्रोवाच । भगवन् ! अद्याहं पुण्यभाजां धुर्यः संजातः । यस्य त्वं जगन्नाथः स्वयं वधाय समुद्यतोऽसीति वादिनि गांगेये धनंजयो रथात्तूर्णमवरुह्य पुनारथमानिनाय । अथार्जुनशराकीर्णे कुरुकानने शान्तनवः पुनः क्षत्रियाणां संहारं चक्रे । एवं घोरे तस्मिन् व्यतिकरे दिनान्तं ज्ञात्वा पाण्डवा निशि युद्धावसानं चक्रुः । ततो रजन्यां रहसि धर्मराजो भीष्मभिन्नराजकं दृष्ट्वा जनार्दनं जगाद । कृष्ण ! प्रबुद्धगांगेयवडवाग्निनाऽपर्यन्तं सेनाम्बुधिरल्पशेषतां नीतः । शौरे ! मण्डलीकृतचापस्य भीष्मस्याग्रे आखण्डलोऽपि परिभवास्पदमिति सत्यम् । किं बहुना मे राज्येनालमितिवादिनि धर्मजे शौरिरुवाच । मा भैषीरहं स्वयं शान्तनुनन्दनं योत्स्ये । अधुनाऽहमुत्सृष्टसमयोऽस्मि । विजयलाभाय सर्वं करिष्ये । राजन् ! त्वदर्थमकार्यमपि कार्यमेव गणयामि । पश्यतां नृपाणां रणे भीष्मं पातयामि । एतत् कृष्णोक्तमाकर्ण्य युधिष्ठिरोऽवदत् । अच्युत ! नाहं कामात् त्वां मिथ्यावादिनं कुर्याम् । इतो गत्वाऽहं भीष्ममेव जयोपायं पृच्छामि । यतः स हि पूर्ववात्सल्यान् मां शुभाशिषा समयोजयत् । इति निश्चित्य गूढचारी युधिष्ठिरः सकृष्णभ्रातृभिः सह भीष्मशिविरमाशु जगाम । तत्रानुजसखः स शौर्यराशिं पितामहं प्रणम्य विजयोपायं पप्रच्छ । स च पृष्टस्तमुवाच । राजन् ! लोकेषु यो वीरो मां विजयेत । नाहं तमत्रलोकयामि । मयि जीवति युष्माकं जयलाभ-

कथा ऽशक्या । ममेषवो न विशस्त्रे न संत्रस्ते न स्त्रीपूर्वे च पतन्ति । तस्मात् क्लीवेन शिखण्डिना मां घातयेति देवव्रतेनोक्ते लज्जिताऽऽननो नृपो ऽकाम इव दुःखेन स्वशिबिरं ययौ । ततः प्रभाते मिथः सुभटैर्व्यूहेषु सैन्येषु शिखण्डिप्रमुखा वीरा परानीकमुपाद्रवन् । ततो भीष्मशरश्रेणिलुलितराजमण्डले चण्डकोपो धुतकोदण्डश्च शिखण्डी तमभ्यधावत् । एवमालोक्य शान्तनवस्तमब्रवीत् । पार्षत ! कामं प्रहर । अनुजने जने भीष्मविशिखा न नाम पतंतीतिवादिनं मण्डलीकृतकार्मुकः शिखण्डी निःश्वसन् कोपाद् गांगेयमभाषत । भीष्म ! भार्गवस्यापि विजेतारं त्वां सम्यग् जानामि । युधि युध्यस्व वा मा युद्ध्यस्व । न त्वमद्य जीवन् गमिष्यसि । उक्त्वैतत् पार्थरक्षितः शिखण्डी समभ्येत्य तं बाणजालेन समपूरयत् अथ राजवेणुवनानलो भीष्मोऽपि तमनादृत्य शरैः कृष्णार्जुनौ च विद्ध्वा पाण्डवचमूं विवेश । ततस्तत्र धृष्टद्युम्नादिभिर्वीरैरजःपिहितदिङ्मुखो दारुणः प्रहारोऽभूत् । ततो द्रोणशासनात् द्रौणिप्रभृतयो वीराःसमरे भीष्मं रक्षन्तो धनंजयमयोधयन् । ततःशान्तनवोऽशनिगौरवैः शरै र्विरोचनं समुन्मथ्य कालाक्रीडमिव कदनं विधाय च क्षुणितमना दूरादेव युधिष्ठिरमब्रवीत् । कौन्तेय ! नृपतिक्षयान् मे वधाय यत्नं कुरु । पुत्र ! संप्रत्यहं रौद्रकर्मणाऽनेन भृशं विषण्णोऽस्मीतिवादिनि शिथिलीकृतकार्मुके च गांगेये सृंजयसोमकपांचालास्तमुपाद्रवन् । ततः कुरुचमूवीरा भीष्मरक्षार्थे पाण्डवमहारथानावार्य द्वन्द्वयुद्धानि चक्रिरे । अथाप्रयत्नोज्झितैरपि गांगेयविशिखै राजजीवितसंक्षयो महारौद्रोऽवर्तत । अथाकर्णकृष्टकोदण्डमण्डलः फल्गुनेरितःशिखडी खण्डपरशुप्रभावं तमभ्यधावत् । ततः पितामह स्तस्मिन् सुभटसंहारे वर्तमाने दुर्योधनप्रेरितवाहिनीं वीक्ष्य घोरदिव्यास्त्रमुदीर्य च धनंजयमभ्यधावत् । अस्मिन्नेवावसरे ऽर्जुनाग्रे शिखण्डिनि पुरस्थिते विमना इव गांगेयस्तन् महास्त्रं संजहार । अथ ब्रह्मलोकाभिकामेषु राजसु युद्ध्यमानेषु भीष्मविशिखैरयुतेषु वीरेषु पतत्सु वसव स्तमभ्युपेत्य प्रोचुः । भीष्म ! अस्मदभिकांक्षितस्ते संन्यासकालः समुपस्थितः । ततस्तास्मिन् श्लथोद्यमे प्रसन्ने च भुवनत्रये पार्थप्रमुखाः सर्वे सायकैस्तमपूरयन् । ततःकिरीटिना तस्य बाणेषु छिद्यमानेषु शिखण्डी तस्मै हेमपुंखशरावलीं प्राहिणोत् । अथ स्थगितकार्मुको भीष्मस्तां शैखण्डीं शरमालां पेशलां शैरीषीमिव प्रहसन् जग्राह । अथ फल्गुनो दुर्योधनसमादिष्टान् भीष्मरथरक्षकान्बाणजालेन मोहयन् तमवाकिरत् । एवं गांडीवनिःसृतशरै र्विदार्यमाणो भीष्मः पार्श्वगतदुशासनं सस्मितमवादीत् । वत्स ! शिलासंघातभेदिनो नैते शिखण्डिनो बाणाः । नूनं निवातकवचच्छिदः किरातरणसाक्षिणश्चार्जुनस्यैतेबाणा विषधरा बिलमिव मम मर्माणि विशंतीत्युक्त्वा पार्थाय शक्तिं चिक्षेप । अथेन्द्रसूनुस्तां

शक्तिं विशिखैस्त्रिधा चकार । एवं गाण्डीवधन्वना सर्वायुधेषु छिन्नेषु निर्विवरैः शरैर्भीष्मः क्षणाद् दुर्लक्ष्यो बभूव । ततो वीरेषु युद्ध्यमानेषु बलद्वये च निर्विभागेऽपराह्णेऽपरसहस्रांशुरिव विशिखैरस्पृष्टभूमिर्भीष्मो रथात् पपात । एवं तस्मिन् वीरपुंगवे निपतिते महावीराणामपि हृदयानि चकंपिरे । ततः संग्रामे निवृत्ते नभस्पृशि हाहाकारे च संजाते प्रशान्तात्मा पितामहो निज दिव्यभावं भेजे । भीष्म ! त्वं स्वच्छन्दमरणोऽसि । तस्मात् योगमास्थायोत्तरायणकालं प्रतीक्ष-स्वेत्यशरीरिणीवाक्प्रादुर्बभूव । एतदाकर्ण्य देवव्रतो महायोगमासाद्य परमात्मचिन्तनमकरोत् । अत्रान्तरे त्रिदशवाहिन्या विसृष्टा हंसरूपिणो मुनयः समभ्येत्य तमेवार्थं भीष्ममब्रु-वन् । तच्छ्रुत्वा गांगेयः स्थितोऽस्मीति प्रत्यवदत् । ततः शरतल्पगतः स प्रणतान्कुरु-पाण्डवानथ पूर्णेक्षणान् सान्त्वयित्वा प्रोवाच । वत्साः ! लम्बमानस्य शिरसो धारणं विधीयताम् । श्रुत्वैतत् राजभिरुपधानेषु समानीतेषु पार्थस्तस्य शासनाच्छरत्रयेण शिरो जग्राह । अथ तत्कर्मतुष्टो भीष्मो धनंजयं प्रशस्य पाण्डवैः संधिःक्रियतामिति कौरव-मादिदेश । ततो रजन्यामतीतायां राजसूपाविष्टेषु मुनिजनसेव्यमानो भीष्मो जल मयाचत । ततो नृपैर्मणिकांचनचित्रकलशेषु समानीतेषु पार्थो मेघास्त्रं व्यधात् । ततस्तदुद्भूतपयसा तर्पितो गांगेयस्तं नरावतारं मत्वा सादरमपूजयत् । अत्रान्तरे कर्णो विजने गांगेयं समामन्त्र्य संपूज्य च प्रसादयामास । ततो वीतमन्युः पितामहः कर्णं प्रोवाच । वैकर्तन ! पार्थास्ते भ्रातरः । अतस्तैः साकं शमं भजस्व । तच्छ्रुत्वा-विनताननः कर्णो जगाद । प्रभो ! सर्वमहंजाने परं भवितव्यं भवत्येव । अपरं च मानिनो दुर्योधनस्याभिन्नहृदयः सखा । अतएव तात ! समरोद्यमिनं मामनुजानीहि । एवमाकर्ण्य भीष्मोऽब्रवीत् एवमस्तु । तच्छ्रुत्वा सूर्यसुतो घननादिना रथेन कौरववाहिनीं प्रययौ । अथ गतेषु सर्वेषु महामतिर्भीष्मो भगवच्चरणारविन्दचञ्चरीकत्वमवाप्य ध्यानमग्नो बभूव ।

मंगलं भगवान् विष्णुर्मंगलं गरुडध्वजः ।
मंगलं पुण्डरीकाक्षो मंगलायतनं हरिः ॥

इतिश्रीदधीचिवंशावतंसेन त्रिपाठीत्युपाख्यराजगुरुपण्डितबदरीलालात्मजेन श्रीजान-कीदेवीगर्भजेन शिवदत्तकाव्यतीर्थेन विरचितं गद्यभारतपूर्वार्द्धंसमाप्तम् । श्रीरस्तु ।

इतिश्रीगद्यभारते भीष्मशरशय्याशयनं नाम भीष्मपर्व समाप्तम् ॥

ॐ



* ॐ *

# ॥ शुद्धाऽशुद्धपत्रम् ॥



| पृ० | पं० | अ० | शु० | पृ० | प० | अ० | शु० |
|---|---|---|---|---|---|---|---|
| १ | १२ | कार्यं | कार्यै ( प्रा ) | १८ | ६ | कृत्यो | कृत्या |
| १ | १२ | गुह | श्री ( भू ) | ,, | १२ | र्वि | वि |
| १ | २४ | वहाय्य: | वह्व्य: | ,, | २२ | पृष्ठा | पृष्ठा |
| १ | २१ | ततो | ततस्तान् | १९ | १४ | मर्पे | मर्प |
| २ | १८ | पात्रोऽसि | पात्रमसि | १९ | २२ | लन् | लान् |
| ३ | ४ | यन् | यन् स | २० | १८ | मंम्बि | मम्बि |
| ३ | ६ | काम: | काम: स | २० | २२ | चण्डा | चण्डां |
| ३ | २२ | स्यांऽस्यं | स्याऽस्य | २१ | ५ | आत्माऽ | आत्माऽऽ |
| ४ | ८ | स: | स | २२ | १७ | गर्भे | गर्भे |
| ४ | ८ | तन। | तन्। | २३ | ५ | एब | एव |
| ५ | २० | तद | तद् | २३ | ६ | सात्वा | साल्वां |
| ६ | ७ | स: | स | २३ | १९ | राज्ञा | राज्ञ्या |
| ,, | २६ | ,, | ,, | २४ | १६ | कु | संकु |
| ७ | ६ | णा | ण | २४ | २५ | राजा | राज |
| ,, | १२ | ह्वा | ह्व | २५ | ५ | घृत्ता: | वृत्ता: |
| ,, | ९ | ततो | ततोऽसौ | ,, | ११ | स्नुषा | स्नुषा |
| ८ | १४ | कीटम् | कीटं | ,, | १८ | बेध्वा | बध्वा |
| ९ | ११ | प्सरा | प्सरास् | ,, | १९ | जिह्वा | जिह्वा |
| १० | १२ | ग्धेन | दग्धेन | ,, | २० | हस्तहस्त | हस्तेन |
| ११ | २८ | अपरेण | अपरै: | २६ | १ | चीरं | चिरं |
| १२ | १२ | मंत्वा | मत्वा | ,, | ५ | करोमि ! | करोमि ? |
| १३ | १२ | लप्राति: | कुशलं | ,, | ९ | साहाप्यं | साहाय्यं |
| १३ | १९ | परं | परंतु | ,, | १२ | सखे ? | सखे ! |
| १४ | १ | च्छ्रेष्ट | च्छ्रेष्ठ | ,, | १६ | स्तिन् | स्तिना |
| ,, | ११ | जना | चना | ,, | २३ | पात्रो | पात्रं |
| १५ | ८ | तीर्णे | तीर्णे | २७ | १० | स: | स |
| ,, | १९ | श्वेते | श्वैते | ,, | १२ | तबा | तवा |
| ,, | २२ | तत्वं | तत्त्वं | ,, | २१ | मुच | मुंच |

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| २९ | १० | च्छत्तुं | च्छेत्तुं |
| ,, | १२ | द्य | ड्य |
| ,, | २३ | बन्हे | वन्हे |
| ३० | ३ | वल | बला |
| ,, | १६ | शकथ | शक्य |
| ३१ | ७ | बेत्ति | वेत्ति |
| ३२ | ११ | भ्रांता | भ्राता |
| ,, | २१ | कराभ्या | कराभ्यां |
| ३३ | ३ | व्रु | ब्रु |
| ,, | १३ | ष्ट्रिरो | ष्ठिरो |
| ३४ | २४ | सः | स |
| ३६ | २२ | द्रो | द्रौ |
| ३७ | २० | ब्रह्य | ब्रह्म |
| ३८ | १७ | समा | समाः |
| ३९ | १८ | सुता | सुता |
| ३९ | २५ | क्ति | क्तिः |
| ३९ | २६ | सः | स |
| ३९ | २८ | तते | ते |
| ४० | ९ | कल्माष | कल्मष |
| ४० | २० | हंन्तु | हन्तु |
| ४२ | १३ | ऽक्रूरः | ऽक्रूरः |
| ४३ | १८ | तद्विजा | द्विजा |
| ४४ | ५ | ज्ञाता | अज्ञाता |
| ४५ | ११ | मिवा | इवा |
| ४५ | २४ | ऽमि | ऽभि |
| ४६ | १५ | श्रु | श्रु |
| ४७ | २ | द्यै | द्यै |
| ४८ | १३ | द्रो | द्रौ |
| ४९ | २ | क्षेम | क्षेप |
| ५० | १ | रुद्धः | रुद्ध |
| ५० | ८ | वंगा | वंगां |
| ५० | २८ | तत्र | तत्रस |
| ५२ | ६ | च | च स |
| ५३ | २० | भिक्षे | भक्षे |

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| ५४ | १० | वंसु | वसु |
| ५५ | ५ | दृश्य | दर्श्य |
| ५५ | २६ | न्न् | न् |
| ५८ | ८ | वर्त्यं | वर्त्य |
| ५८ | १४ | श्चिच | श्चित्र |
| ५९ | १२ | स्मा | स्म |
| ६० | १५ | भोजा | भोज्या |
| ६५ | १२ | दम् | दं |
| ६५ | २३ | च्छ्रू | च्छू |
| ६६ | १४ | वर्द्धन | वर्द्धन |
| ६७ | ११ | परिण्डत्यं | पाण्डित्यं |
| ६८ | २ | स | सह |
| ६८ | ५ | पूर्वं | पूर्व |
| ६८ | १३ | धार्तं | धार्त |
| ६८ | १५ | कौरवौ | कौरवा |
| ७० | ३ | र्णं | र्णा |
| ७० | ३ | कुर्वं | कुर्व |
| ७० | २७ | श्रु | श्रु |
| ७१ | २० | ग्र | प्र |
| ७२ | २१ | द्र | द |
| ७२ | ४ | अथ | सोऽथ |
| ७२ | ७ | स्मर | स्मेर |
| ७२ | १९ | सर्वौ | सर्वा |
| ७२ | २४ | तप | तपः |
| ७४ | २१ | तस्य | तं |
| ७६ | २२ | वाच | वाचा |
| ८० | ८ | नृणांभर्तुः | नृणां |
| ८० | ८ | एवं | एवं भर्तुः |
| ८० | ११ | विवशे | विवशो |
| ८० | १६ | क्रियतेः | क्रियते |
| ८० | २० | दुर्यौ | दुर्यो |
| ८० | २२ | जाता | जाताः |
| ८१ | ३ | द अ | द |
| ८२ | २० | हिता | हिताः |

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| ८३ | ३ | शुभ्राव | शुभ्राय |
| ८४ | १० | बहुन | बहुना |
| ८४ | १६ | दह | हद |
| ८५ | १८ | दत् | दात् |
| ८६ | १६ | वार्ष्णीय | वार्ष्णीय |
| ९० | ३ | विपिनेत्वं | ह्यविपिने। |
| ९० | १४ | अयोध्यां | साऽयोध्यां |
| ९० | १५ | प्स्पसी | प्स्यसी |
| ९० | २६ | योज | योजन |
| ९१ | ४ | दृष्ट्वा | तं दृष्ट्वा |
| ९१ | १३ | पूजिते | पूजितो |
| ९१ | २७ | बिवभौ | विबभौ। |
| ९२ | २ | नलः | नलो |
| ९३ | ५ | द्धारंः | द्धारतीर्थं |
| ९४ | ७ | तीर्थादि | तीर्थदि |
| ९४ | २४ | हपि | हमपि |
| ९५ | ५ | स्वास्राणि | स्वास्त्राणि |
| ९५ | २४ | मनाव | मनव |
| ९५ | २७ | अग्रि | अग्नि |
| ९६ | २३ | नाराद | नारदौ |
| ९७ | १६ | जीर्णं | जीर्णे |
| ९७ | २७ | रवि | रविः |
| ९८ | ८ | सोश्वः | सोऽश्वः। |
| ९८ | २४ | मवाप्य | ववाप्य |
| ९९ | २१ | म्वना | स्वना |
| ९९ | २७ | जमाम | जगाम। |
| १०० | ७ | तिष्ठति | तिष्ठति। |
| १०१ | २ | पकारा | पमाकारा |
| १०१ | ८ | ततौ | ततो |
| १०२ | १३ | मुनि | मुनिर् |
| १०२ | २८ | अवापः | अवाप। |
| १०३ | २ | प्रात्यर्थ | प्राप्त्यर्थ |
| १०३ | ११ | लोमं | लोमश |
| १०३ | २४ | सहजा | सहजां |
| १०३ | २४ | शाख्वती | शाश्वतीं |
| १०५ | २४ | रेभ्यो | रैभ्यो |
| १०६ | २८ | ऽन्येद्यः | ऽन्येद्युः |
| १०७ | १४ | सभा | समा |
| १०९ | ३ | मदद्दश्यं | मद्दश्यं |
| १०९ | १५ | पाण्डवा | पाण्डवास् |
| १०९ | १६ | घटा | घटो |
| १०९ | १९ | ह्रत | हृत |
| १०९ | २७ | तद्दपु | तद्वपु |
| ११० | १ | दशा | दश |
| ११० | ६ | शालितो | शालिनो |
| ११० | १८ | कौंतेयों | कौंतेयो |
| ११० | २४ | स्त्रिग्ध | स्निग्ध |
| ११० | २७ | खल्वीद | खल्वी |
| ११० | २८ | आसीत | आसीत् |
| १११ | १० | बबंदे | ववंदे |
| १११ | १२ | ष्वच्य | ष्वज्य |
| ११२ | ५ | रूह | रुह |
| ११२ | २३ | वर्षैं | वर्षैः |
| ११२ | २५ | ल्पुष्ट | प्लुष्ट |
| ११४ | १० | सः | स |
| ११४ | २० | म्तुतौ | स्तुतौ |
| ११५ | १ | दना | दाना |
| ११५ | १६ | तपं | तपश् |
| ११५ | २० | तत्र | तत्राऽपि |
| ११६ | १ | भ्रांत | भ्रांतः |
| ११६ | २ | मुकंद | मुकुंद |
| ११६ | १८ | सक्ताश्व | सक्ताश्च |
| ११७ | २ | दत्त | ऽदत्त |
| ११७ | १६ | ये न | येन |
| ११८ | ३ | एयं | एयं |
| ११८ | १० | यांम्यौ | वाम्यौ। |
| ११८ | २५ | सायकं | सायक |
| ११९ | ५ | ऊचूः | ऊचुः |

| पृ० | प० | अ० | शु० | पृ० | प० | अ० | शु० |
|---|---|---|---|---|---|---|---|
| १२० | ३ | अभूत | अभूत्। | १३३ | २ | मार्के | मार्क |
| १२० | ६ | ब्यसी | ब्यती | १३३ | १४ | प्रमृ | प्रभृ |
| १२० | २२ | व्रह्मा | व्रह्मा | १३४ | १५ | सातुगं | सानुगं |
| १२१ | ४ | सज्य | सृज्य | १३४ | २१ | लपव | प्लव |
| १२१ | १६ | मयाति | मयेति | १३ | २२ | कोऽवि | कोऽपि |
| १२१ | २२ | शखस्य | शाखस्य | १३५ | २ | अध्ये | अप्ये |
| १२१ | २४ | शिष्ठा | शिष्ठा एव | १३५ | २८ | पाटी | पाटयि |
| १२२ | ३ | ढया | ढ्या | १३६ | २७ | र्दान | दान |
| १२२ | ६ | पश्य | नश्य | १३७ | २३ | मति | मपि |
| १२३ | ११ | दिका | दिकाः | १३८ | १७ | वर | वस |
| १२४ | २६ | योःषिद्धिः | योषिद्धिः | १३९ | ६ | वृहे | वृह |
| १२५ | १ | मामा | भामा | १३९ | १५ | पात्रोऽस्मि | पात्रमस्मि |
| १२५ | ८ | स्त्राणि | स्त्राणि | १४० | ८ | न्द्रे | न्द्र |
| १२५ | १० | स्थिता | त्थिता | १४० | १८ | लक्ष्मीच | लक्ष्मीश्च |
| १२५ | १८ | स्तात | स्ता | १४० | २६ | शायि | शाय |
| १२६ | ३ | आसाद्यः | आसाद्य | १४१ | १७ | नश्चेरु | निश्चेरुः। |
| १२६ | ११ | ता | त | १४२ | २ | मर्यादां | मर्यादां |
| १२६ | २२ | स्तं | स्ते | १४३ | ३ | भार्त्सिते | भार्त्सिते |
| १२७ | ६ | कृत्स्रं | कृत्स्नं | १४३ | २२ | शन | शनं |
| १२७ | १६ | एवं | एवं | १४४ | १४ | ताम्मि | तामि |
| १२७ | २१ | म्ला | म्लान | | २३ | रेन्हि | रेऽन्हि |
| १२८ | ७ | समर्थ | समर्थ | | २७ | त्यापि | त्यपि |
| १२८ | १४ | भुञ्च | भुंञ्च | १४५ | ८ | राष्ट्राः | राष्ट्रा |
| १२८ | १४ | कण | कर्ण | १४६ | १५ | पुरस्यं | पुरस्थं |
| १२८ | १६ | मन् | म | ,, | २३ | दैव | देव |
| १२८ | २७ | कौसम | कौसुम | १४७ | ११ | सहस्त्र | सहस्र |
| १२९ | १६ | खित्सु | खत्सु | १४८ | १७ | सान्निधिं | सन्निधि |
| १३१ | ११ | घ्यजन | व्यजन | १४९ | १२ | द्रोणि | द्रौणि |
| १३१ | २२ | मत | भत। | १५० | ५ | भोदि | भेदि |
| १३१ | २३ | अथ | सोऽथ | १५१ | १० | गांभीर्य | गांभीर्य |
| १३१ | २५ | लोकत्य | लोक्य | ,, | १८ | धार्त | धार्त |
| १३२ | ८ | घर्त | वर्त | ,, | २३ | कामुकं। | कामुकं |
| १३२ | १३ | मीम | भीम | १५२ | ३ | धनुष्यान् | धनुष्मान् |
| १३२ | २१ | छुत्वा | च्छुत्वा | १५३ | ८ | समेत | समेतो |

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| १५३ | १० | धौत | धौतं |
| ,, | १२ | स्तुंत | स्तुत |
| ,, | १६ | तूर्ण | तूर्णं |
| ,, | २४ | शुल्क | शुक्ल |
| १५४ | ५ | तान् | तूर्णं |
| १५५ | २३ | मुख | मुखा |
| १५५ | २४ | गड | गंड |
| १५७ | १० | पन्ने | पन्नो |
| १५७ | २३ | नदु | नद्दु |
| १५७ | २४ | रचि | चि |
| १५७ | २६ | तद | तद् |
| १५८ | २१ | नाम | माम् । |
| १५९ | २ | हार्द | हार्दे |
| १५९ | २५ | वजनं | वचनं |
| १६० | २ | दिनाते | दिनांते |
| १६० | ६ | दुबलंश्च | दुर्बलश्च |
| १६२ | २ | शुक्रोच्चरिता | ऊर्द्ध्वरेतसो |
| ,, | २ | पीयुष | पीयूष |
| ,, | ११ | किरीठी | किरीटी |
| ,, | २६ | मस्ये | मन्ये |
| १६३ | २ | धूर्ता | धूर्ता: |
| १६४ | ४ | श्वंचु | श्चंचु |
| ,, | ४ | बध: | वध: |
| ,, | १४ | कौस्तुभे: | कौस्तुभे |
| ,, | २८ | जप: | जेय: |
| १६५ | २ | न्यै | स्यै |
| १६६ | ५ | कंपा | कंप |
| १६६ | ११ | विताना | विनिर्मित |
| १६६ | २२ | पुर | पुरस्सर |
| १६७ | २३ | अंका | अंगा |
| १६८ | १९ | मात: | मातर: |
| ,, | २० | वासुकि: | वासुकि |
| १६९ | ११ | चं | च |
| १७० | २ | ।सद्रां | सिद्धां |
| ,, | ४ | ब्रह्मणं: | ब्रह्मण: |
| ,, | ७ | भुमि | मुनि |
| १७० | २३ | र्द्दा | र्दा |
| १७२ | २ | सुत | सुतां |
| १७२ | १० | र्दनो | र्दनो |
| १७२ | १४ | संभर्वं | संभवं |
| ,, | १६ | किरिटि | किरीटि |
| ,, | २१ | द्रष्ट: | दृष्ट: |
| १७३ | ८ | स्त्रा | स्ना |
| १७३ | १४ | र्जुनं | र्जुनं |
| ,, | १५ | शोचे | शोके |
| ,, | २६ | ल्कि | क्लि |
| १७४ | २ | प्रणा | प्रण |
| ,, | ७ | भोजि | भेजिरे |
| ,, | २३ | मनि | मानि |
| १७५ | ४ | निर्गत | निर्गत |
| ,, | २० | स्त्रह | सह |
| १७६ | २ | शैष्य | शैव्य |
| ,, | ८ | राजस्य: | राजस्य |
| ,, | ,, | तिस्त्र | तिस्त्र: |
| ,, | १५ | हित: | हित: स |
| १७८ | ७ | वर्मा | वर्मा |
| १७९ | ४ | द्रोणि | द्रौणि |
| १७९ | १६ | डंड | ड |
| १८० | १७ | ज्वलिता | ज्वलिता: |
| १८१ | २ | पण्डु | पाण्डु |
| ,, | ६ | गुरू | गुरु |
| १८२ | २५ | र्भव | भव |
| १८४ | १२ | त्यकत्तरंय, | त्यकात्तरं |
| ,, | १५ | द्दधा | द्दधान |
| १८५ | २५ | ध्यात्मा | प्यात्मा |
| १८६ | १३ | दिष्ठ | दिष्ट |
| ,, | १५ | नष्ठ: | नष्ट: |
| ,, | १७ | लोय | लोक्य |

| पृ० | प० | अ० | शु० | पृ० | प० | अ० | शु० |
|---|---|---|---|---|---|---|---|
| ,, | २८ | भात | भ्रात | १९३ | १ | लूकी | लूपी |
| १८७ | १७ | सः | स | ,, | १८ | दिष्ठ | दिष्ट |
| १८७ | २२ | दरि | दारि | १९४ | १० | सत्यं | सत्य |
| १८८ | ३ | गंभरिधरि | गंभीरधीर | ,, | २४ | कुर्यांम् | कुर्याम् । |
| १९१ | १२ | राज्ञा | राज्ञां | ,, | २८ | पृण्छामि | पृच्छामि |
| ,, | १६ | तत | ततस् | १९५ | ६ | गागेय | गांगेय |
| १९२ | ६ | द्राद्रौ | द्रौद्रा | ,, | १६ | प्रयलो | प्रयत्नो |
| ,, | ६ | अर्जुन | अर्जुन | ,, | २६ | दुशासन | दुःशासन |

अभावात्स्पष्टवर्णानां योजकस्य प्रमादतः ।
विलम्बाद् दृष्टिदोषाच्च त्रुट्यःसंति पदे पदे ॥

गुणज्ञा दोषमुत्सृज्य सारं गृह्णंतु सर्वदा ।
दोषदर्शनदक्षस्तु लोके दुर्जन एव हि ॥

ग्रंथेऽस्मिन् नवीन कल्पनायै क्वाऽप्यवकाशो न दत्तः । यत एवं कृतेंऽनास्था दोषः समुत्पद्यते । धर्मविषये तु विश्वास एव फलप्रदोऽस्ति । तथा चोक्तं महात्माभिः—

मंत्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥

भावेन वेदाः पूज्यंते भावेनैवेज्यते प्रभुः ।
यज्ञा क्रियंते भावेन गुरुर्भावेन ध्यायते ॥

न देवो विद्यते काष्ठे न पाषाणे न मृण्मये ।
भावे हि विद्यते देवस्तस्माद्भावं नहि त्यजेत् ॥

यस्य धर्मे भवेद्भावः स एवास्तिक उच्यते ।
भावहीनो नरो लोके नास्तिको गण्यते बुधैः ॥

॥ शिवमस्तु ॥

# सूचना

ग्रंथकर्त्तुरन्यान्यपि पुस्तकानि संति। यानिनिम्नलिखित-स्थानेषु समुपलभ्यन्ते ।

| | | |
|---|---|---|
| १ | श्रीसामामृतसिन्धुः—पूर्वभागेतु उपरि सामवेदमंत्रा निम्नभागे च भाषापद्यानि। उत्तरार्धेतु केवलानि भाषाछंदांस्येव । ... ... | २) |
| २ | शिवसतसई—दोहात्मिका । ... ... ... | ।=) |
| ३ | श्रीदुर्गाचरित्रम्—सप्तशतीश्लोकानां श्री तुलसीकृतरामायणवत् पद्यानुवादः। | ।=) |
| ४ | आस्तिकस्मृतिः । ... ... ... | =) |
| ५ | विवाहपद्धतिः—भाषाटीकोपेता। | |
| ६ | विवाहदिग्दर्शनम् । ... ... ... | =) |
| ७ | गोलाभदर्शनम् । ... ... ... | अमूल्यम् |
| ८ | श्रीदुर्वासातृप्तिस्वीकारनाटकम् । ... ... | ।) |
| ९ | भाषाभोजप्रबन्धः । ... ... ... | ।) |
| १० | भाषा-गंगालहरी। ... ... ... | -) |
| ११ | श्रीसूर्यशतकम् । ... ... ... | -) |
| १२ | भाषा—शिवमहिम्न । ... ... ... | -) |
| १३ | भाषा—सत्यनारायण कथा। ... ... ... | -) |
| १४ | श्री दीनाक्रन्दन-स्तोत्रम् । ... ... ... | अमूल्यम् |
| १५ | नीतिवाक्यरत्नावली । ... ... ... | ।) |
| १६ | श्रीदेवदर्शनम् ... ... ... | -) |

निवेदक—

पं० रामदत्त त्रिपाठी

हैड पं० हरबैराड मेमोरियल हाईस्कूल, अजमेर.

श्री बदरिकाश्रम शिवकुराड वा सुदामापोल, अजमेर.